# काव्यसंग्रहः ।



## द्वितीयो भागः

बि, ए, उपाधिधारिणा

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

विरचितया व्याख्यया समलङ्कृतः ।

तृतीयसंस्करणम् ।

कलिकाताराजधान्याम् ।

सरस्वतीयन्त्रे

मुद्रितः ।

इं १८८८ ।

# अशुद्धिशोधनम् ।

## काव्यसंग्रहस्य प्रथमभागे

| पृष्ठायां | पङ्क्तौ | अशुद्धम् | शुद्धम् । |
|---|---|---|---|
| ३१३ | ७ | पिधीयता | विधीयता |
| ३४६ | २ | निक्षेपणाय एव- | निक्षेपणाय पट- |
| | | पटमुद्गतमर्पयन्ती | मुद्गतमुद्वहन्ती |
| ३७४ | ५ | यो यस्य | यत् यस्य |
| ३७७ | ५ | यस्य | यस्य च |
| ४१३ | ६ | फल्गुः स्फुलिङ्गो लघुः | फल्गु स्फुलिङ्गं लघु |
| ४४२ | ५ | तासां | तेषां |
| ४७८ | १ | दहति न | दहति हि |
| ४६० | ४ | धावय | वारय |
| ५१५ | २ | श्रीपतिं नारदादिः- | श्रीपतेर्नारदादिः |
| ५२४ | ३ | एताः | एते |
| ५४५ | ८ | पुच्छ | पिच्छ |
| ५४८ | ६ | यस्मै कश्चिन् | यस्यै कश्चिन् |
| ५७१ | १ | दूरं दूरादपि | दूराद्दूरादपि |
| ५७६ | ६ | धन्य | धन्यम् |
| ६०० | २ | अद्यापि तां- | अद्यापि तत् |
| ६१२ | २ | तेन | येन |
| ६१२ | ४ | परो | परं |

## काव्यसंग्रहस्य द्वितीयभागे

| पृष्ठायां | पङ्क्तौ | अशुद्धम् | शुद्धम् । |
|---|---|---|---|
| २४ | ६ | दैवहतकः | दैवहतकात् |
| २६ | ४ | पुञ्जितशरो | संहितशरो |
| २८ | ८ | वीचितः | वीचितम् |
| ५४ | ५ | सभ्रूभङ्गैः | सभ्रूभङ्गैः |
| ६५ | ७ | सेव्याः | सेव्या |
| ७२ | ५ | सन्ततोऽसौ | सन्त्वेते |
| ७७ | ५ | विम्रम्भाङ्गं | विस्रम्भाद्याः |
| ७८ | १ | आतनोद | आतनोति |

| पृष्ठायां | पङ्क्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ८४ | ४ | किं वाद्योर्मैः | किं वाद्यैस्तैः |
| ८८ | २ | स्ता एव | स्त एव |
| ८८ | ७ | विरसं | सुरसं |
| ९६ | ४ | सनिश्वास | सुनिश्वास |
| १०८ | ८ | कर्पणं | कपणं |
| १२२ | ८ | भूमौशय्या | भूमौशय्यः |
| १३६ | ५ | शौर्य्यं वैरिणि | शौर्य्यं |
| १३७ | ६ | साधुष्टत्तोनां | साधुष्टत्तानां |
| १३१ | ७ | कन्दुकपातेन पतति | कन्दुकपातेनोत् पतति |
| १४२ | ६ | रम्भयन्तः | रम्भवन्तः |
| १४४ | १ | गुणेन | परेण |
| १५१ | २ | भूषणाश्वतुरगा | भूषणाश्वतुरगा |
| १६७ | ५ | पयोनिधि | पयोधि |
| १८२ | ५ | तरङ्गकण | तरङ्गचय |
| १८८ | ६ | किं कोन | किं तेन |
| १९७ | १० | यान्ति | यान्तु |
| २११ | ६ | वधिगतम् | स्वधिगतम् |
| २१४ | २ | शब्दसंघ | सङ्कलब्ध |
| २१४ | ५ | ब्रह्माण्डोमण्डलो | ब्रह्माण्डमण्डलो |
| २२५ | ६ | दश | दश दिशः |
| २३२ | २ | वीतेऽन्धकारे | वीतान्धकारः |
| २३४ | ४ | सैवान्यरूपा | सेवान्यरूपा |
| २४९ | ६ | पक्षपातात् | पक्षवातात् |
| २५० | १ | पक्षपातात् | पक्षवातात् |
| २५६ | ६ | नोद्भूसरा स्वर्धुनी | नोद्भूसरस्वर्धुनी |
| २७१ | ६ | स्वमूर्त्तिम् | स्वमूर्त्तिं |
| २७६ | ४ | स्वनुगुणगणो | स्वनुगुणगुणो |
| २९१ | ६ | काच | कास |

# काव्यसंग्रहः ।

---

## द्वितीयो भागः ।

## अमरुशतकम् ।

ज्याकृष्टिबद्धखटकामुखपाणिपृष्ठ-
प्रेङ्खन्नखांशुचयसंवलितोऽम्बिकायाः ।
त्वां पातु मञ्जरितपल्लवकर्णपूर-
लोभभ्रमद्भ्रमरविभ्रमभृत्कटाक्षः ॥ १ ॥

ज्याकृष्टीति । ज्यायाः मौर्व्याः या आकृष्टिः आकर्षणं कामेन क्रूरं प्रति शरनिक्षेपार्थमिति भावः तया बद्धा जनिता या खटका चक्रित्वं तया मुखे यः पाणिः अर्पित इति भावः तस्य पृष्ठे प्रेङ्खतां स्फुरतां नखांशूनां चयेन निकरेण संवलितः संयुक्तः मञ्जरितः सञ्जातमञ्जरीकः पल्लव एव कर्णपूरः कर्णभूषणं तस्य लोभात् भ्रमतः सञ्चरतः भ्रमरस्य विभ्रमभृत् शोभाशाली अम्बिकायाः गौर्याः कटाक्षः क्रूरं प्रतीति शेषः त्वां पातु रक्षतु । अत्र मञ्जरितपल्लवस्य कर्णपूरत्वेनारोपणात् रूपकं तत्र च भ्रमरस्य लोभात् भ्रान्तिमान् ततश्चान्यस्य विभ्रमं कथमन्यो विभर्त्त्विति साम्यप्रतीतेः निदर्शनेति त्रयाणामङ्गाङ्गिभावः सङ्करः । तदुक्तं दर्पणे । रूपकं रूपितारोपाद् विषये निरपह्नवे इति, साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थितेति, सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् । यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शनेति च । वसन्ततिलकं वृत्तं ज्ञेयं वसन्ततिलकं तभजा जगौ ग इति तल्लक्षणात् ॥ १ ॥

क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोऽंशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण ।
आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः ॥२

आलोलामलकावलीं विलुलितां बिभ्रच्चलत्कुण्डलं
किञ्चिन्मृष्टविशेषकं तनुतरैः स्वेदाम्भसां शीकरैः ।
तन्व्या यत् सुरतान्तताम्रनयनं वक्त्रं रतिव्यत्यये
तत् त्वां पातु चिराय किं हरिहरब्रह्मादिभिर्दैवतैः ॥३॥

क्षिप्त इति । यः क्षिप्तः अङ्गात् पातितः हस्तावलग्नः हस्तयोरवसक्तः प्रसभं बलात् अभिहतोऽपि ताडितोऽपि त्यक्तोऽपीति भावः अंशुकान्तं वसनाञ्चलम् आददानः गृह्णन् केशेषु गृह्णन् अपास्तः निराकृतः चरणयोर्निपतितः संभ्रमेण भयेन मानगौरवेण च नेक्षितः नावलोकितः साश्रुनेत्रोत्पलाभिः सजलनयनोत्पलाभिः त्रिपुरयुवतिभिः असुराङ्गनाभिः आर्द्रापराधः नवकृतापराधः कामीव कान्त इव अवधूतः न्यक्कृतः, स शाम्भवः शराग्निः वः युष्माकं दुरितं पापं दहतु भस्मीकरोतु । उपमालङ्कारः । स्रग्धरावृत्तम् । म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति तल्लक्षणात् ॥ २ ॥

आलोलामिति । आलोलाम् ईषच्चञ्चलां विलुलितां शिथिलीकृताम् अलकावलीं कुन्तलचयं बिभ्रत् चलती दोलायमाने कुण्डले यस्य तथोक्तं तनुतरैः अत्यल्पैः स्वेदाम्भसां घर्मवारीणां शीकरैः कणैः किञ्चित् ईषत् मृष्टम् अवलुप्तं विशेषकं तिलकं यस्य तथोक्तं तन्व्याः कृशाङ्ग्याः रतिव्यत्यये सुरतावसाने यत् सुरतस्य अन्ते तान्ते क्लान्ते कातरे इति भावः नयने यस्य तादृशं वक्त्रं वदनं, तत् त्वां चिराय पातु रक्षतु तादृशं प्रियावदनं त्वं पश्येति भावः हरिहरब्रह्मादिभिः दैवतैः देवैः किं न किमपि प्रयोजनमित्यर्थः । हरिहरब्रह्मादीनामाराधने तादृशं सुखं नेति भावः । शार्दूलविक्रीडितं वृत्तम् ।

अलसवलितैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः
क्षणमभिमुखैर्लज्जालोलैर्निमेषपराङ्मुखैः ।
हृदयनिहितं भावाकूतं वमद्भिरिवेक्षणैः
कथय सुकृती कोऽयं मुग्धे ! त्वयाद्य विलोक्यते ॥ ४ ॥

दत्तोऽस्याः प्रणयस्त्वयैव भवता चेयं चिरं लालिता
दैवादद्य किल त्वमेव कृतवानस्या नवं विप्रियम् ।
मन्युर्दुःसह एष यात्युपशमं नो सान्त्ववादैः स्फुटं
हे निस्त्रिंश ! विमुक्तकण्ठकरुणं तावत् सखी रोदितु ॥ ५ ॥

सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति तल्लक्षणात् ॥ ३ ॥

अलसेति । हे मुग्धे सुन्दरि ! अद्य त्वया अलसवलितैः अलसं वलितं चलनं येषां तैः प्रेम्णा आर्द्रार्द्रैः अतिस्तिमितैरित्यर्थः मुहुः पुनः पुनः मुकुलीकृतैः मुकुलतां नीतैः क्षणम् अभिमुखैः सम्मुखीनैः लज्जया लोलैः चञ्चलैः अन्यतो विसर्पद्भिरिति भावः निमेषपराङ्मुखैः निर्निमेषैरित्यर्थः हृदयनिहितं हृदयस्थितं भावाकूतं प्रणयाभिलाषं वमद्भिरिव प्रकटयद्भिरिव ईक्षणैः नयनैः कोऽयं सुकृती पुण्यवान् जनः विलोक्यते दृश्यते कथय वद । हरिणीवृत्तम् । नसमरसला गः षड्वेदैर्हयैर्हरिणी मतेति तल्लक्षणात् ॥ ४ ॥

दत्त इति । हे निस्त्रिंश ! निर्दय ! अस्याः त्वयैव प्रणयो दत्तः, भवता च इयं चिरं लालिता पालिता, दैवात् अद्य त्वमेव अस्याः नवं विप्रियम् अपराधं कृतवान् । एष मन्युः तव विप्रियजनितः कोप इत्यर्थः दुःसहः, सान्त्ववादैः स्फुटम् उपशमं नो याति न गच्छति, सखी विमुक्तकण्ठकरुणं त्यक्तकण्ठकरुणस्वरं यथा तथा तावत् कियत्क्षणमिति भावः रोदितु । विना रोदनमेष मानो न यातीति त्वं कियत्क्षणं तिष्ठेति नायकं प्रति सख्या उक्तिः । शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥

लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो
निराहाराः सख्यः सततरुदितोच्छूननयनाः ।
परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-
स्तवावस्था चेयं विसृज कठिने ! मानमधुना ॥ ६ ॥

नार्य्यस्तन्वि ! हठाद्धरन्ति रमणं तिष्ठन्ति नो वारिता-
स्तत् किं ताम्यसि किञ्च रोदिषि मुधा तासां प्रियं मा कृथाः
कान्तः केलिरुचिर्युवा सहृदयस्तादृक् पतिः कातरे !
किन्नो कर्कशकर्करैः प्रियशतैराक्रम्य विक्रीयते ॥ ७ ॥

लिखन्निति । हे कठिने ! तव प्राणदयितः जीवितेश्वरः अवनतः अधोमुखः सन् बहिः वाह्यदेशे भूमिं लिखन् आस्ते तिष्ठति । सख्यः वयस्याः निराहाराः तथा सततरुदितेन उच्छूनं स्फीतं नयनं यासां तथोक्ताः तव दुःखादिति भावः पञ्जरशुकैः हसितं पठितञ्च सर्वं परित्यक्तं तवावस्थादर्शनेन शोकादिति भावः तव च इयम् अवस्था इयं आहारादिपरित्यागरूपेति भावः । तस्मात् अधुना इदानीं मानं विसृज त्यज । शिखरिणीवृत्तं, रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणीति तल्लक्षणात् ॥ ६ ॥

नार्य्य इति । हे तन्वि कृशोदरि ! नार्य्यः वारवनिता इति भावः हठात् सहसा रमणं कान्तं हरन्ति आच्छिद्य स्ववशं कुर्व्वन्तीत्यर्थः, वारिताः निषिद्धाः ता इति शेषः नो तिष्ठन्ति । तत् तस्मात् किं कथं ताम्यसि सन्तप्यसे ? किञ्च कथं वा मुधा वृथा रोदिषि, तासां वारनारीणां प्रियं मा कृथाः न कुरु । हे कातरे ! कान्तः प्रियः केलिरुचिः सुरतप्रियः युवा सहृदयः सभ्यः तादृक् पतिः प्रियशतैः बहुभिः प्रियवचनैः आक्रम्य वशीकृत्य विक्रीयते ? इदानीं वेश्याभ्य इति भावः नः अस्माकं कर्कशकर्करैः अतिकठिनैर्वचोभिरिति शेषः इदानीं तव अप्रियत्वात् कठिनत्वेन प्रतीयमानैरिति भावः किम् ? न किमपि

कोपात् कोमललोलबाहुलतिकापाशेन बद्धा दृढं
नीत्वा केलिनिकेतनं दयितया सायं सखीनां पुरः ।
भूयोऽप्येवमिति स्खलन् मृदुगिरा संसूच्य दुश्चेष्टितं
धन्यो हन्यत एव निह्नुतिपरः प्रेयान् रुदत्या हसन् ॥८॥

प्रहरविरतौ मध्ये वाह्नस्ततोऽपि परेऽथवा
किमुत सकले याते वाह्नि प्रिय ! त्वमिहैष्यसि ।
इति दिनशतप्राप्यं देशं प्रियस्य यियासतो
हरति गमनं बालालापैः सबाष्पगलज्जलैः ॥ ९ ॥

प्रयोजनम् । बहुव्यसनाभिरक्त त्वमिदानीं यथेच्छं कुर्विति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ७ ॥

कोपादिति । सायं सन्ध्याकाले सखीनां पुरः अग्रतः कोमला मृद्वी लोला चञ्चला च बाहुलतिका एव पाशः रज्जुः तेन दृढं बद्धा संयम्य दयितामिति भावः केलिनिकेतनं क्रीडामन्दिरं नीत्वा हसन् निह्नुतिपरः न मयैवं कृतमिति स्वकृतविप्रियापह्नवकृत् धन्यः पुण्यवान् प्रेयान् कान्तः दयितया कान्तया कोपात् स्खलन्ती मृद्वी गीर्वाक् यस्याः तथाभूतया रुदत्या बाला भूयः पुनरपि एवं त्वया कृतमिति शेषः इति दुश्चेष्टितं दुराचारं कान्तस्येति भावः संसूच्य प्रकाश्य हन्यत एव ताड्यत एव । शार्दूलविक्रीडितं वृत्तम् ॥ ८ ॥

प्रहरेति । हे प्रिय ! त्वं प्रहरविरतौ एकयामावसाने, अह्नः दिवसस्य मध्ये मध्याह्नसमये वा, अथवा ततः तस्मात् मध्याह्नादपि परे समये इति शेषः किमुत सकले अह्नि दिवसे याते गते वा इह एष्यसि आगमिष्यसि इति इत्थं सबाष्पं गलन्ति जलानि अश्रूणि येषु तैः आलापैः बाला नवोढा कान्ता दिनशतप्राप्यं देशं यियासतः गन्तुमिच्छतः प्रियस्य गमनं हरति निवारयति ईदृशे आलापे कथं गम्यते इति भावः । हरिणीवृत्तम् ॥ ९ ॥

यातः किन्न मिलन्ति सुन्दरि ! पुनश्चिन्ता त्वया मत्कृते
नो कार्या नितरां कृशासि कथयत्येवं सवाष्पे मयि ।
लज्जामन्थरतारकेण निपतद्धाराश्रुणा चक्षुषा
दृष्ट्वा मां हसितेन भाविमरणोत्साहस्तया सूचितः ॥ १० ॥
धीरं वारिधरस्य वारि किरतः श्रुत्वा निशीथे ध्वनिं
दीर्घोच्छ्वासमुदश्रुणा विरहिणीं बालां चिरं ध्यायता ।
अध्वन्येन विमुक्तकण्ठमखिलां रात्रिं तथा क्रन्दितं
ग्रामीणैर्व्रजतो जनस्य वसतिर्ग्रामे निषिद्धा यथा ॥ ११ ॥

यातः इति । हे सुन्दरि ! यातः गताः विदेशमिति शेषः किं न पुनर्मिलन्ति न पुनः सङ्गच्छन्ते ? अपितु मिलन्त्येवेत्यर्थः । तस्मात् त्वया मत्कृते मदर्थं चिन्ता न कार्या, नितरां अत्यर्थं कृशा क्षीणा असि मद्भावनयेति भावः सवाष्पे साश्रुनेत्रे मयि एवं कथयति सति तया कान्तया लज्जया मन्थरा जड़ा तारका यस्य तादृशेन निपतन्ती धारा यस्य तादृशं अश्रु यत्र तथाभूतेन चक्षुषा मां दृष्ट्वा विलोक्य हसितेन भाविनि मरणे उत्साहः उद्यमः सूचितः प्रकटितः । कथं त्वया न गतमिति वादिनं कान्तायं प्रति कस्यचिदुक्तिरियम् । शार्दूलविक्रीडितं वृत्तम् ॥ १० ॥

धीरमिति । निशीथे अर्द्धरात्रे, अर्द्धरात्रनिशीथौ द्वावित्यमरः । वारि किरतः वर्षतः वारिधरस्य मेघस्य धीरं गम्भीरं ध्वनिं श्रुत्वा विरहिणीं बालां मुग्धां कान्तां चिरं बहुक्षणं ध्यायता चिन्तयता अतएव दीर्घः उच्छ्वासः निःश्वासो यत्र तत् यथा तथा उदश्रुणा उद्गताश्रुणा अध्वन्येन पथिकेन केनचित् कस्मिन्नपि ग्रामे कृताश्रये-णेति भावः अखिलां समस्तां रात्रिं विमुक्तकण्ठम् उच्चैरित्यर्थः तथा क्रन्दितं रुदितं यथा ग्रामीणैः तद्ग्रामवासिभिरित्यर्थः व्रजतः गच्छतः पथिकस्येति भावः जनस्य ग्रामे तस्मिन्निति शेषः वसतिः निषिद्धा ।

कथमपि सखि ! क्रीडाकोपाद् व्रजेति मयोदिते
कठिनहृदयस्त्यक्त्वा शय्यां बलाद्गत एव सः ।
इति सरभसं ध्वस्तप्रेम्णि व्यपेतघृणे जने
पुनरपि हतव्रीडं चेतः प्रयाति करोमि किम् ॥ १२ ॥

दम्पत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वच-
स्तत् प्रातर्गुरुसन्निधौ निगदतस्तस्योपहारं वधूः ।
कर्णालङ्कृतिपद्मरागशकलं विन्यस्य चञ्चूपुटे
व्रीडार्ता प्रकरोति दाडिमफलव्याजेन वाग्बन्धनम् ॥१३॥

अध्वन्यानां रोदनेनास्माकं निद्राव्याघातः स्यादिति तद्ग्रामवासिभिः अध्वन्यानामाश्रयो न दीयते इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ११ ॥

कथमिति । हे सखि ! कथमपि कुतश्चिदपि क्रीडाकोपात् सुरतापराधादिति भावः व्रज गच्छ दूरीभवेति भावः इति मया उदिते उक्ते सति कठिनहृदयः निर्दयचित्तः सः कान्त इति शेषः शय्यां त्यक्त्वा बलात् बलमाश्रित्येत्यर्थः गत एव । इतोऽयं व्यपेतघृणे निर्घृणे निर्दये इत्यर्थः सरभसं सवेगं, रभसो वेगहर्षयोरित्यमरः; ध्वस्तप्रेम्णि त्यक्तप्रणये जने हतव्रीडं निर्लज्ज चेतः पुनरपि प्रयाति गच्छति किं करोमि ? हरिणीवृत्तम् ॥ १२ ॥

दम्पत्योरिति । गृहशुकेन गृहपालितशुकपक्षिणा निशि जल्पतोः अन्योन्यमालपतोः दम्पत्योः स्त्रीपुंसयोः यत् वचः आकर्णितं श्रुतं वधूर्जाया व्रीडार्ता लज्जातुरा सती गुरूणां सन्निधौ प्रातः तत् वचः निगदतः वदतः तस्य शुकस्य चञ्चूपुटे कर्णालङ्कृतिः कर्णभूषणं पद्मरागशकलं दाडिमफलव्याजेन दाडिमफलमिदमिति उपहारं विन्यस्य दत्त्वा वाग्बन्धनं प्रकरोति प्रकर्षेण वाचं बध्नातीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ १३ ॥

अज्ञानेन पराङ्मुखीं परिभवादाश्लिष्य मां दुःखितां
किं लब्धं चटुल! त्वयेह नयता सौभाग्यमेतां दशाम्।
पश्यैतद्दयिताकुचव्यतिकरोन्मृष्टाङ्गरागारुणं
वक्षस्ते मलतैलपङ्कशवलैर्वेणीपदैरङ्कितम्॥ १४॥

एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद् दूरत-
स्ताम्बूलानयनच्छलेन रभसाश्लेषोऽपि संविघ्नितः।
आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः॥१५॥

अज्ञानेनेति। हे चटुल! धूर्त! परिभवात् अवमाननात् पराङ्मुखीं मुखं परावृत्य स्थितामित्यर्थः दुःखितां माम् अज्ञानेन ममेति भावः आश्लिष्य आलिङ्ग्य एतां दशां दुर्दशामिति यावत् सौभाग्यं नयता प्रापयता त्वया इह मदालिङ्गने किं सुखमिति शेषः लब्धं प्राप्तम्? एतत् दयितायाः प्रियायाः मत्सपत्न्याः वाराङ्गनाया वा कुचव्यतिकरेण स्तनसङ्गेन उन्मृष्टः अवलुप्तः यः अङ्गरागः तदीय इति भावः तेन अरुणं रक्तम् अलङ्कृतमिति भावः ते तव वक्षः मलतैलपङ्कशवलैः मलिनतैलरसेन चित्रितैः मलिनतैलाक्तैरिति यावत् वेणीपदैः केशस्थानैः केशसङ्गैरिति यावत् अङ्कितं चिह्नितं पश्य अवलोकय। खण्डितायाः उक्तिरियम्। शार्दूलविक्रीडितं वृत्तम् ॥ १४ ॥

एकत्रेति। दूरतः दूरात् प्रत्युद्गमात् आसनादुत्थानादित्यर्थः एकत्र एकस्मिन् स्थाने आसने एकस्मिन्निति भावः संस्थितिः उपवेशनं परिहृता त्यक्ता, ताम्बूलस्य आनयनच्छलेन रभसाश्लेषः सहसालिङ्गनमपि संविघ्नितः परिहृत इति यावत् अन्तिके समीपे परिजनं दासादिकं व्यापारयन्त्या प्रेषयन्त्या सत्या आलापः अपि न मिश्रितः अतः चतुरया नार्या उपचारतः वाह्यपरिचर्ययेत्यर्थः कान्तं प्रति कोपः कृतार्थीकृतः सफलीकृतः। शार्दूलविक्रीडितं वृत्तम् ॥ १५ ॥

दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादराद्
एकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः ।
ईषद्वक्रिमकन्धरः सपुलकः प्रेमोल्लसन्मानसाम्
अन्तर्हासलसत्कपोलफलकां धूर्त्तोऽपरां चुम्बति ॥ १६ ॥

चरणपतनप्रत्याख्यानात् प्रसादपराङ्मुखे
निभृतकितवाचारेत्युक्त्वा रुषा परुषीकृते ।
व्रजति रमणे निःश्वस्योच्चैः स्तनस्थितहस्तया
नयनसलिलच्छन्ना दृष्टिः सखीषु निवेशिता ॥ १७ ॥

दृष्ट्वेति । धूर्त्तः कश्चिदिति शेषः एकस्मिन् आसने संस्थिते आसीने प्रियतमे कान्ते दृष्ट्वा पश्चात् पृष्ठभागेनोपेत्य उपगम्य आदरात् एकस्याः कान्तायाः नयने पिधाय हस्ताभ्यामाच्छाद्येत्यर्थः विहितं कृत क्रीडायाः अनुबन्धे अनुसरणे छलं येन तथाभूतः ईषत् अल्पं वक्रिमा वक्रत्वं यस्याः तथाभूता कन्धरा ग्रीवा यस्य सपुलकः सपुलकः रोमाञ्चिताङ्गः सन् प्रेम्णा उल्लसत् विकसत् मानसं यस्याः तथाभूताम् अन्तर्हासेन लसत् विकसत् कपोलफलकं गण्डभागः यस्यास्तादृशीम् अपरां कान्तां चुम्बति । शार्दूलविक्रीडितं वृत्तम् ॥ १६ ॥

चरणेति । हे निभृतकितवाचार ! गूढकपटाचार ! इति उक्त्वा चरणयोः पतनं तस्यापि प्रत्याख्यानं निराकरणं तस्मात् हेतोः रुषा कोपेन परुषीकृते कठिनीकृते अतएव प्रसादपराङ्मुखे अनुग्रहविमुखे इत्यर्थः रमणे कान्ते व्रजति गच्छति सति स्तने स्थितः हस्तः यस्याः तथाभूतया सत्या कान्तयेति शेषः उच्चैः निःश्वस्य सखीषु नयनसलिलैः अम्बुभिः छन्ना दृष्टिः निवेशिता निक्षिप्ता । स्तनस्थितहस्तत्वेनाहं युवतिः, युवत्याश्च मम कान्तविरहो दुःसह इत्याशयेन सख्याः निवार्य्यतामयमिति सूचितमिति भावः । हरिणीवृत्तम् ॥ १७ ॥

काञ्च्या गाढतरावरुद्धवसनप्रान्ता किमर्थं पुन-
र्मुग्धाक्षी स्वपितीति तत्परिजनं स्वैरं प्रिये पृच्छति ।
मातः ! स्वप्नुमपीह वारयति मामित्याहितक्रोधया
पर्यस्य स्वपिति च्छलेन शयने दत्तोऽवकाशस्तथा ॥ १८ ॥
एकस्मिन् शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
रन्योन्यस्य हृदि स्थितेऽप्यनुनये संरक्षतोर्गौरवम् ।
दम्पत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः सहासरभसं व्यासक्तकण्ठग्रहः ॥१९॥

काञ्च्येति । मुग्धाक्षी वामनयना इयं काञ्च्या रशनया गाढ-तरं दृढतरम् अवरुद्धं संरुद्धं कथमपि शिथिलयितुं न पार्य्यते इति धियेति भावः वसनप्रान्तं वस्त्राञ्चलं यया तथाभूता सती किमर्थं पुनः स्वपिति निद्रातीति प्रिये कान्ते स्वैरं मन्दं यथा तथा तस्याः परिजनं दास्यादिकमित्यर्थः पृच्छति सति, मातः ! इह स्वप्नुमपि मां वारयति निषेधति इति आहितक्रोधया कृतकोपया तया कान्तया पर्य्यस्य विमुखीभूयेत्यर्थः छलेन स्वपिमि इत्युक्त्वा शयने शय्यायाम् अवकाशः स्थानं दत्तः कान्तायेति शेषः । शार्दूलविक्रीडितं वृत्तम् ॥ १८ ॥

एकस्मिन्निति । एकस्मिन् शयने शय्यायां पराङ्मुखतया वैमुख्येन वीतोत्तरं प्रत्युत्तररहितं यथा तथा ताम्यतोः क्लिश्यतोः अन्योन्यस्य परस्परस्य अनुनये अनुनयेच्छायामिति यावत् हृदि स्थितेऽपि गौरवं मानं संरक्षतोः दम्पत्योः शनकैः मन्दं यथा तथा अपाङ्गवलनात् नेत्रान्तसञ्चालनात् मिश्रीभवत् सम्मिलत् चक्षुः ययोः तथाभूतयोः सतोः सहासरभसं सस्मितहर्षं यथा तथा व्यासक्तः संसक्तः कण्ठग्रहः कण्ठालिङ्गनं यत्र तथाभूतः मानकलिः प्रणय-कलहः भग्नः अवसितः गत इति यावत् । शार्दूलविक्रीडितं वृत्तम् ॥१९॥

पश्यामो मयि किं प्रपद्यत इति स्थैर्य्यं मयालम्बितं
किं मामालपतीत्ययं खलु शठः कोपस्तयाप्याश्रितः ।
इत्यन्योन्यविलक्षदृष्टिचतुरे तस्मिन्नवस्थान्तरे
सव्याजं हसितं मया धृतिहरो बाष्पस्तु मुक्तस्तया ॥२०॥

परिम्लाने माने मुखशशिनि तस्याः करधृते
मयि क्षीणोपाये प्रणिपतनमात्रैकशरणे ।
तया पक्ष्मप्रान्तव्रजपुटनिरुद्धेन सहसा
प्रसादो बाष्पेण स्तनतटविशीर्णेन कथितः ॥ २१ ॥

पश्याम इति । मयि किं कथं इयं प्रपद्यते आचरति तत् पश्यामः इति धियेति शेषः मया स्थैर्य्यं मौनमिति भावः आलम्बितं गृहीतम् । तयापि अयं शठः धूर्त्तः मां किम् आलपतीति कोपः आश्रितः अवलम्बितः खलु । इतीत्थम् अन्योन्यस्मिन् विलक्षा सलज्जा या दृष्टिः तया चतुरे सुभगे तस्मिन् अवस्थान्तरे अवसरे इत्यर्थः मया सव्याजं सच्छलं किमपि छलमाश्रित्येत्यर्थः हसितं, तया तु धृतिहरः धैर्य्यध्वंसी बाष्पः अश्रुजलं मुक्तः । तथा रुदितं येन मम धैर्य्यच्युतिः स्यादिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ २० ॥

परिम्लाने इति । माने प्रणयकोपे परिम्लाने परितः म्लानिं गते विध्वस्ते इति भावः तस्याः मुखशशिनि वदनचन्द्रे करधृते हस्तनिहिते, क्षीणाः क्षयं प्राप्ताः उपायाः सामादयः यस्य तादृशे । उक्तञ्च दर्पणे । साम भेदोऽथ दानञ्च नत्युपेक्षे रसान्तरम् । तद्भङ्गाय पतिः कुर्य्यात् षडुपायानिति क्रमात् । तत्र प्रियवचः सामेत्यादि । प्रणिपतनमात्र पादयोः पतनमेव एकं शरणं गतिः यस्य तथाभूते चरणयोः प्रणते सतीति यावत् तया कान्तया सहसा पक्ष्मणां नेत्रलोम्नां प्रान्तव्रजाः अग्रसमूहाः एव पुटानि आवरणानि तैः निरुद्धेन अवरुद्ध्य निःसृतेनेति भावः स्तनतटयोः विशीर्णेन चूर्णितेन स्तनयोः काठिन्यादि-

तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते ।
इत्युक्ते क्व तदित्युदीर्य सहसा तत् सम्प्रमार्ष्टुं मया
साश्लिष्टा रभसेन तत्सुखवशात् तन्व्यापि तद्विस्मृतम् ॥ २२ ॥
त्वं मुग्धाक्षि ! विनैव कञ्चुलिकया धत्से मनोहारिणीं
लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृशि ।
शय्योपान्तनिविष्टसस्मितसखीनेत्रोत्सवानन्दितो
निर्यातः शनकैरलीकवचनोपन्यासमालीजनः ॥ २३ ॥

शयादिति भावः वाग्मेव अमुष्या प्रसादः प्रवच्नता कथितः सूचितः ।
शिखरिणीवृत्तम् ॥ २१ ॥

तस्या इति । तस्याः मत्सपत्न्याः परकीयाया वा सान्द्रं घनं विलेपनम् अङ्गरागो ययोः तथाभूतयोः स्तनतटयोः प्रश्लेषेण आलिङ्गनेन मुद्राङ्कितं मुद्रितमित्यर्थः वक्षः चरणयोः आनतिव्यतिकरव्याजेन प्रणतिक्रियाच्छलेन किं कथं गोपाय्यते ? इति उक्ते सति मया क्व तत् इत्युदीर्य उक्त्वा सहसा तत् चिह्नं सम्प्रमार्ष्टुम् अपनेतुं रभसेन वेगेन सा आश्लिष्टा आलिङ्गिता, तन्व्यापि तया तत्सुखवशात् तदालिङ्गनानन्दवशात् तत् चिह्नं विस्मृतम् । शार्दूलविक्रीडितं वृत्तम् ॥ २२ ॥

त्वमिति । हे मुग्धाक्षि ! चारुलोचने ! त्वं कञ्चुलिकया स्तनावरणविशेषेण विनैव मनोहारिणीं लक्ष्मीं श्रियं धत्से धारयसि इति अभिधायिनि वादिनि प्रियतमे तस्याः कञ्चुलिकायाः वीटिकां ग्रान्तं संस्पृशतीति तथोक्ते सति निष्कासनार्थमिति भावः शय्यायाः उपान्ते निविष्टायाः स्थितायाः सस्मितमुख्याः कान्ताया इति भावः नेत्रोत्सवेन नयनसङ्केतेन आनन्दितः हृष्टः आलीजनः सखीगणः शनकैः क्रमेण अलीकवचनानां मृषावचनानाम् उपन्यासः प्रस्तावः यस्मिन् तत् यथा तथा निर्य्यातः निर्गतः वासभवनादिति शेषः ।

भ्रूभङ्गे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते
कार्कश्यं गमितेऽपि चेतसि तनू रोमाञ्चमालम्बते ।
रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते
दृष्टे निर्वहणं भविष्यति कथं मानस्य तस्मिन् जने ॥ २४ ॥
कान्ते ! कत्यपि वासराणि गमय त्वं मीलयित्वा दृशौ
स्वस्ति स्वस्ति निमीलयामि नयने यावन्न शून्या दिशः ।
आयाता वयमागमिष्यसि सुहृद्वर्गस्य भाग्योदयैः
सन्देशो वद कस्तवाभिलषितस्तीर्थेषु तोयाञ्जलिः ॥२५॥

सुरतप्रक्रमोऽयमिति बुद्ध्वा प्रस्विन्न इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ २३ ॥

भ्रूभङ्ग इति । भ्रुवोर्भङ्गे कौटिल्ये रचितेऽपि दृष्टिः अधिकं सोत्कण्ठं औत्सुक्यसहितं यथा तथा उद्वीक्षते सतृष्णम् अवलोकयति । चेतसि मनसि कार्कश्यं काठिन्यं गमिते नीतेऽपि तनुः शरीरं रोमाञ्चम् आलम्बते आश्रयति । वाचि रुद्धायामपि संयतायामपि इदं दग्धाननं सस्मितं जायते । अतः तस्मिन् जने दृष्टे सति मानस्य निर्वहणं रक्षणमिति यावत् कथं केन प्रकारेण भविष्यति ? कथं त्वया मानो न कृत इतिवादिनीं सखीं प्रति नायिकाया उक्तिरियम् । शार्दूलविक्रीडितं वृत्तम् ॥ २४ ॥

कान्ते इति । हे कान्ते ! त्वं दृशौ नयने मीलयित्वा मुद्रयित्वा कति अपि वासराणि दिवसान् गमय अतिवाहय, स्वस्ति स्वस्ति शुभमस्तु शुभमस्तु, यावत् दिशः शून्याः न भवन्तीति शेषः, तावत् नयने निमीलयामि, यदा तवादर्शनेन दिक् शून्येव भविष्यति तदैव नयने निमीलयामि निरतिशयं मीलयामीत्यर्थः मरणेनेति भावः । वयम् आयाताः आगतप्राया एव । सुहृद्वर्गस्य भाग्योदयैः सहेति शेषः आगमिष्यसि तवागमनं सुहृदां सौभाग्याय भविष्यतीत्यर्थः । आगमिष्यतीति पाठे

सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम् ।
स्वच्छैरच्छकपोलमूलगलितैः पर्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलालकैरम्बुभिः ॥ २६ ॥
भवतु विदितं भव्यालापैरलं खलु गम्यतां
तनुरपि न ते दोषोऽस्माकं विधिस्तु पराङ्मुखः ।
तव यदि तथाभूतं प्रेम प्रपन्नमिमां दशां
प्रकृतितरले का नः पीड़ा गते हतजीविते ॥ २७ ॥

भवानिति कर्तृपदम् । तव अभिलषितः इष्टः सन्देशः वाचिकं कः ? वद कथय । तीर्थेषु गङ्गादिषु तोयाञ्जलिः तर्पणजलं मम अभिलषित इति शेषः, तव विरहे प्राणान् त्यजामीति भावः । युवयोरुक्तिप्रत्युक्ती । शार्दूलविक्रीड़ितं वृत्तम् ॥ २५ ॥

सेति । सा बाला पत्युः स्वामिनः प्रथमापराधसमये सखीनाम् उपदेशम् वा सम्यक् उपदेशं विना सविभ्रमा सविलासा अङ्गवलना अङ्गचालनं वक्रोक्तिसंसूचनं वक्रवचनप्रकटनं नो जानाति, केवलम् अच्छात् निर्मलात् कपोलमूलात् गलितैः विच्युतैः लुठन्तः लोलाः चञ्चलाः अलकाः चूर्णकुन्तलाः येषु तादृशैः स्वच्छैः निर्मलैः अम्बुभिः पर्य्यस्ते परितः समन्ततः आवृते नेत्रोत्पले यस्याः तादृशी सती रोदिति । शार्दूलविक्रीड़ितं वृत्तम् ॥ २६ ॥

भवत्विति । भवतु यदिति शेषः, विदितं ज्ञातं, भव्यालापैः शिष्टालापैः अलं न प्रयोजनमित्यर्थः, गम्यतां खलु गम्यतामेव त्वयेति शेषः, ते तव तनुरपि अल्पोऽपि दोषः न अस्तीति शेषः, विधिस्तु दैवमेव अस्माकं पराङ्मुखः विमुखः । तव तथाभूतं निरतिशयमिति भावः प्रेम यदि इमां दशां प्रपन्नं प्राप्तं, तदा प्रकृतितरले स्वभाव-

उरसि निहितस्तारो हारः कृता जघने घने
कलकलवती काञ्ची पादौ क्वणन्मणिनूपुरौ ।
प्रियमभिसरस्येवं मुग्धे ! समाहतडिण्डिमा
यदि किमधिकत्रासोत्कम्पं दिशः समुदीक्षसे ॥ २८ ॥

प्रातः प्रातरुपागतेन जनिता निर्निद्रता चक्षुषो-
र्मन्दायां मयि गौरवव्यपगमादुत्पादितं लाघवम् ।
किं मुग्धेन मया कृतं रमण ! धीर्मुक्ता त्वया गम्यतां
दुःस्थं तिष्ठसि यच्च पथ्यमधुना कर्तास्मि तत् श्रोष्यसि॥२९॥

चपले नः अस्माकं हृतजीविते गते का पीड़ा ? नैव काचित् पीड़ेत्यर्थः । प्राणान् त्यक्ष्यामीति भावः । हरिणीवृत्तम् ॥ २७ ॥

उरसीति । हे मुग्धे ! सुन्दरि ! उरसि वक्षसि तारो महान् हारः निहितः धृतः । घने सान्द्रे पूर्णे इति यावत् जघने कटि-पुरोभागे कलकलवती क्वणन्तीति भावः काञ्ची रशना कृता धृता । पादौ चरणौ क्वणन् स्वनन् मणिनूपुरः ययोः तादृशौ । यदि एवम् इत्थं समाहतः सन्ताड़ितः डिण्डिमः वाद्यभेदो यथा तथाभूता सती प्रियं कान्तम् अभिसरसि अभिगच्छसि, तदा किं कथम् अधिकः त्रासेन भयेन उत्कम्पः यस्मिन् तत् यथा तथा दिशः समुदीक्षसे सम्यक् अवलोकयसि ? । हरिणीवृत्तम् ॥ २८ ॥

प्रातरिति । प्रातः प्रातः प्रतिप्रत्यूषम् उपागतेन उपस्थितेन अन्यासक्तेन रजनीमतिवाह्येति भावः चक्षुषोः निर्निद्रता निद्रा-राहित्यं जनिता उत्पादिता रजन्यां कदा प्रियो मे आयातीति धिया सर्वासु रात्रिषु मया जागरित्वैव कालो नीयते इति भावः । मन्दायां दुर्भगायां मयि गौरवस्य व्यपगमात् भ्रंशात् लाघवम् उत्-पादितम् । मुग्धेन मूढ़ेन मया किं कृतं तव अप्रियमिति शेषः । हे रमण ! हे कान्त ! त्वया धीर्बुद्धिः मुक्ता त्यक्ता निर्बोधोऽसि

सा बाला वयमप्रगल्भमनसः, सा स्त्री वयं कातराः,
सा पीनोन्नतिमत् पयोधरयुगं धत्ते, सखेदा वयम् ।
साक्रान्ता जघनस्थलेन गुरुणा, गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम् ॥ ३० ॥
प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः ।

साम्प्रतमिति भावः, तत् गम्यतां त्वया न मे प्रयोजनमिति भावः । दुःस्थं यथा तथा तिष्ठसि मां विनेति शेषः । अधुना यत् पथ्यं हितं ममेति शेषः तत् कर्त्तास्मि करिष्यामि तच्च श्रोष्यसि । त्वां विनाहं प्राणान् त्यक्ष्यामीति त्वया श्रोतव्यमिति भावः । दम्पत्यो- रुक्तिप्रत्युक्ती । शार्दूलविक्रीडितं वृत्तम् ॥ २९ ॥

सेति । सा कान्ता बाला मुग्धा, वयम् अप्रगल्भमनसः विमुग्ध- चित्ताः, बालाया एव विमुग्धतोचिता अस्माकन्तु तद्वैपरीत्यमुचित- मेवेति भावः । सा स्त्री, वयं कातराः व्याकुलाः, स्त्रीणामेव कातर्य्यं स्वाभाविकं पुंसान्तु तदन्यथेति स्थितौ अस्माकं तद्वैपरीत्यमिति भावः । सा पीनोन्नतिमत् पीवरमुन्नतञ्च पयोधरयुगं स्तनयुगलं धत्ते, वयन्तु सखेदाः आर्त्ताः, गुरुवस्तुधारिण्या मेव खेद उचित इति भावः । सा गुरुणा दुर्वहेण जघनस्थलेन आक्रान्ता, वयन्तु गन्तुं न शक्ताः, गुरुभारवाहिनामेव गमने असामर्थ्यमिति भावः । अतः अन्यजना- श्रितैः दोषैः अपटवः अक्षमाः जाता इति अद्भुतम् आश्चर्य्यम् । अत्रैकस्मिन् कारणस्यापरस्मिन् कार्य्यस्य सद्भावात् असङ्गतिरलङ्कारः । तदुक्तं दर्पणे, कार्य्यकारणयोर्भिन्नदेशतायामसङ्गतिरिति । शार्दू- लविक्रीडितं वृत्तम् । सखायं प्रति कस्यचिदुक्तिः ॥ ३० ॥

प्रस्थानमिति । प्रियतमे कान्ते यातुं देशान्तरं गन्तुमित्यर्थः निश्चितचेतसि निर्द्धारितमनसि सति वलयैः करभूषणविशेषैः प्रस्थानं

यातुं निश्चितचेतसि प्रियतमे सर्वैः समं प्रस्थिता
गन्तव्ये सति जीवित ! प्रियसुहृत्सार्थः किमु त्यज्यते ॥२१॥

सन्दष्टाधरपल्लवा सचकितं हस्ताग्रमाधुन्वती
मामामुञ्च शठेति कोपवचनैरानर्तितभ्रूलता ।
शीत्काराञ्चितलोचना सरभसं यैश्चुम्बिता मानिनी
प्राप्तं तैरमृतं मुधैव मथितो मूढैः सुरैः सागरः ॥ २२ ॥

क्षतं चिन्तया शरीरकार्श्यात् हस्तात् वलयभ्रंश इति भावः, प्रिय-सखैः सततसङ्गित्वात् प्रियबन्धुभिरिति भावः अस्रैः बाष्पैः अजस्रं सततं गतं पतितं चलितमिति यावत्, धृत्या सन्तोषेण क्षणमपि न आसितं नोपविष्टं न स्थितमित्यर्थः, चित्तेन मनसा पुरः अग्रतः प्रियतमस्येति भावः गन्तुं व्यवसितम् उद्यतम् । (किं बहुना) सर्वैः मदाश्रिता इति भावः समं युगपत् प्रियेण सह वा प्रस्थिताः चलिताः । हे जीवित ! गन्तव्ये सति यदा गमनं तव कस्मिन्नपि समये निश्चितं तदेति भावः प्रियसुहृदां सार्थः समूहः पूर्वोक्तरूप इति भावः किन्तु कथं त्यज्यते ? तत्सङ्गित्यागो नोचित इति त्वमपि शीघ्रमेतैः सह गच्छेति भावः । शार्दूलविक्रीडितं वृत्तम् । भाविभर्तृ-प्रवासमाशङ्कमानायाः कस्याश्चिदुक्तिः ॥ २१ ॥

सन्दष्टेति । सचकितं सशङ्कं प्रियस्य सहसा चुम्बनविधेरिति भावः सन्दष्टः अधरपल्लवः यया तादृशी हस्ताग्रम् आधुन्वती कम्पयन्ती हे शठ ! माम् आमुञ्च सम्यक् त्यज इति कोपवचनैः आनर्तिता सञ्चालिता भ्रूलता यया तथाविधा शीत्कारेण अञ्चिते शोभिते लोचने यस्याः तथाविधा मानिनी मानवती कान्ता यैः सरभसं सवेगं चुम्बिता, तैः अमृतं प्राप्तम् आस्वादितम् । मूढैः निर्बोधैः सुरैः देवैः सागरः मुधैव वृथैव मथितः विलोडितः अमृतलाभाशयेति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ २२ ॥

सुप्तोऽयं सखि ! सुप्यतामिति गताः सख्यस्ततोऽनन्तरं
प्रेमावासितया मया सरलया न्यस्तं मुखं तन्मुखे।
ज्ञातेऽलीकनिमीलने नयनयोर्धूर्तस्य रोमाञ्चतो
लज्जासीन्मम तेन साप्यपहृता तत्कालयोग्यैः क्रमैः ॥२३॥

कोपो यत्र भ्रुकुटिरचना निग्रहो यत्र मौनं
यत्रान्योन्यस्मितमनुनयो यत्र दृष्टिः प्रसादः।
तस्य प्रेम्णस्तदिदमधुना वैषमं पश्य जातं
त्वं पादान्ते लुठसि न हि मे मन्युमोक्षः खलायाः ॥२४॥

सुप्त इति। हे सखि ! अयं कान्त इति शेषः सुप्तः निद्रितः, सुप्यतां त्वयेति शेषः इति उक्त्वेति शेषः सख्यः गताः प्रस्थिताः। ततः सखीनां गमनात् अनन्तरं परं प्रेमावासितया प्रेमपूर्णया सरलया कपटाकपटधर्ममजानत्येति भावः मया तस्य मुखे मुखं न्यस्तम् अर्पितम्। ततः धूर्त्तस्य कान्तस्य लोमाञ्चतः मत्स्पर्शेनेति भावः नयनयोः अलीकनिमीलने कपटमुद्रणे ज्ञाते सति मम लज्जा आसीत् तेन कान्तेन तत्कालयोग्यैः तत्कालोचितैः क्रमैः व्यापारैः आश्लेषादिभिरिति भावः सापि लज्जापि अपहृता चोरिता अविद्यमानेति यावत्। शार्दूलविक्रीडितं वृत्तम्। प्रातर्नायिकायाः कामपि प्रति रात्रिवृत्तकथनमिदम् ॥ २३ ॥

कोप इति। यत्र प्रेम्णि भ्रुकुटिरचना न त्वन्यकृपाचरणमिति भावः कोपः कोपकार्य्यमित्यर्थः, यत्र प्रेम्णि मौनं तूष्णीम्भावः निग्रहः ताडनं, यत्र प्रेम्णि अन्योन्यस्य परस्परस्य स्मितं मन्दहसितम् अनुनयः सान्त्वनं, यत्र प्रेम्णि दृष्टिः अवलोकनं प्रसादः प्रसन्नता, तस्य प्रेम्णः अधुना इदं वैषमं विकृतिः जातं तत् पश्य अवलोकय, त्वं पादान्ते चरणप्रान्ते लुठसि लुण्ठनं करोषि, किन्तु

सुतनु ! जहिहि कोपं पश्य पादानतं मां
न खलु तव कदाचित् कोप एवंविधोऽभूत् ।
इति निगदति नाथे तिर्य्यगामीलिताक्ष्या
नयनजलमनल्पं मुक्तमुक्तं न किञ्चित् ॥ २५ ॥

गाढ़ालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलत्-श्रीमन्नितम्बाम्बरा ।
मा मा मानद ! माति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किन्नु मृता नु किं मनसि मे लीना विलीना नु किम् २६

खलायाः दुष्टायाः मे मन्युमोक्षः कोपपरिहारः न हि नैव भवतीति शेषः । मन्दाक्रान्तावृत्तम् । मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ गौ ययुग्ममिति तल्लक्षणात् ॥ २४ ॥

सुतन्विति । हे सुतनु ! सुन्दरि ! कोपं जहिहि त्यज, मां पादानतं पश्य, कदाचित् तव एवंविधः कोपः न खलु नैव अभूत् । नाथे इति निगदति वदति सति तिर्य्यक् तिरश्चीनं यथा तथा आमीलिते अक्षिणी यया तथाभूतया तया कान्तयेति शेषः अनल्पं प्रभूतं नयनजलं मुक्तं त्यक्तं न किञ्चित् उक्तम् । मालिनीवृत्तम् । ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ॥२५ ॥

गाढ़ालिङ्गनेति । गाढ़ालिङ्गनेन वामनीकृतयोः नतीकृतयोः कुचयोः स्तनयोः प्रोद्भिन्नः उद्भूतः रोमोद्गमः रोमहर्षोदयः यस्याः तथोक्ता सान्द्रः निविड़ः यः स्नेहरसः प्रेमावेशः तस्य अतिरेकात् आतिशय्यात् विगलत् स्खलत् श्रीमत् सुन्दरं नितम्बाम्बरं नितम्बवसनं यस्याः तथाभूता, हे मानद ! मां अलं अत्यर्थं मा मा मा अति अतिपीड़येति भावः इति क्षामं क्षीणं अल्पमित्यर्थः अक्षरं उल्लपतीति तथोक्ता मृदुमन्दभाषिणीत्यर्थः सती सुप्ता किं नु वितर्के,

पटालग्ने पत्यौ नमयति मुखं जातविनया
हठाश्लेषं वाञ्छत्यपहरति गात्राणि निभृतम् ।
न शक्नोत्याख्यातुं स्मितमुखसखीदत्तनयना
ह्रिया ताम्यत्यन्तः प्रथमपरिहासे नवबधूः ॥ ३७ ॥
गते प्रेमाबन्धे प्रणयबहुमाने विगलिते
निवृत्ते सद्भावे जन इव जने गच्छति पुरः ।
तदुत्प्रेक्ष्योत्प्रेक्ष्य प्रियसखि । गतांस्तांश्च दिवसान्
न जाने को हेतुर्दलति शतधा यन्न हृदयम् ॥ ३८ ॥

स्तुता किं नु, मे मम मनसि लीना निमग्ना विलीना विलयं गता किं नु । शार्दूलविक्रीडितं वृत्तम् ॥ ३६ ॥

पटेति । नवबधूः नवीना कान्ता पत्यौ पटालग्ने वसनं स्पृशतीति भावः जातविनया सविनयं यथा तथेति भावः मुखं नमयति, हठाश्लेषं सहसालिङ्गनं वाञ्छति आकाङ्क्षति सति निभृतं यथा तथा गात्राणि अपहरति अपसरतीति भावः। स्मितं मुखे यासां ताः स्मितमुख्यः याः सख्यः ताभिः तासु वा दत्तं नयनं यस्यां यथा वा तथा सती आख्यातुं किमपि वक्तुमित्यर्थः न शक्नोति न पारयति । प्रथमपरिहासे कृते इति शेषः ह्रिया लज्जया अन्तः मनसि ताम्यति व्यथामनुभवतीत्यर्थः । शिखरिणीवृत्तम् ॥ ३७ ॥

गते इति । हे प्रियसखि ! प्रेमाबन्धे प्रणयबन्धने गते विनष्टे, प्रणयेन प्रेम्णा बहुमाने बहुगौरवे विगलिते विच्युते, सद्भावे वात्सल्ये निवृत्ते, जन इव सामान्यजन इव जने पत्याविति भावः पुरः अग्रतः गच्छति चलति सति तत् किमिदं वृत्तमिति भावः उत्प्रेक्ष्य तर्कयित्वा गतान् अतीतांश्च तान् प्रियजनसङ्गरहितानिति भावः दिवसान् उत्प्रेक्ष्य चिन्तयित्वा च हृदयं यत् शतधा न दलति

चिरविरहिणोरुत्कण्ठार्त्तिश्लथीकृतगात्रयो-
र्नवमिव जगज्जातं भूयश्चिराद्भिनन्दतोः ।
कथमपि दिने दीर्घे याते निशामधिरूढयोः
प्रसरति कथा बह्वी यूनोर्यथा न तथा रतिः ॥ ३९ ॥

दीर्घा वन्दनमालिका विरचिता दृष्ट्यैव नेन्दीवरैः
पुष्पाणां प्रकरः स्मितेन रचितो नो कुन्दजात्यादिभिः ।
दत्तः स्वेदमुचा पयोधरयुगे नार्घ्यो न कुम्भाम्भसा
स्वैरेवावयवैः प्रियस्य विशतस्तन्व्या कृतं मङ्गलम् ॥ ४० ॥

न विदीर्य्यते, तत्र को हेतुः अस्तीति शेषः तत् न जाने । शिखरिणी-वृत्तम् ॥ ३८ ॥

चिरेति । चिरविरहिणोः दीर्घकालं विरहेण स्थितयोरित्यर्थः अतएव उत्कण्ठया उद्वेगेन या आर्त्तिः सन्तापः तया श्लथीकृतं शिथिलीकृतं क्लान्तमिति यावत् गात्रं ययोः तथाभूतयोः भूयः पुनः चिरात् दीर्घकालात् परमित्यर्थः नवमिव जगत् जातम् अभिनन्दतोः प्रशंसतोः मिलने सति भावः कथमपि अतिकष्टेन दीर्घे दिने याते अतिक्रान्ते सति निशां रजनीम् अधिरूढयोः प्राप्तयोरिति यावत् यूनोः तरुणयोः यथा बह्वी विविधा नानाविषयिणीति भावः कथा प्रसरति चलति, तथा रतिः सुरतं न प्रसरतीति शेषः । हरिणी-वृत्तम् ॥ ३९ ॥

दीर्घेति । दृष्ट्यैव दीर्घा महती वन्दनमालिका अभिनन्दना-र्थमाल्य विरचिता कृता, इन्दीवरैः नीलोत्पलैर्न स्मितेन मन्दहासेन पुष्पाणां प्रकरः चयः गुच्छ इति यावत् उपहारत्वेन दीयमान इति भावः रचितः कुन्दजात्यादिभिः कुन्दकुसुमजातीकुसुमादिभिः नो रचितः इति शेषः । स्वेदमुचा घर्मवारिवर्षिणा पयोधरयुगेन स्तनयुगलेन अर्घ्यः दत्तः, कुम्भाम्भसा कलसोदकेन न । अतः तन्व्या

कान्ते सागसि शायिते प्रियसखीवेशं विधायागते
भ्रान्त्यालिङ्ग्य मया रहस्यमुदितं तत्सङ्गमाकाङ्क्षया।
मुग्धे! दुष्करमेतदित्यतितरामुक्त्वा सहासं बलाद्
आलिङ्ग्य छलितास्मि तेन कितवेनाद्य प्रदोषागमे ॥४१॥

आशङ्क्य प्रणतिं पटान्तपिहितौ पादौ करोत्यादराद्
व्याजेनागतमावृणोति हसितं न स्पष्टमुद्वीक्षते।
मय्यालापवति प्रतीपवचनं सख्या सहाभाषते
तस्यास्तिष्ठतु निर्भरप्रणयिता मानोऽपि रम्योदयः ॥ ४२ ॥

कयाङ्गना स्वैरेव निजैरेव अवयवैः विग्रतः स्टहं प्रविशतः प्रियस्य मङ्गलं माङ्गलिकाचार इत्यर्थः कृतम् अनुष्ठितम्। अत्र दृष्ट्यादिभिर्वन्दनमालिकादिरूपेणारोपस्य प्रकृते नायकसम्भावनादावुपयोगित्वात् अतुल्याधिकरणः परिणामालङ्कारः। तदुक्तं दर्पणे, विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनि परिणामो भवेत्तुल्यातुल्याधिकरणो द्विधेति। शार्दूलविक्रीड़ितं वृत्तम् ॥ ४० ॥

कान्ते इति। आगते सागसि सापराधे कान्ते प्रियसखीवेशं विधाय कृत्वा शायिते कयाचिदिति शेषः भ्रान्त्या भ्रमेण मया आलिङ्ग्य प्रियसखीवेशं कान्तमिति शेषः तस्य कान्तस्य सङ्गमाकाङ्क्षया सङ्गत्यभिलाषेण रहस्यं गूढ़म् उदितम् उक्तं तत्सङ्गमाभिलाषित्वं प्रकटितमिति भावः। तेन कितवेन धूर्त्तेन कान्तेन हे मुग्धे! एतत् अतितराम् अत्यर्थं दुष्करम् इति उक्त्वा कथयित्वा सहासं बलात् आलिङ्ग्य अद्य प्रदोषागमे रजन्यां छलितास्मि प्रतारितास्मि। शार्दूलविक्रीड़ितं वृत्तम् ॥ ४१ ॥

आशङ्क्येति। प्रणतिं मम चरणपातम् आशङ्क्य आदरात् यत्नात् पादौ चरणौ पटान्तपिहितौ वसनान्ताच्छादितौ करोति। आगतं हसितं हास्यं व्याजेन छलेन आवृणोति गोपायति। स्पष्टं यथा

सा यावन्ति पदान्यलीकवचनैरालीजनैः शिक्षिता
तावन्त्येव कृतागसो द्रुततरं व्याहृत्य पत्युः पुरः।
प्रारब्धा पुरतो यथा मनसिजस्याज्ञा तथा वर्तितुं
प्रेम्णो मौग्ध्यविभूषणस्य सहजः कोऽप्येष कान्तः क्रमः॥४३

दूरादुत्सुकमागते विवलितं सम्भाषिणि स्फारितं
संश्लिष्यत्यरुणं गृहीतवसने किञ्चिन्नतभ्रूलतम्।
मानिन्याश्चरणानतिव्यतिकरे बाष्पाम्बुपूर्णेक्षणं
चक्षुर्जातमहो प्रपञ्चचतुरं जातागसि प्रेयसि॥ ४४॥

तथा न उद्दीप्यते निरोच्यते। मयि आलापयति आलापं कुर्वति सति सख्या सह प्रतीपवचनं विपरीतवाक्यम् आभाषते कथयति। अतः तस्याः कान्तायाः निर्भरप्रणयिता प्रेमातिशय इत्यर्थः तिष्ठतु आस्तां, मानोऽपि रम्योदयः रमणीयः प्रतीयते इत्यर्थः। शार्दूलविक्रीडितं वृत्तम्॥ ४२॥

सेति। सा कान्ता अलीकवचनैः कृषावादिभिः आलीजनैः सखीजनैः यावन्ति पदानि वचनानीति यावत् शिक्षिता, तावन्त्येव न तु ततोऽधिकानि न्यूनानि वेति भावः पदानि कृतागसः कृतापराधस्य पत्युः स्वामिनः पुरः अग्रतः द्रुततरं सत्वरं व्याहृत्य उक्त्वा यथा मनसिजस्य कामस्य आज्ञा आदेशः यादृशः कामावेश इत्यर्थः पुरतः पत्युरग्रतः तथा वर्त्तितुं व्यवहर्त्तुं प्रारब्धा उपक्रान्तवती। मौग्ध्यं मुग्धता बाल्यमित्यर्थः विभूषणम् अलङ्कारः यस्य तादृशस्य प्रेम्णः सहजः स्वाभाविकः कोऽपि अनिर्वचनीयः एष कान्तः मनोहरः क्रमः पद्धतिरित्यर्थः। शार्दूलविक्रीडितं वृत्तम्॥ ४३॥

दूरादिति। मानिन्याः मानवत्याः नार्य्याः चक्षुः सागसि सापराधे प्रेयसि दूरात् आगते सति उत्सुकं यथा तथा विवलितं सञ्चलितम्। सम्भाषिणि आलपति सति स्फारितं विस्तारितम्। सं-

अङ्गानामतितानवं कथमिदं कम्पश्च कस्मात् कुतो
मुग्धे ! पाण्डुकपोलमाननमिति प्राणेश्वरे पृच्छति ।
तन्व्या सर्वमिदं स्वभावजमिति व्याहृत्य पक्ष्मान्तर-
व्यापी बाष्पभरस्तया चलितया निःश्वस्य मुक्तोऽन्यतः ॥४५॥

पुरस्तन्व्या गोत्रस्खलनचकितोऽहं नतमुखः
प्रवृत्तो वैलक्ष्यात् किमपि लिखितुं दैवहतकः ।
स्फुटो रेखान्यासः कथमपि स तादृक् परिणतो
गता येन व्यक्तं पुनरवयवैः सैव तरुणी ॥ ४६ ॥

श्लिष्यति समालिङ्गति सति अरुणं रक्तम् । गृहीतवचने वसनं स्खलयतीत्यर्थः सति किञ्चित् ईषत् नता भ्रूलता यस्य तत् । चरणयोः आनतिः प्रणिपातः व्यतिकरो व्यापारो यस्य तथाभूते सति बाष्पाम्बुपूर्णम् अश्रुपूर्णम् ईक्षण दर्शनव्यापारो यस्य तादृशम् अतएव प्रपञ्चचतुरं विविधविलासहुभगं जातम् अहो आश्चर्य्यम् शार्दूलविक्रीडितं वृत्तम् ॥ ४४ ॥

अङ्गानामिति । हे मुग्धे ! सुन्दरि ! कथमिदम् अङ्गानाम् अतितानवम् अतिकार्श्यम् ? कस्माच्च कम्पः ? कुतः पाण्डुकपोलं पाण्डुरगण्डम् आननं मुखम् ? इति प्राणेश्वरे पृच्छति सति तया तन्व्या कृशाङ्ग्या सर्वमिदं स्वभावजं स्वाभाविकम् इति व्याहृत्य उक्त्वा निःश्वस्य दीर्घमिति भावः अन्यतः अन्यत्र चलितया चलन्त्या इत्यर्थः पक्ष्मान्तर-व्यापी नेत्रलोमावरकः बाष्पभरः नेत्राम्बुनिचयः मुक्तः त्यक्तः । एतेन त्वद्विरहार्त्ताऽहमेतादृगवस्था जातास्मीति व्यज्यते । शार्दूल-विक्रीडितं वृत्तम् ॥ ४५ ॥

पुर इति । तन्व्याः कृशाङ्ग्याः पुरः अग्रतः गोत्रस्खलनेन सहसा अन्याङ्गनानामोच्चारणेन चकितः शङ्कितः अहं वैलक्ष्यात् लज्जा-वशात् नतमुखः अधोवदनः सन् किमपि लिखितुं प्रवृत्तः प्रक्रान्तः ।

कठिनहृदये ! मुञ्च भ्रान्तिं व्यलीककथाश्रितां
पिशुनवचनैर्दुःखं नेतुं न युक्तमिमं जनम् ।
किमिदमथवा सत्यं मुग्धे ! त्वया हि विनिश्चितं
यदभिरुचितं तन्मे कृत्वा प्रिये ! सुखमास्यताम् ॥ ४७ ॥

मन्दं मुद्रितपांशवः परिपतज्झङ्कारझञ्झामरुद्-
वेगध्वस्तकुटीरकान्तरगतच्छिद्रेषु लब्धान्तराः ।
कर्मव्यग्रकुटुम्बिनीकुचतटस्वेदच्छिदः प्रावृषः
प्रारम्भे निपतन्ति कन्दलदलोल्लासाः पयोबिन्दवः ॥ ४८ ॥

दैवच्छलकात् दुर्दैवादित्यर्थः कथमपि स्फुटः स्पष्टः स ताहक् रेखा-न्यासः लेखाविन्यासः परिस्खलतः पर्य्यवसितः येन पुनः व्यक्त स्फुटम् अवयवैः आकारैः सेव तरुणी मङ्गोग्येति भावः गता आप-तिता सम्मुखं तन्वङ्गा इति शेषः । शिखरिण्णोवृत्तम् ॥ ४६ ॥

कठिनेति । हे कठिनहृदये । निठुरचित्ते ! व्यलीककथाश्रिताम् अप्रियकथाजनितां मृषावाक्यजनितां वा भ्रान्तिं संशयमित्यर्थः मुञ्च त्यज । पिशुनानां दुर्जनानां वचनैः असत्यैरिति भावः इमं जनं दुःखं नेतुं न युक्तं नोचितम् । अथवा इदं किं त्वया सत्यं हि अवि-तथमेव विनिश्चितं निर्णीतम् ? हे प्रिये ! यत् अभिरुचितम् अभीष्टं तदेव शेषः तत् मे मम कृत्वा दण्डं विधायेति भावः सुखम् आसुता स्थीयताम् । हरिणीवृत्तम् ॥ ४७ ॥

मन्दमिति । प्रावृषः वर्षर्त्तोः प्रारम्भे उपक्रमे मन्दम् अल्पं यथा तथा मुद्रिताः स्थगिताः पांशवः रजांसि यैः तथाभूताः परिपतन् उद्गच्छन् झङ्कारो यस्य तादृशस्य झञ्झामरुतः वेगेन ध्वस्तानां विशीर्णानां कुटीरकाणां क्षुद्रगृहाणाम् अन्तरगतानि मध्यगतानि यानि छिद्राणि विवराणि तेषु लब्धान्तराः लब्धप्रवेशाः कर्मसु व्यग्राः व्यस्ताः याः कुटुम्बिन्यः नार्य्यः तासां कुचतटयोः स्तनप्रदेशयोः

पीतस्तुषारकिरणो मधुनैव सार्द्धम्
अन्तः प्रविश्य चषके प्रतिबिम्बवर्त्ती ।
मानान्धकारमपि मानवतीजनस्य
नूनं बिभेद यदसौ प्रससाद सद्यः ॥ ४९ ॥

नभसि जलदलक्ष्मीं सम्भृतां वीक्ष्य दिष्ट्या
प्रसरसि यदि कान्तेत्यर्द्धमुक्त्वा कथञ्चित् ।
मम पटमवलम्ब्य प्रोल्लिखन्ती धरित्रीं
तदनुकृतवती सा यत्र वाचो निवृत्ताः ॥ ५० ॥

स्वेदच्छिदः घर्मध्वंसिनः तथा कन्दलदनान् कदलोपत्राणि उल्लासय-न्तीति तथोक्ताः पयोबिन्दवः दृष्टजलकणाः निपतन्ति । शार्दूल-विक्रीडितं वृत्तम् ॥ ४८ ॥

पीत इति । यत् यदा असौ तुषारकिरणः प्रससाद प्रसादं नैर्मल्यमिति यावत् अगमत् तदा सद्यः तत्क्षणात् मानवतीजनस्य मानान्धकारमपि बाह्यान्धकारस्य किं वक्तव्यमिति भावः नूनं बिभेद दूरीचकार इति क्रोधादिति भावः चषके पानपात्रे अन्तः प्रविश्य प्रतिबिम्बवर्त्ती छायया वर्त्तमानस्तुषारकिरणश्चन्द्रः मधुनैव मद्येनैव सार्द्धं सह पीतः ग्रस्तः वर्षितृनेति कर्तृपदमूह्यम । यथा [illegible]न्ध-कारप्रियत्वात् अन्धकारध्वंसी अवसित क्रोधादिव मधुना च द-कायामतीवोल्लासकत्वेन तेनैव सार्द्धं चन्द्रमसः पानमिति । अत्र प्रतीयमानोत्प्रेक्षा । तदुक्तं दर्पणे । भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना । वाच्या प्रतीयमाना सेति । वसन्ततिलकं वृत्तम् । उक्तं वसन्ततिलकं तभजा जगौ ग इति तल्लक्षणात् ॥ ४९ ॥

नभसीति । हे कान्त ! नभसि आकाशे सम्भृतां जलदलक्ष्मीं मेघशोभां वीक्ष्य दृष्ट्वा दिष्ट्या मम दुर्भाग्येनेति यावत् यदि [illegible] प्रसरसि ? कथञ्चित् कष्टेन इति अर्द्धम् उक्त्वा मम पटं [illegible]वलम्

इयमसौ तरलायतलोचना गुरुसमुन्नतपीनपयोधरा ।
पृथुनितम्बभरालसगामिनी प्रियतमा मम जीवितहारिणी ॥ ५१ ॥

सालक्तकेन नवपल्लवकोमलेन
पादेन नूपुरवता मदनालसेन ।
यस्ताड्यते दयितया प्रणयापराधात्
सोऽङ्गीकृतो भगवता मकरध्वजेन ॥ ५२ ॥

बाले ! नाथ ! विमुञ्च मानिनि ! रुषं, रोषान्मया किं कृतं,
खेदोऽस्मासु, न मेऽपराध्यति भवान् सर्वेऽपराधा मयि ।

अवलम्ब्य धरित्रीं भूमिं मोल्लिखन्ती सती यत्र वाचः निवृत्ताः वाचां गतिर्नास्तीत्यर्थः तत् मरणमिति भावः अनुकृतवती मृतप्रायाभूदिति भावः । कथं त्वया न देशान्तरं गतमिति वादिनं कञ्चित् प्रति कथं गम्यत इति भङ्ग्योक्तिरियम् । मालिनीवृत्तम् । ननमयययुतेयं मालिनीभोगिलोकैरिति तल्लक्षणात् ॥ ५० ॥

इयमिति । असौ तरलायतलोचना चञ्चलविस्तृतनयना गुरू महान्तौ समुन्नतौ उत्तुङ्गौ पीनौ पीवरौ पयोधरौ स्तनौ यस्याः तथोक्ता पृथुनितम्बस्य स्थूलनितम्बस्य भरेण आतिशय्येन अलसगामिनी जीवितहारिणी जीवनमोहिनी मम प्रियतमा इयम् । द्रुतविलम्बितं वृत्तम् । द्रुतविलम्बितमाह नभौ भराविति तल्लक्षणात् ॥ ५१ ॥

सालक्तकेनेति । दयितया कान्तया यः जनः सालक्तकेन लाक्षारसरञ्जितेन नवपल्लववत् कोमलेन नूपुरवता नूपुरालङ्कृतेन मदनालसेन पादेन चरणेन प्रणयापराधात् ताड्यते प्रह्रियते, सः जनः भगवता सर्वशक्तिमता मकरध्वजेन कामेन अङ्गीकृतः स्वीकृतः स्वजनत्वेन गृहीत इत्यर्थः । वसन्ततिलकं वृत्तम ॥ ५२ ॥

बाले इति । बाले ! मुग्धे ! नाथ ! हे मानिनि ! रुषं कोपं मुञ्च

तत् किं रोदिषि गद्गदेन वचसा ? कस्याग्रतो रुद्यते ?
नन्वेतन्मम, का तवास्मि ? दयिता, नास्मीत्यतो रुद्यते ॥५३

नीत्वोच्चैर्विक्षिपन्तः कृततुहिनकणासारसङ्गान् परागान्
कौन्दानानन्दितालीनतितरसुरभीन् भूरिशो दिङ्मुखेषु ।
एते ते कुङ्कुमाक्तस्तनकलसभरास्फालनादुच्छलन्तः
पीत्वा शीत्कारि वक्त्रं शिशुहरिणदृशां हैमना वान्ति वाताः ॥५४

अत्र । रोषात् कोपात् मया किं कृतम् ? । अस्मात्तु खेदः दुःखं कृत इति शेषः । भवान् मे मह्यं न अपराध्यति, सर्वे अपराधाः मयि सन्तीति शेषः, मयैव सर्वेऽपराधाः कृता इति भावः । तत् तदा किं कथं गद्गदेन अस्पष्टेनेति यावत् वचसा रोदिषि ? कस्य अग्रतः रुद्यते ? ममेति शेषः । ननु भो ! एतत् रोदनमिति भावः मम: अग्रत इति शेषः । अस्मि अहं तव का ? दयिता प्रिया ममेति शेषः । नास्मि नाहं दयिता इत्यतः अस्मादेव कारणात् रुद्यते । दयितामिव मां न पश्यसीति अहं रोदिमीति भावः । स्त्रीपुंसयो-रुक्तिप्रत्युक्ती । शार्दूलविक्रीडितं वृत्तम् ॥ ५३ ॥

नीत्वेति । एते ते हैमनाः हैमन्ताः वाताः वायवः कृतः तुहि-नकणानां शिशिरबिन्दूनाम् आसारैः धारासम्पातैः सङ्गः संसर्गः यैः तान् आनन्दिताः अलयः भ्रमराः यैः तथोक्तान् अतितरसुरभीन् अतिमात्रसौरभवतः कौन्दान् कुन्दकुसुमसम्बन्धिनः भूरिशः बहुनिस्वर्थः परागान् नीत्वा स्वीकृत्वा दिङ्मुखेषु दिगन्तरेषु उच्चैः अतिमात्रं विक्षिपन्तः विस्तारयन्तः तथा शिशुहरिणदृशां बालमृगाक्षीणां शीत्कारि वक्त्रं वदनं पीत्वा शीतार्त्तत्वादिति भावः कुङ्कुमाक्तयोः कुङ्कुमलिप्तयोः स्तनकलसयोः भरस्य उच्छ्रायस्य आस्फालनात् सम्मर्दा-दिति भावः उच्छलन्तः उल्लसन्त इत्यर्थः सन्तः वान्ति वहन्ति । अत्र प्रस्तुतानां वायूनां कृतकामुकव्यवहारसमारोपात् समासोक्तिरलङ्कारः ।

श्रुत्वा तन्वया निशीथे नवघनरसितं विश्लथाङ्गं पतित्वा
शय्यायां भूमिपृष्ठे करतलधृतया दुःखितालीजनेन ।
सोत्कण्ठं मुक्तकण्ठं कठिनकुचतटाघातशीर्णाश्रुबिन्दु
स्मृत्वा स्मृत्वा प्रियस्य स्खलितमृदुवचो रुद्यते पान्थवध्वा ॥ ५५ ॥
श्लिष्टः कण्ठे किमिति न मया मूढ़या प्राणनाथ-
श्चुम्बत्यस्मिन् वदनविधुतिः किं कृता किन्न दृष्टः ।
नोक्तः कस्मादिति नववधूचेष्टितं चिन्तयन्ती
पश्चात्तापं वहति तरुणी प्रेम्णि जाते रसज्ञा ॥ ५६ ॥

तदुक्तं दर्पणे । समासोक्तिः समैयत्र कार्य्यलिङ्गविशेषणैः । व्यव-
हारसमारोपः प्रस्तुतेऽन्यस्य वस्तुन इति । स्रग्धरावृत्तम् । म्रभ्नैर्यानां
त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति तल्लक्षणात् ॥ ५४ ॥

श्रुत्वेति । तन्वया कृशाङ्ग्या पान्थवध्वा प्रोषितकामिन्या निशीथे
अर्द्धरात्रे नवघनानां नवमेघानां रसितं गर्जितं श्रुत्वा विश्लथं विवशम्
अङ्गं यत्र तत् यथा तथा शय्यायां तथा भूमिपृष्ठे पतित्वा दुःखिता-
लीजनेन दुःखितसखीजनेन करतलेषु धृतया सत्या प्रियस्य स्मृत्वा
स्मृत्वा पुनः पुनः प्रियं स्मृत्वेत्यर्थः, कर्मणि षष्ठी । सोत्कण्ठम् उत्-
कण्ठासहितं मुक्तकण्ठं तारस्वरमित्यर्थः कठिनयोः कुचतटयोः स्तन-
युगलयोः आघातेन आपातेन शीर्णाः स्खलिताः अश्रुबिन्दवः यस्मिन्
तत् तथा स्खलितानि शोकावेगेनावरुद्धकण्ठतया अर्द्धोच्चारितानि
मृदूनि कोमलानि वचांसि वाक्यानि विलापाक्षराणि यस्मिन् तद्
यथा तथा रुद्यते । स्रग्धरावृत्तम् ॥ ५५ ॥

श्लिष्ट इति । मूढया मन्दया मया प्राणनाथः किमिति कथं
कण्ठे न श्लिष्टः नालिङ्गितः ? अस्मिन् प्राणनाथे चुम्बति सति मया
वदनविधुतिः मुख प्रसारणानि [illegible] किं कथं कृता ? किं कथं न दृष्टः
न निरीक्षितः ? कस्माच्च न उक्तः न आलपितः ? प्रागिति सर्वत्र

श्रुत्वा नामापि यस्य स्फुटघनपुलकं जायतेऽङ्गं समन्तात्
दृष्ट्वा यस्याननेन्दुं भवति वपुरिदं चन्द्रकान्तानुकारि ।
तस्मिन्नागत्य कण्ठग्रहणसरभसस्थायिनि प्राणनाथे
भग्ना मानस्य चिन्ता भवति मम पुनर्वज्रमय्याः कदा नु ॥ ५७ ॥

रामाणां रमणीयवक्त्रशशिनः स्वेदोदविन्दुप्लुतो
व्यालोलालकवल्लरीं प्रचलयन् धुन्वन् नितम्बाम्बरम् ।
प्रातर्वाति मधौ प्रकामविकसद्राजीवराजीरजो-
जालामोदमनोहरो रतिरसग्लानिं हरन्मारुतः ॥ ५८ ॥

योऽयम् । इति इत्थं नववधूर्वाहनं सुरुख व्याव्याकुलं चिन्तयन्ती प्रेमणि जाते सति रसज्ञा रसिका तरुणी युवतिः पश्चात्तापं वहति करोति । मन्दाक्रान्तावृत्तम् ॥ ५६ ॥

श्रुत्वेति । यस्य नाम श्रुत्वापि अङ्गं समन्तात् सर्वतः स्फुटानि स्पष्टानि घनानि सान्द्राणि पुलकानि रोमाञ्चाः यस्मिन् तथाविधं जायते भवति, यस्य आननेन्दुं मुखचन्द्रं दृष्ट्वा इदं वपुः शरीरं चन्द्रकान्तं तदाख्यं मणिम् अनुकरोतीति तथोक्तं द्रवीभूतमित्यर्थः भवति, तस्मिन् प्राणनाथे आगत्य कण्ठग्रहणाय कण्ठालिङ्गनाय सरभसं सहर्षं सावेगं वा, रभसो वेगहर्षयोरित्यमरः । तिष्ठतीति तादृशे सति, कदा वज्रमय्याः अतिनिष्ठुराया इति भावः मम मानस्य चिन्ता भग्ना भवति ? नु वितर्के । मानेन अवधीरितकान्तायाः पश्चात्तापवचनमिदम् । स्रग्धरावृत्तम् ॥ ५७ ॥

रामाणामिति । मधौ वसन्ते चैत्रे वा प्रकामं सम्यक् विकसन्तीनां राजीवराजीनां कमलचयानां रजोजालानाम् आमोदेन सौरभेण मनोहरः मारुतः वायुः प्रातः प्रभाते रामाणां कामिनीनां सुरतोत्थितानामिति भावः रमणीयं वक्त्रं वदनमेव शशी चन्द्रः तस्य स्वेदोदविन्दुभिः घर्मजलकणैः प्लुतः आर्द्रीकृत इत्यर्थः तथा व्यालोलां

अङ्गं चन्दनपाण्डुपल्लवमृदुस्ताम्बूलताम्राधरो
धारायन्त्रजलाभिषेककलुषे धौताञ्जने लोचने ।
अन्तःपुष्पसुगन्धिरार्द्रकवरी सर्वाङ्गलग्नाम्बरं
रामाणां रमणीयतां विदधति ग्रीष्मापराह्णागमे ॥ ५९ ॥
वरमसौ दिवसो न पुनर्निशा ननु निशैव वरं न पुनर्दिवा ।
उभयमेतदुपैत्वथवा क्षयं प्रियजनेन न यत्र समागमः ॥ ६० ॥

स्खलितामिति वाचम् अमयत वार्दिति भावः अलकवल्लरीं चूर्णकुन्तल-मञ्जरीं प्रचलयन् कम्पयन् नितम्बाम्बरं नितम्बवसनं धून्वन् चपलयन् तथा रतिरमल्लानिं सुरतरागश्रमं हरन् मनृ वाति वहति । शार्दूल-विक्रीडितं वृत्तम् ॥ ५८ ॥

अङ्गमिति । ग्रीष्मस्य अपराह्णागमे दिवावसानसमये रामाणां रमणीनां चन्दनेन चन्दनविलेपनेन पाण्डु शुभ्रम् अङ्गं पल्लववत् मृदुः कोमलः ताम्बूलेन ताम्रः रक्तः अधरः, धारायन्त्रजलैर्यः अभिषेकः स्नानं तेन कलुषे आविले धौताञ्जने क्षालितकज्जले लोचने नयने, अन्तःपुष्पैः अन्तर्गतैः कुसुमैः सुगन्धिः आर्द्रकवरी स्तिमित-केशपाशः तथा सर्वाङ्गेषु लग्नं ससक्तं जलार्द्रत्वादिति भावः अम्बरं वसनं सूक्ष्ममिति भावः एतानि रमणीयतां मनोहारित्वं विदधति जनयन्ति । शार्दूलविक्रीडितं वृत्तम् ॥ ५९ ॥

वरमिति । यत्र यस्मिन् यस्यां वा दिवसे निशायां वा प्रियजनेन न समागमः न सम्मेलनम्, असौ दिवसः वरं मनाक्प्रिय इत्यर्थः निशा पुनः न, न वरमित्यर्थः, ननु अथवा निशैव वरं मनाक्प्रिये-त्यर्थः, दिवा पुनः न, न वरमित्यर्थः आद्ये कार्य्यान्तरव्यापृततया कथञ्चित् दिवसातिवाहनं रात्रिर्नितरां क्लेशकरीति द्वितीये निद्रया कथञ्चिन्निशातिवाहनं दिवसे तु सर्वदा दर्शनाभिलाषेण क्लेशातिशय इति भावः । अथवा एतत् उभयं रात्रिन्दिवमित्यर्थः क्षयं नाशम्

लोलैर्लोचनवारिभिः सशपथैः पादप्रणामैः प्रियै-
रन्यास्ता विनिवारयन्ति कृपणाः प्राणेश्वरं प्रस्थितम् ।
पुण्याहं व्रज मङ्गलं सुदिवसं प्रातः प्रयातस्य ते
यत् स्नेहोचितमीहितं प्रियतम ! त्वं निर्गतः श्रोष्यसि ॥ ६१

लग्ना नांशुकपल्लवे भुजलता न द्वारदेशेऽर्पिता
नो वा पादतले तया निपतितं तिष्ठेति नोक्तं वचः ।
काले केवलमम्बुदातिमलिने गन्तुं प्रवृत्तः शठः
तन्व्या बाष्पजलौघकल्पितनदीपूरेण बद्धः प्रियः ॥ ६२ ॥

उपैतु प्राप्नोतु उभयोरपि समक्षं शङ्करत्वादिति भावः । द्रुतविलम्बितं वृत्तम् ॥ ६० ॥

लोलैरिति । हे प्रियतम ! याः नार्य्यः प्रस्थितं प्रयाणोद्यत-मित्यर्थः प्राणेश्वरं लोलैः स्खलद्भिरिति यावत् लोचनवारिभिः अश्रुभिः, प्रियैः प्रीतिजनकैः सशपथैः दिव्यसहितैः पादप्रणामैः चरणपतनैः विनिवारयन्ति, कृपणाः दीनाः ताः अन्याः । अहं पुण्या भाग्यवतीत्यर्थः, व्रज गच्छ देशान्तरमिति शेषः, प्रातः प्रयातस्य ते तव मङ्गलं शुभं सुदिवसं शोभनं दिनं भवत्विति शेषः स्नेहोचितं प्रणयोचितम् ईहितं चेष्टितं यत् ममेति शेषः तत् मरणमिति भावः निर्गतः त्वं श्रोष्यसि । तव विरहे अहं प्राणान् त्यक्ष्यामीति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ६१ ॥

लग्नेति । तया तन्व्या कृशाङ्ग्या अंशुकपल्लवे वसनाञ्चले प्रिय-स्येति शेषः न लग्ना वसनं धृत्वा नाकृष्टमित्यर्थः । द्वारदेशे भुजलता न अर्पिता प्रियस्य निर्गमबाधायेति भावः । पादतले प्रियस्येति शेषः नो वा निपतितं, तिष्ठ इति वचश्च न उक्तम् । अम्बुदाति-मलिने मेघान्धकारिते इति यावत् काले वर्षाकाले इत्यर्थः गन्तुं प्रोषितुं प्रवृत्तः उद्यतः शठः धूर्त्तः प्रियः केवलं बाष्पजलानाम् अश्रु-

न जाने संमुखायाते प्रियाणि वदति प्रिये ।
सर्वाण्यङ्गानि मे यान्ति श्रोत्रतां किमु नेत्रताम् ॥ ६३ ॥

विरहविषमः कामो वामस्तनुं कुरुते तनुं
दिवसगणनादक्षश्चासौ व्यपेतघृणो यमः ।
त्वमपि वशगो मानव्याधेर्विचिन्तय नाथ हे !
किशलयमृदुर्जीवेदेवं कथं प्रमदाजनः ॥ ६४ ॥

पादासक्ते सुचिरमिह ते वामता कैव कान्ते
सन्मार्गस्थे प्रणयिनि जने कोपने ! कोऽपराधः ।

वारीणां स्रोघैः प्रवाहैः कल्पितः रचितः यः नदीपूरः नदीप्रवाहः तेन बद्धः निवारित इत्यर्थः । रुदतीं कामिनीं दृष्ट्वा तत्कान्तो न प्रस्थित इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ६२ ॥

नेति । सम्मुखायाते सम्मुखमुपस्थिते प्रिये कान्ते प्रियाणि प्रियवचनानि वदति सति मे मम सर्वाणि अङ्गानि श्रोत्रतां श्रवणेन्द्रियत्वं किमु नेत्रतां दर्शनेन्द्रियत्वं यान्ति प्राप्नुवन्ति तत् न जाने । प्रियस्य दर्शने तन्मुखामृतश्रवणे च न मम तृप्तिर्जायते इति भावः । अनुष्टुव्वृत्तम् ॥ ६३ ॥

विरहेति । हे नाथ ! वामः प्रतीपः कामः विरहे विषमः दुःसह इति यावत् तनुं शरीरं तनुं क्षीणं कुरुते, असौ यमश्च दिवसानां जीवनकालानामिति भावः गणनायां संख्याने दक्षः निपुणः तत्पर इति यावत् अतएव व्यपेतघृणः निर्दयः असमये स न पश्यतीति भावः त्वम् अपि मानव्याधेः वशगः वशवर्त्ती मानं कृत्वा स्थित इति भावः एवं सति किशलयमृदुः पल्लवकोमलः प्रमदाजनः नारीजनः कथं जीवेत् ? अतिकष्टेन म्रियतेत्यर्थः । विचिन्तय अवधारय । तस्मान्मानं परित्यज्य मामनुगृहाणेति भावः । मानिनं कान्तं प्रति कस्याश्चित् सख्या उक्तिः । हरिणीवृत्तम् ॥ ६४ ॥

पादासक्त इति । हे कोपने ! इह अस्मिन् कान्ते प्रिये

इत्थं तस्याः परिजनकथा कोपवेगोपशान्त्यै
वाष्पोद्भेदैस्तदनु सहसा न स्थितं न प्रयातम् ॥ ६५ ॥

पुराभूदस्माकं नियतमविभिन्ना तनुरियं
ततो नु त्वं प्रेयान् वयमपि हताशाः प्रियतमाः ।
इदानीं नाथस्त्वं वयमपि कलत्रं किमपरं
मयाप्तं प्राणानां कुलिशकठिनानां फलमिदम् ॥ ६६ ॥

सुचिरं बहुक्षणमित्यर्थः पादाग्रलग्ने चरणपतिते ते तव वामता प्रतिकूलता कैव? अनुचितैवेति भावः, प्रणयिनि जने कान्ते इत्यर्थः सन्मार्गस्थे सदाचारवर्त्तिनि सति कः अपराधः? नैवापराध इत्यर्थः तस्याः नार्य्याः कोपवेगस्य उपशान्त्यै उपशमाय इत्थम् एवंविधा परिजनानां सखीनामिति भावः कथा आसीदिति शेषः। तदनु तदनन्तरं वाष्पाणाम् अश्रूणाम् उद्भेदैः स्खलनैः सहसा न स्थितं न प्रयातं न गतं कियत्कालम् अश्रुमोचनेण कोपो गत इति भावः। मन्दाक्रान्तावृत्तम् ॥ ६५ ॥

पुरेति। पुरा पूर्वम् अस्माकम् आवयोरित्यर्थः नियतं निश्चितम् इयं तनुः शरीरम् आविभिन्ना एकैवेत्यर्थः अभूत्। ततः कियतः कालत् त्वं प्रेयान् प्रियतमः किन्तु भिन्नतनुः विच्छेदादिति भाव, वयम प हताशाः विफलमनोरथाः प्रियतमाः जाता इति शेषः, इदानीं त्वं नाथः पतिः पालकत्वादिति भावः, वयमपि कलत्रं स्त्री, भर्त्तव्या इति भावः अपरम् अन्यत् किं वक्तव्यमिति शेषः मया कुलिशकठिनानां वज्रनिष्ठुराणां प्राणानां तादृशविरहेऽपि अध्वंसिनामिति भावः इदं फलं युष्मत्कृपापात्रत्वरूपमिति भावः आप्तं लब्धम्। तव विरहे मम यौवनं गतम् इदानीं केवलं भर्त्तृभार्य्यात्वसम्बन्ध आवयोरिति भावः। शिखरिणीवृत्तम् ॥ ६६ ॥

मुग्धे ! मुग्धतयैव नेतुमखिलः कालः किमारभ्यते ?
मानं धत्स्व धृतिं बधान ऋजुतां दूरे कुरु प्रेयसि ।
सख्यैव प्रतिबोधिता प्रतिवचस्तामाह भीतानना
नीचैः शंस हृदि स्थितो ननु स मे प्राणेश्वरः श्रोष्यति ॥ ६७ ॥

पीतो यतः प्रभृति कामपिपासितेन
तस्या मयाधररसः प्रचुरः प्रियायाः ।
तृष्णा ततः प्रभृति मे द्विगुणत्वमेति
लावण्यमस्ति बहु तत्र किमत्र चित्रम् ॥ ६८ ॥

मुग्धे इति । हे मुग्धे ! सरले ! अखिलः समग्रः कालः समयः मुग्धतयैव सरलभावेनैव नेतुम् अतिवाहयितुं किं कथम् आरभ्यते ? मानं धत्स्व अवलम्बस्व, धृतिं धैर्यं बधान आश्रय, प्रेयसि कान्ते ऋजुतां सरलतां दूरे कुरु न कुरुष्वेत्यर्थः, सख्या एवं प्रतिबोधिता ज्ञापिता कान्ता भीतानना सभयवदना सती तां सखीं प्रतिवचः आह अब्रवीत्, ननु सखि ! नीचैः मन्दं यथा तथा शंस कथय नोच्चैः कथयेति यावत् कथं चेत् हृदि स्थितः स मे मम प्राणेश्वरः श्रोष्यति । शार्दूलविक्रीडितं वृत्तम् ॥ ६७ ॥

पीत इति । यतः प्रभृति आरभ्य कामपिपासितेन मया तस्याः प्रियायाः प्रचुरः प्रभूतः अधररसः पीतः, ततः प्रभृति तदारभ्य मे मम तृष्णा तदधररसपानलालसा द्विगुणत्वं वृद्धिमित्यर्थः एति प्राप्नोति । तत्र प्रियाधरे बहु लावण्यम् अस्ति अत्र विषये किं चित्रम् आश्चर्यम । यदि लावण्यातिशयो नास्ति तदा कथं तत्र रसातिशयः लावण्यरसयोराधाराधेयत्वनियमादिति भावः । वसन्ततिलकं वृत्तम् ॥ ६८ ॥

क्व प्रस्थितासि करभोरु ! घने निशीथे ?
प्राणाधिको वसति यत्र जनः प्रियो मे ।
एकाकिनी वद कथं न बिभेषि बाले !
नन्वस्ति पुङ्खितशरो मदनः सहायः ॥ ६९ ॥

लीलातामरसाहतोऽन्यवनितानिःशङ्कदष्टाधरः
कश्चित् केसरदूषितेक्षण इव व्यामील्य नेत्रे स्थितः ।
मुग्धा कुड्मलिताननेन दधती वायुं स्थिता तस्य सा
भ्रान्त्या धूर्त्ततया च वेपथुमती तेनानिशं चुम्बिता ॥ ७० ॥

क्वेति । हे करभोरु ! घने अन्धकाराच्छन्ने इति यावत् निशीथे अर्द्धरात्रे क्व कुत्र प्रस्थितासि चलितासि ? यत्र मे रतिप्रियः सुरताभिलाषी प्राणाधिकः वसति तिष्ठति, हे बाले ! मुग्धे ! एकाकिनी असहाया त्वं न बिभेषि कथम् ? वद । ननु भोः संहितशरः संयोजितशरः मदनः कामः सहायः अस्ति । कस्याश्चिदभिसारिण्याः पथिकस्य च कस्यचिदुक्तिप्रत्युक्ती । वसन्ततिलकं वृत्तम् ॥ ६९ ॥

लीलेति । अन्यवनितया अपराङ्गनया निःशङ्कं दष्टः अधरो यस्य तथाभूतः अतएव लीलातामरसेन क्रीडारक्तकमलेन आहतः ताडितः मुग्धयेति शेषः कश्चित् केसरैः तत्तामरसकिञ्जल्कैरित्यर्थः दूषिते ईक्षणे नेत्रे यस्य तथाभूत इव नेत्रे व्यामील्य निमीलयित्वा स्थितः । मुग्धा सरला तत्कपटमजानतीति भावः कुड्मलिताननेन सङ्कुचितवदनेन वायुं तत्केसरापनयनार्थमिति भावः दधती भ्रान्त्या केसरदूषितनेत्रबोधेनेति भावः तस्य कान्तस्य पुरत इति शेषः वेपथुमती कम्पमाना कान्तस्य नयनानिष्टशङ्कयेति भावः स्थिता तेन कान्तेन धूर्त्ततया अनिशम् अतिमात्रमिति यावत् चुम्बिता । शार्दूलविक्रीडितं वृत्तम् ॥ ७० ॥

स्फुटतु हृदयं कामः कामं करोतु तनुं तनुं
न सखि! चटुलप्रेम्णा कार्य्यं पुनर्दयितेन मे ।
इति सरभसं मानोद्रेकादुदीर्य्य वचस्तया
रमणपदवी सारङ्गाक्ष्या ससम्भ्रममीक्षिता ॥ ७१ ॥

पश्याश्लेषविशीर्णचन्दनरजःपुञ्जप्रकर्षादियं
शय्या सम्प्रति कोमलाङ्गि! कठिनेत्यारोप्य मां वक्षसि ।
गाढौष्ठग्रहपीड़नाकुलतया पादाग्रसन्दंशकै-
नाकृष्याम्बरमात्मनो यदुचितं धूर्त्तेन तत्प्रस्तुतम् ॥ ७२ ॥

स्फुटत्विति । हे सखि! हृदयं स्फुटतु विदीर्णं भवतु, कामः कामं सम्यक् तनुम् अङ्गं तनुं क्षीणं करोतु, चटुलप्रेम्णा चञ्चलप्रणयेन दयितेन प्रियेण पुनः मे मम न कार्य्यं न प्रयोजनम् । तया सारङ्गाक्ष्या मृगाक्ष्या इति इत्थं मानोद्रेकात् मानातिरेकात् सरभसं सहसा वचः उदीर्य्य उक्त्वा रमणस्य कान्तस्य पदवी प्रयाणमार्गः ससम्भ्रमं सभयम् ईक्षिता दृष्टा । मामेनावधीरिते कान्ते गच्छति पुनस्तृष्णया तन्मार्गावलोकनात् सत्वरं निषिध्यतामयमित्याशयः । हरिणीवृत्तम् ॥ ७१ ॥

पश्येति । हे कोमलाङ्गि! आश्लेषेण आलिङ्गनेन विशीर्णानां स्खलितानां त्वदङ्गेभ्य इति भावः चन्दनरजःपुञ्जानां चन्दनधूलिनिवहानां प्रकर्षात् आतिशय्यात् इयं शय्या सम्प्रति कठिना त्वदङ्गं बाधते इति भावः पश्य इति उक्त्वा धूर्त्तेन कान्तेन मां वक्षसि आरोप्य नीत्वा गाढः यः ओष्ठग्रहः अधरदंशनं तेन यत् पीड़नं क्लेशः व्यथेति यावत् तेन आकुलतया हस्तस्य तत्र व्यापृतत्वेति भावः पादाग्रं चरणयोरग्रमेव सन्दंशकः तेन अम्बरं वसनम् आकृष्य अपनयित्वेत्यर्थः आत्मनः स्वस्य यत् उचितम् अभीष्टमित्यर्थः तत् प्रस्तुतम् आरब्धं सम्यक् सुरतं कृतमित्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ७२ ॥

कथमपि प्रत्यावृत्ते प्रिये स्खलितोत्तरे
विरहकृशया कृत्वा व्याजं प्रजल्पितमश्रुतम् ।
असहनसखीश्रोत्रप्राप्तिप्रमादससम्भ्रमं
प्रचलितदृशा शून्ये गेहे समुच्छ्वसितं पुनः ॥ ७३ ॥
आदृष्टिप्रसरं प्रियस्य पदवीमुद्वीक्ष्य निर्विण्णया
विच्छिन्नेषु पथिष्वहःपरिणतौ ध्वान्ते समुन्मीलति ।
दत्त्वैकं सशुचा गृहं प्रतिपदं पान्थस्त्रियास्मिन् क्षणे
सोऽभूदागत इत्यमन्दवलितग्रीवं पुनर्वीक्षितः ॥ ७४ ॥

कथमिति । विरहकृशया कान्तया प्रत्यावृत्ते प्रवासात् प्रतिनिवृत्ते प्रिये कथमपि स्खलितोत्तरे कृतापराधतया असम्यक्प्रतिवचने सति व्याजं छलं कृत्वा प्रजल्पितं वचनं प्रियस्येति शेषः अश्रुतं नाकर्णितं पुनः किन्तु शून्ये विजने गेहे स्थितयेति शेषः असहना कोपनेति यावत् या सखी तस्याः श्रोत्रप्राप्तौ श्रवणगोचरतायां यः प्रमादः अनवधानता तस्मात् ससम्भ्रमं सभयं यथा तथा प्रचलितदृशा चञ्चलनयनया सत्या समुच्छ्वसितं समुज्जीवितम् । प्राक् सख्या प्रिये आगते त्वया अतिमात्रं मानः कर्त्तव्य इति शिक्षिता, किन्तु कान्तागमने सहसा तदनुसरणे सख्याः कोपो भवेदिति भयेन तद्वाक्याश्रवणेऽपि पुनर्जीवनं प्राप्तमिति निष्कर्षः ॥ ७३ ॥

आदृष्टीति । पान्थस्य स्त्रिया प्रोषितभर्त्तृकयेत्यर्थः आदृष्टिप्रसरं दृष्टिपथपर्य्यन्तमित्यर्थः प्रियस्य पदवीं पन्थानम् उद्वीक्ष्य उच्चैर्निरीक्ष्य विच्छिन्नेषु दृष्टिविच्छेदवत्सु पथिषु निर्विण्णया नितरां दुःखितया आत्मानं हतभाग्यतया अवजानत्येति यावत् अहःपरिणतौ दिवावसाने ध्वान्ते तमसि समुन्मीलति समुज्जृम्भमाणे सति सशुचा सशोकया गृहं प्रति एकं पदं दत्त्वा अस्मिन् क्षणे सः प्रियः आगतः अभूत् इति धियेति शेषः अमन्दं त्वरितमित्यर्थः

आयाते दयिते मनोरथशतैर्नीत्वा कथञ्चिद्दिनं
वैदग्ध्याऽपगमाज्जडे परिजने दीर्घां कथां कुर्वति।
दष्टास्मीत्यभिधाय सत्वरतरं व्याधूय चीनांशुकं
तन्वङ्ग्या रतिकातरेण मनसा नीतः प्रदीपः शमम् ॥ ७५ ॥

अनालोच्य प्रेम्णः परिणतिमनादृत्य सुहृद-
स्त्वया मुग्धे! मानः किमिति सरले प्रेयसि कृतः।
समाकृष्टा ह्येते प्रलयदहनोद्भासुरशिखाः
स्वहस्तेनाङ्गारास्तदलमधुनारण्यरुदितैः ॥ ७६ ॥

वलिता चालिता ग्रीवा यस्मिन् तत् यथा तथा पुनः वीक्षितम् अवलोकितम्। शार्दूलविक्रीडितं वृत्तम् ॥ ७४ ॥

आयाते इति। दयिते प्रिये आयाते आगते सति मनोरथशतैः बहुभिर्मनोरथैरित्थमेवं प्रियेण सार्द्धं करिष्यामीत्येवंरूपैरिति भावः कथञ्चित् कष्टेन दिनं नीत्वा अतिवाक्यवैदग्ध्यापगमात् रसज्ञानाभावादित्यर्थः जडे निर्बोधे परिजने दीर्घां महतीम् अशेषामिति यावत् कथां कुर्वति सति दष्टा अवलोकिता अस्मि प्रियेणेति शेषः इति अभिधाय लज्जाकुलतां प्रकाश्येति भावः तन्वङ्ग्या कृशाङ्ग्या प्रियया सत्वरतरम् अतिशीघ्रं चीनांशुकं सूक्ष्मवसनं व्याधूय चालयित्वा रतिकातरेण सुरतोत्सुकेन मनसा प्रदीपः शमं नीतः निर्वापितः। प्रदीपनिर्वाणे सर्वे परिजनाः स्वं स्वं स्थानं यास्यन्ति मम च सत्वरं प्रियसमागमः स्यादिति धियेति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ ७५ ॥

अनालोच्येति। हे मुग्धे! सरले! प्रेम्णः परिणतिं परिणामं दुःखफलमिति भावः अनालोच्य अविविच्य सुहृदः अस्मानिति शेषः मा त्वमीदृशं मानं कुर्वित्यादीनि अस्माकं वचनानीति भावः

शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छनै-
र्निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम् ।
विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता ॥ ७७ ॥
जाता नोत्कलिका स्तनौ न लुलितौ गात्रं न रोमाञ्चितं
वक्त्रं स्वेदकणाञ्चितं न सहसा यावच्छठेनामुना ।

अनादृत्य अगणयित्वेत्यर्थः त्वया सरले अकुटिले प्रेयसि कान्ते किमि-ति कथं मानः कोपः कृतः ? अनुचितस्ते तादृशे प्रिये मान इति भावः । एते प्रणयदहनस्य कल्पान्तानलस्य उद्भासुराः उच्चैर्दीप्यमानाः शिखाः ज्वालाः इव शिखा येषां तथाभूताः अङ्गाराः उल्मुकाः विरहज्वाला इति भावः स्वहस्तेन समाकृष्टाः गृहीताः त्वयेति शेषः, तत् तस्मात् अधुना साम्प्रतम् अरण्यरुदितैः वृथारोदनैरित्यर्थः अलं रोदनेन निष्फलमिति भावः । शिखरिणीवृत्तम् ॥ ७६ ॥

शून्यमिति । बाला मुग्धा कान्ता वासगृहं शयनागारं शून्यं सखीजनादिरहितमित्यर्थः विलोक्य दृष्ट्वा शनैः मन्दं मन्दं शयनात् शय्यायाः किञ्चित् उत्थाय निद्राव्याजं कपटनिद्रामित्यर्थः किं करोतीयमिति दिदृक्षयेति भावः उपागतस्य आश्रितस्य पत्युः कान्तस्य मुखं सुचिरं बहुक्षणं निरीक्ष्य विस्रब्धं निःशङ्कं यथा तथा परिचुम्ब्य जातपुलकां सञ्जातरोमाञ्चां कान्तास्पर्शसुखादिति भावः गण्डस्थलीं कपोलदेशं प्रियस्येति शेषः आलोक्य लज्जया नम्रमुखी अवनतवदना हसता प्रियेण चिरं बहुक्षणं चुम्बिता । शार्दूल-विक्रीड़ितं वृत्तम् ॥ ७७ ॥

जातेति । अमुना शठेन धूर्त्तेन मे मम धृतिमुषा धैर्यध्वं-सिना प्राणेश्वरेण दृष्टेनैव सहसा मनः चित्तं हृतं तत्र उत्कलिका उत्कण्ठा कथं मे मनो ह्रियते इत्युद्वेग इति भावः न जाता

दृष्टेनैव मनो हृतं धृतिमुषा प्राणेश्वरेणाद्य मे
तत् केनैव निरूप्यतां हि निपुणे ! मानः समाधीयते ॥ ७८ ॥
दृष्टः कातरनेत्रया चिरतरं बध्वाञ्जलिं याचितः
पश्चादंशुकपल्लवेन विधृतो निर्व्याजमालिङ्गितः ।
इत्याक्षिप्य यदा समस्तमघृणो गन्तुं प्रवृत्तः शठः
पूर्वं प्राणपरिग्रहो दयिततया मुक्तस्ततो वल्लभः ॥ ७९ ॥

स्तनौ न तुङ्गितौ न कम्पितौ मनसस्तदन्तर्गतत्वात् मनोहरणे तयोः कम्पनमवश्यम्भावीति भावः । गात्रम् अङ्गं न रोमाञ्चितम् दैहर्ण वस्तु ह्रियते इति चकितधियेति भावः यत्नां वदनं न स्वेदकणैर्घर्म-वारिविन्दुभिः आञ्चितम् अलङ्कृतं तादृशरत्नहरणे क्लेशातिशयात् स्वेदागम इति भावः । तत् तस्मात् मनसो हरणात् हे निपुणे हे चतुरे ! त्वया निरूप्यतां केन एव हि उपायेन इति शेषः मानः समाधीयते त्वज्यते मयेति शेषः । मनोवृत्तिर्नास्ति तथापि मानः करणीयः कीदृशो वेति विचार्य्यते तस्मात् मया मानस्त्यक्त इति भावः । सखीं प्रति नायिकाया उक्तिरियम् । शार्दूलविक्रीडितं वृत्तम् ॥ ७८ ॥

दृष्ट इति । कातरनेत्रया दयितया चिरतरं बहुक्षणं दृष्टः निरीक्षितः, अञ्जलिं बद्ध्वा याचितः मा मां त्यक्त्वा व्रजेति प्रार्थितः, पश्चात् प्रार्थनानन्तरम् अंशुकपल्लवेन वसनाञ्चलेन विधृतः विशेषेण धृतः ततश्च निर्व्याजं गाढमिति यावत् गमनवारणार्थमिति भावः आलिङ्गितः इतीत्थं समस्तं गमनप्रतिबन्धभूतमिति भावः आक्षिप्य परिहृत्य अघृणः निर्दयः शठः वल्लभः प्रियः यदा गन्तुं प्रवृत्तः उद्यतः, तदा दयितया पूर्वं प्राक् प्राणपरिग्रहः जीवनेषु प्रयत्न इति यावत् मुक्तः त्यक्तः, ततः प्राणत्यागनिश्चयानन्तरं वल्लभः कान्तः मुक्तः त्यक्तः । शार्दूलविक्रीडितं वृत्तम् ॥ ७९ ॥

अङ्गुल्यग्रनखेन बाष्पसलिलं निक्षिप्य निक्षिप्य किं
तूष्णीं रोदिषि कोपने ! बहुतरं फूत्कृत्य रोदिष्यसि ।
यस्यास्ते पिशुनोपदेशवचनैर्मानेऽतिभूमिं गते
निर्विण्णोऽनुनयं प्रति प्रियतमो मध्यस्थतामेष्यति ॥ ८० ॥

तद्वक्त्राभिमुखं मुखं विनमितं दृष्टिः कृता पादयोः
तस्यालापकुतूहलाकुलतरे श्रोत्रे निरुद्धे मया ।
पाणिभ्याञ्च तिरस्कृतः सपुलकः स्वेदोद्गमो गण्डयोः
सख्यः ! किं करवाणि यान्ति शतधा मत्कञ्चुलीसन्धयः ॥ ८१

अङ्गुलीति । हे कोपने ! अङ्गुलेरग्रनखेन नखाग्रेण बाष्पसलिलम् अश्रुजलं निक्षिप्य निक्षिप्य पुनः पुनः पातयित्वा किं कथं तूष्णीं रोदिषि ? बहुतरम् उच्चैरित्यर्थः फूत्कृत्य चीत्कृत्येत्यर्थः रोदिष्यसि ? इदानीम् अलक्षितरोदनं किन्तु उत्तरत्र उच्चै रोदनं भावीति भावः । यस्यास्ते तव माने पिशुनानां दुर्जनानाम् उपदेशवचनैः अतिभूमिम् अतिशय्य गते सति निर्विण्णः निर्वेदमापन्नः पुनःपुनरवधीरणात् आत्मानं नितरां कातरं मन्यमानः प्रियतमः अनुनयं प्रति मध्यस्थताम् औदासीन्यम् एष्यति प्राप्स्यति न पुनरनुनेष्यतीति भावः । मानिनीं प्रति कस्याश्चित् सख्या उक्तिरियम् । शार्दूलविक्रीड़ितं वृत्तम् ॥ ८० ॥

तदिति । हे सख्यः ! मया तस्य कान्तस्य वक्त्राभिमुखं वदनं प्रति अभिमुखं सतृष्णं मुखं विनमितं विशेषेण नतीकृतं, पादयोः चरणयोः दृष्टिः कृता, तस्य आलापे वचने यत् कुतूहलं तस्मिन् आकुलतरे अतिलालसे इति यावत् श्रोत्रे कर्णौ निरुद्धे बद्धीकृते, सपुलकः सरोमाञ्चः गण्डयोः कपोलयोः स्वेदोद्गमः घर्मजलाविर्भावः पाणिभ्यां भुजाभ्यां तिरस्कृतः आच्छादितश्च । मत्कञ्चुलीसन्धयः मम कूर्पासवस्त्रग्रन्थयः शतधा यान्ति स्खलन्तीति यावत्

क्षतो दूरादेव स्मितमधुरमभ्युद्गमविधिः
शिरस्याज्ञा न्यस्ता प्रतिवचनमुच्चैः प्रणमितम् ।
न दृष्टेः शैथिल्यं मिलन इति चेतो दहति मे
निगूढान्तःकोपात् कठिनहृदये ! संवृतिरियम् ॥ ८२ ॥
एकस्मिन् शयने विपक्षरमणीनामग्रहे मुग्धया
सद्यः कोपपराङ्मुखं शयितया चाटूनि कुर्वन्नपि ।
आवेगादवधीरितः प्रियतमस्तूष्णीं स्थितस्तत्क्षणात्
माभूत् सुप्त इवैष मन्दवलितग्रीवं पुनर्वीक्षितः ॥ ८३ ॥

तत् किं करवाणि ? कामावेशवशात् यस्मन्मर्यादास्खलनं दुर्वारमिति भावः । कथं त्वया प्रियदर्शन एव धैर्यच्युता भवसि ? सर्वथा मानः करणीय इतिवादिनीः सखीः प्रति नायिकाया उक्तिः । शार्दूलविक्रीडितं वृत्तम् ॥ ८१ ॥

क्षत इति । हे कठिनहृदये ! निष्ठुराशये ! स्मितेन मन्दहासेन मधुरं मनोहरं यथा तथा अभ्युद्गमविधिः मम दर्शनेन आसनोत्थानव्यापारः दूरादेव क्षतः, आज्ञा इदमिदं कुर्वित्यादेशः शिरसि न्यस्ता गृहीता, उच्चैरतिशयेन प्रणमितं प्रणतिः प्रतिवचनं प्रत्युत्तरं मिलने सङ्गमे दृष्टेः शैथिल्यं न दृष्ट्यैव मिलनं न तु आलिङ्गनेनेति भावः इतीयं निगूढः यः अन्तःकोपः आन्तरिकक्रोधः तस्मात् इयं संवृतिः स्वरूपसंवरणं मे मम चेतः चित्तं दहति तापयतीत्यर्थः । शिखरिणीवृत्तम् ॥ ८२ ॥

एकस्मिन्निति । एकस्मिन् शयने शय्यायां विपक्षरमणी सपत्नीत्यर्थः तस्याः नामग्रहे प्रियेण कृते सतीत्यर्थः सद्यः तत्क्षणं कोपेन पराङ्मुखं व्यावृत्तवदनं यथा तथा शयितया मुग्धया सरलया कामिन्या चाटूनि अनुनयवचनानि कुर्वन्नपि नाहमेवं कदापि करिष्यामीत्येवं वदन्नपि प्रियतमः आवेगात् कोपभरादिति यावत्

मलयमरुतां व्राता याता विकासितमल्लिका-
परिमलभरो भग्नो ग्रीष्म ! त्वमुत्सहसे यदि ।
घन ! घटयितुं निस्नेहं त्वां य एव निवर्त्तने
प्रभवतितरां किन्नश्छिन्नं स एव धनञ्जयः ॥ ८४ ॥
स्वं दृष्ट्वा करजक्षतं मधुमदक्षीवा विचार्य्येर्ष्यया
गच्छन्ती क्व नु गच्छसीति विधृता बाला पटान्ते मया ।

अवधीरितः निराकृतः तत्क्षणात् तूष्णीं स्थितः मौनमाश्रित इत्यर्थः किन्तु एषः प्रियतमः सुप्त इव निद्रित एवेत्यर्थः । अत्रावधारणार्थे इवशब्दः । माभूत् न भवतु इति धियेति भावः मन्दम् ईषत् वलिता चालिता ग्रीवा यस्मिन् तत् यथा तथा पुनः वीक्षितः अवलोकितः । शार्दूलविक्रीडितं वृत्तम् ॥ ८३ ॥

मलयेति । हे ग्रीष्म ! त्वं यदि उत्सहसे उज्जृम्भसे तदा मलयमरुतां व्राताः सङ्घाः याताः नाशं गता इति यावत् तथा विकासितानां मल्लिकानां परिमलभरः सौरभातिशयः भग्नः नष्टः स्यादिति शेषः । हे घन ! मेघ ! य एव निस्नेहं निर्दयं त्वां निवर्त्तने निवारणे घटयितुं योजयितुं दूरीकर्त्तुमिति यावत् प्रभवतितराम् अतिशयेन प्रभवति, स एव धनञ्जयः अर्जुनः यदि विद्यते इति शेषः तदा नः अस्माकं किं छिन्नं त्वयेति शेषः न किमपि त्वया कर्त्तुं शक्यते इति भावः । पुरा खाण्डवदाहे इन्द्रप्रेरितघनानां तुमुलं वर्षणम् अर्जुनेन शरसम्बाधैर्निराकृतमिति पौराणिकी वार्त्ताऽत्रानुसन्धेया । विरहिणां वासन्तानां मलयमरुतां तत्कालविकसितानां मल्लिकानाञ्च तथा मेघानामप्युद्दीपकत्वमसहमानानां ग्रीष्माभिनन्दनमर्जुनप्रशंसनञ्चेदम् । हरिणीवृत्तम् ॥ ८४ ॥

स्वमिति । मधुमदेन सुरापानजनितोल्लासेन क्षीबा मत्ता बाला कान्ता स्वम् आत्मकृतं करजक्षतं नखक्षतचिह्नं दृष्ट्वा मदङ्गे इति शेषः

प्रत्यावृत्तमुखी सबाष्पनयना मां मुञ्च मुञ्चेति सा
कोपात् प्रस्फुरिताधरा यद्वदत्तत् केन विस्मर्य्यते ॥८५॥
सालक्तकं शतदलाधिककान्तिरम्यं
रत्नौघधामनिकरारुणनूपुरञ्च ।
क्षिप्तं भृशं कुपितया तरलोत्पलाक्ष्या
सौभाग्यचिह्नमिव मूर्ध्नि पदं विरेजे ॥ ८६ ॥
कपोले पत्नाली करतलनिरोधेन मृदिता
निपीतो निःश्वासैरयममृतहृद्योऽधररसः ।

ईर्षया अन्याङ्गनाद्वेषेण विचार्य्य विविच्य नेदं मत्कृतमपि तु अन्याङ्गनाकृतमिति निर्णीयेति यावत् गच्छन्ती चलन्ती क नु कुत्र खलु गच्छसीति मया पटान्ते वस्त्राञ्चले विधृता प्रत्यावृत्तमुखी पराङ्मुखी सबाष्पनयना साश्रुनेत्रा मा मुञ्च मुञ्च त्यज त्यज इति उक्तेति शेषः कोपात् प्रस्फुरिताधरा प्रकम्पितोष्ठा सती यत् अवदत् तत् केन विस्मर्य्यते ? अविस्मरणीयं तदित्यर्थः । सखायं प्रति कस्यचित् नायिकाया वार्त्ताविवर्णनमिदम् । शार्दूलविक्रीडितं वृत्तम् ॥ ८५ ॥

सालक्तकमिति । भृशम् अत्यर्थं कुपितया क्रुद्धया तरलोत्पलाक्ष्या चञ्चलनीलोत्पलनेत्रया कान्तयेति शेषः मूर्ध्नि शिरसि क्षिप्तं निहितं सालक्तकं लाक्षारसरञ्जितं शतदलादपि कमलादपि अधिकया कान्त्या श्रिया रम्यं मनोहरं रत्नौघानां मणिसङ्घानां धामनिकरेण कान्तिपुञ्जेन अरुणं रक्तं नूपुरं यस्य तथाभूतं पदं सौभाग्यचिह्नमिव कान्तावाल्लभ्यचिह्नमिव प्रियस्येति शेषः विरेजे शुशुभे । वसन्ततिलकं वृत्तम् ॥ ८६ ॥

कपोले इति । हे निरनुरोधे ! अननुनानुनये इति यावत् करतलाभ्यां निरोधेन आवरणेन कपोले गण्डे पत्नाली पत्नरचनावलिः

मुहुः कण्ठे लग्नस्तरलयति बाष्पः स्तनतटं
प्रियो मन्युर्जातस्तव निरनुरोधे ! न तु वयम् ॥ ८७ ॥

लाक्षालक्ष्म ललाटपट्टमभितः केयूरमुद्रा गले
वक्त्रे कज्जलकालिमा नयनयोस्ताम्बूलरागोदयः ।
दृष्ट्वा कोपविधायि मण्डनमिदं प्रातश्चिरं प्रेयसो
लीलातामरसोदरे मृगदृशः श्वासाः समाप्तिं गताः ॥ ८८ ॥

रुदिता रोदिंतुमारब्धा, अयम् अनन्तरम् हृद्यः मनोज्ञः अधररसः निःश्वासैः दीर्घैरिति शेषः पीतः शोषं नीत इत्यर्थः । मुहुः पुनः पुनः कण्ठे लग्नः पतित इत्यर्थः बाष्पः अश्रुवारि स्तनतटं तरलयति चपलयति कम्पयतीत्यर्थः कण्ठात् स्तनोपरि वेगेन पतनादिति भावः । अतः तव मन्युः कोपः प्रियो जातः, वयं न तु, नैव प्रिया जाता इति शेषः । मन्योरनुरोधेन तत् कार्य्यं करोषि न ममानुरोधेन मदभिमतमिति मन्योरेव प्रियता न तु ममेति निष्कर्षः । शिखरिणीवृत्तम् ॥ ८७ ॥

लाक्षेति । प्रेयसः कान्तस्य ललाटपट्टं ललाटदेशम् अभितः सर्वतः ललाटोपरीत्यर्थः लाक्षालक्ष्म अलक्तकचिह्नं पादप्रहारजनितमिति भावः, गले कण्ठे केयूरमुद्राः अङ्गदरेखाः आलिङ्गनजनिता इति भावः, वक्त्रे वदने कज्जलकालिमा अञ्जनमालिन्यं चुम्बनजनित इति भावः, नयनयोः ताम्बूलरागस्य उदयः स्थितिः चुम्बनजनित इति भावः, इदं कोपविधायि कोपकारणं मण्डनम् अलङ्करणम् अन्याङ्गनासम्भोगजनितमिति भावः प्रातः प्रातःकाले चिरं बहुक्षणं दृष्ट्वा मृगदृशः मृगनयनायाः लीलातामरसोदरे क्रीड़ाकमलाभ्यन्तरे श्वासाः प्राणवायवः समाप्तिं गताः निर्गता इत्यर्थः लीलातामरसोदरम् आजिघ्रन्ती प्राणान् जहाविति निष्कर्षः । शार्दूलविक्रीडितं वृत्तम् ॥ ८८ ॥

तप्ते महाविरहवह्निशिखावलीभि-
रापाण्डुरस्तनतटे हृदये प्रियायाः ।
रथ्यालिवीक्षणनिवेशितलोलदृष्टे-
र्नूनं छनच्छनिति बाष्पकणाः पतन्ति ॥ ८९ ॥

चिन्तामोहविनिश्चलेन मनसा मौनेन पादानतः
प्रत्याख्यानपराङ्मुखः प्रियतमो गन्तुं प्रवृत्तोऽधुना ।
सव्रीडैरलसैर्निरन्तरलुठद्बाष्पाकुलैर्लोचनैः
श्वासोत्कम्पकुचं निरीक्ष्य सुचिरं जीवेशया वारितः ॥९०॥

तप्ते इति । महतीभिः विरहवह्निशिखावलीभिः तप्ते अत-एव आपाण्डुरौ स्तनतटौ यत्र तादृशे रथ्यालीनाम् अध्वनिचयानां वीक्षणे अवलोकने निवेशिता लोला सतृष्णा मद्दर्शनलालसेति यावत् दृष्टिः यस्याः तथाभूतायाः प्रियायाः हृदये छनच्छनिति बाष्पकणाः अश्रुबिन्दवः पतन्ति नूनम् उत्प्रेक्षे । मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः । उत्प्रेक्षाव्यञ्जकाः शब्दा इवशब्दोऽपि तादृश इति दर्पणः । पान्थस्य कस्यचित् सखायं प्रति स्वकान्तावस्था-वर्णनमिदम् । वसन्ततिलकं वृत्तम् ॥ ८९ ॥

चिन्तेति । चिन्ता प्रियं प्रति किं कर्त्तव्यमित्येवं भावना, मोहः कर्त्तव्यविमूढ़ता ताभ्यां विनिश्चलेन कर्त्तव्यनिर्णयाक्षमेणेति यावत् मनसा चित्तेन मौनेन तूष्णीम्भावेन च उपलक्षितयेति भावः, उप-लक्षणे तृतीया । जीवेशया प्राणेश्वर्या पादानतः अपराद्धोऽस्मीति चरणपतितः तथापि प्रत्याख्यानेन निराकरणेन पराङ्मुखः विमुखः अतएव अधुना साम्प्रतं गन्तुं प्रवृत्तः उद्यतः प्रियतमः खाशेन दीर्घ-श्वेति भावः उत्कम्पौ कुचौ स्तनौ यत्र तत् यथा तथा सुचिरं बहु-क्षणं निरीक्ष्य सव्रीडैः सलज्जैः अलसैः मन्थरैः निरन्तरं यथा तथा

तन्वङ्ग्या गुरुसन्निधौ नयनजं यद्वारि संस्तम्भितं
तेनान्तर्गलितेन मन्मथशिखी सिक्तोऽनुषङ्गोद्भवः ।
मन्ये तस्य निरस्यमानकिरणस्यैषा मुखेनोद्गता
श्वासामोदसमाकुलालिनिकरव्याजेन धूमावलिः ॥९१॥
भ्रूभेदो रचितः चिरं नयनयोरभ्यस्तमामीलनं
रोद्धुं शिक्षितमादरेण हसितं मौनेऽभियोगः कृतः ।
धैर्यं कर्त्तुमपि स्थिरीकृतमिदं चेतः कथञ्चिन्मया
बद्धो मानपरिग्रहे परिकरः सिद्धिस्तु दैवस्थिता ॥ ९२ ॥

लुठद्भिः पतद्भिः बाष्पैः अश्रुभिः व्याकुलैः लोचनैः नयनैः वारितः प्रतिबद्धः । जीवाश्ववेति पाठे जीवनाशयेत्यर्थः अनेन विनाहं न जीवामीति धियेति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ९० ॥

तन्वङ्ग्येति । तन्वङ्ग्या कृशाङ्ग्या गुरूणां श्वशुरादीनां सन्निधौ समीपे यत् नयनजं वारि अश्रुजलं कान्तवियोगजमिति भावः संस्तम्भितं संवृतम्, अन्तर्गलितेन अन्तःपतितेन तेन वारिणा अनुषङ्गोद्भवः अनुषङ्गात् सततचिन्तनात् उत्पत्तिर्यस्य तथाभूतः मन्मथशिखी मदनाग्निः सिक्तः, ततश्च मुखेन निरस्यमानाः निर्वाप्यमाणाः किरणाः शिखा यस्य तथाभूतस्य तस्य मन्मथशिखिनः एषा धूमावलिः धूमनिचयः श्वासे निःश्वासमारुते तन्वङ्ग्या इति शेषः आमोदः सौरभं तेन समाकुलाः सङ्कुलाः समागताः ये अलयः भ्रमराः तेषां निकरः समूह एव व्याजः छलं तेन उद्गताः निर्गताः इति मन्ये सम्भावयामि । उत्प्रेक्षालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ९१ ॥

भ्रूभेद इति । मया भ्रूभेदः भ्रुवोर्भङ्गो कौटिल्यमित्यर्थः रचितः कृतः, नयनयोः आमीलनं निमीलनं चिरम् अभ्यस्तम्, आदरेण हसितम् हास्यं रोद्धुं शिक्षितं, मौने तूष्णीम्भावे अभियोगः यत्नः कृतः,

देशैरन्तरिता शतैश्च सरितामुर्वीभृतां काननै-
र्यत्नेनापि न याति लोचनपथं कान्तेति जानन्नपि ।
उद्ग्रीवश्चरणार्द्धरुद्धवसुधः कृत्वाश्रुपूर्णे दृशौ
तामाशां पथिकस्तथापि किमपि ध्यायन्मुहुर्वीक्षते ॥ ९३ ॥

कोपस्त्वया हृदि कृतो यदि पङ्कजाक्षि !
सोऽस्तु प्रियस्तव किमत्र विधेयमन्यत् ।
आश्लेषमर्पय मदर्पितपूर्वमुच्चैः
मह्यं समर्पय मदर्पितचुम्बनञ्च ॥ ९४ ॥

दृढमपि चेतः धैर्य्यम् कर्त्तुम् अवलम्बितुं चर्त्तुमित्यपि पाठः । स्थिरीकृतं निश्चितम् इत्थं मानपरिग्रहे प्रियं प्रति कोपविधाने परिकरः कटिबन्धः उद्योग इति यावत् बद्धः कृतः, तु किन्तु सिद्धिः साफल्यं दैवे स्थिता दैवाधीनेत्यर्थः, कियता कृतकार्य्या भवामीति न जाने दैवमेव तद् जानातीति भावः । कथं मानः कर्त्तुं न शक्यते इति वादिनीं सखीं प्रति मुग्धाया नायिकाया उक्तिरियम् । शार्दूलविक्रीडितं वृत्तम् ॥ ९२ ॥

देशैरिति । कान्ता प्रेयसी देशैः जनपदैः सरितां नदीनां उर्वीभृतां पर्वतानाञ्च शतैः काननैः अरण्यैश्च अन्तरिता व्यवहिता बहुदूरवर्त्तिनीति यावत् अतएव यत्नेनापि लोचनपथं दृष्टिपथं न याति न गच्छति न द्रष्टुं शक्यते इति भावः इति जानन्नपि पथिकः तथापि उद्ग्रीवः उन्नमितग्रीवः चरणार्द्धेन रुद्धा अवलम्बिता वसुधा भूमिर्येन तथोक्तः किमपि ध्यायन् चिन्तयन् अश्रुपूर्णे दृशौ नयने कृत्वा मुहुः पुनः पुनः ताम् आशां दिशं यस्यां कान्ता तिष्ठतीति भावः वीक्षते पश्यति । शार्दूलविक्रीडितं वृत्तम् ॥ ९३ ॥

कोप इति । हे पङ्कजाक्षि ! पद्मनेत्रे ! यदि त्वया हृदि मनसि कोपः कृतः, स कोपः तव प्रियः अस्तु भवतु हृदयधारणात्

ऊरुद्वयं मृगदृशः कदलस्य काण्डौ
मध्यञ्च वेदिरतुलं स्तनयुग्ममस्याः ।
लावण्यवारिपरिपूरितशातकुम्भ-
कुम्भौ मनोजनृपतेरभिषेचनाय ॥ ९५ ॥

चपलहृदये ! किं स्वातन्त्र्यात्तथा गृहमागतः
चरणपतितः प्रेमार्द्रार्द्रः प्रियः समुपेक्षितः ।
तदिदमधुना यावज्जीवं निरस्तसुखोदया
रुदितशरणा दुर्जातीनां सहस्व रुषां फलम् ॥ ९६ ॥

नाङ्गमिति भावः, अत्र विषये अन्यत् किं त्विदं कर्त्तव्यं न किमपि कर्त्तव्यमस्तीत्यर्थः । किन्तु मदर्पितपूर्वं पूर्वं मया दत्तम् उच्चैः नाङ्गमिति यावत् आश्लेषम् आलिङ्गनं मदर्पितचुम्बनञ्च मया दत्तं चुम्बनञ्च मह्यं समर्पय देहि, यदा मया सह ते सम्बन्धो नष्टः तदा मद्दत्तम् कथं परिभोक्ष्यसे इति भावः । वसन्ततिलकं वृत्तम् ॥ ९४ ॥

ऊरुद्वयमिति । अस्याः मृगदृशः मृगनयनायाः ऊरुद्वयं कदलस्य रम्भातरोः काण्डौ स्तम्भौ, मध्यं वेदिः परिष्कृता भूमि-रिति कुमारसम्भवटीकायां मल्लिनाथः परिष्कृता भूमिः वेदी इति यावदिति केचित् । तथा अतुलं निरुपमं स्तनयुग्मं मनोजनृपतेः मदनराजस्य अभिषेचनाय स्नानाय लावण्यवारिभिः परिपूरितौ शातकुम्भकुम्भौ सुवर्णकलसौ । अतिसुन्दरीयमिति भावः । वसन्त-तिलकं वृत्तम् ॥ ९५ ॥

चपलहृदये इति । हे चपलहृदये ! चञ्चलचित्ते ! गृहमागतः चरणपतितः प्रेम्णा प्रणयेन आर्द्रार्द्रः अतिप्रेमवानित्यर्थः प्रियः स्वातन्त्र्यात् स्वेच्छया तथा तेन प्रकारेण किं कथं समुपेक्षितः अव-धीरितः ? तत् तस्मात् अधुना इदानीं यावज्जीवं निरस्तः नाशितः सुखोदयः यया तादृशी तथा रुदितं रोदनमेव शरणम् आश्रयः गति-

रात्रौ वारिभरालसाम्बुदरवोद्विग्नेन जाताश्रुणा
पान्थेनात्ममनोजदुःखपिशुनं गीतं तथोत्कण्ठया ।
आस्तां जीवितहारिणः प्रवसनालापस्य सङ्कीर्त्तनं
मानस्यापि जलाञ्जलिः सरभसं लोकेन दत्तो यथा ॥९७॥

हारो जलार्द्रवसनं नलिनीदलानि
प्रालेयशीकरमुचस्तुहिनांशुभासः ।
यस्येन्धनानि सरसानि च चन्दनानि
निर्वाणमेष्यति कथं स मनोभवाग्निः ॥ ९८ ॥

रित्यर्थः यस्याः तथाभूता सती इदं दुर्जातीनां दुष्टानां इर्षां कोपानां फलं प्रियविरहदुःखमिति भावः सहस्व प्राप्नुहि । हरिणीवृत्तम् ॥ ९६ ॥

रात्राविति । रात्रौ रजन्यां वारिभरेण जलभारेण अलसानां मन्थराणां अम्बुदानां मेघानां रवेण गर्जितेन उद्विग्नः तेन अतएव जाताश्रुणा सजलनयनेन पान्थेन पथिकेन विरहिणेति भावः उत्कण्ठया प्रियाविरहजनितयेति भावः आत्मनः स्वस्य मनोजदुःखपिशुनं मदनसन्तापसूचकं तथा तेन प्रकारेण गीतं उदितमिति यावत्, यथा जीवितहारिणः प्राणनाशकस्य प्रवसनालापस्य प्रवासकथायाः सङ्कीर्त्तनम् आस्तां तिष्ठतु, लोकेन तच्छ्रोत्रेणेति भावः मानस्यापि जलाञ्जलिः सरभसं सवेगं सत्वरमित्यर्थः दत्तः । प्रियाविरहदुःखमतीव दुःसहमिति मानोऽपि परित्यक्त इति निष्कर्षः । शार्दूलविक्रीडितं वृत्तम् ॥ ९७ ॥

हार इति । हारः मौक्तिकमाला, जलार्द्रं वसनं, नलिनीदलानि पद्मिनीपत्राणि, प्रालेयशीकरमुचः शिशिरकरवर्षिणः तुहिनांशोश्चन्द्रस्य भासः किरणाः, सरसानि आर्द्राणि चन्दनानि च य

तन्वी शरत्त्रिपथगा पुलिने कपोलौ
लोले दृशौ रुचिरचञ्चलखञ्जरीटौ ।
तद्बन्धनाय सुचिरार्पितसुभ्रुचाप-
चाण्डालपाशयुगलाविव शून्यकर्णौ ॥ ९९ ॥

हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले ।
मुक्तानामप्यवस्थेयं के वयं स्मरकिङ्कराः ॥ १०० ॥

इत्यमरुशतकं परिपूर्णम् ।

---

इन्धनानि काष्ठानि, स मनोभवाग्निः कामानलः कथं निर्वाणम् यास्यति ? नैव प्रायप्रतीत्यर्थः । वसन्ततिलकं वृत्तम् ॥ ९८ ॥

तन्वीति । तन्वी कृशाङ्गी कान्ता शरत्त्रिपथगा शरत्कालीनगङ्गा, कपोलौ पुलिने सैकते, लोले चञ्चले दृशौ नयने रुचिरौ मनोज्ञौ चञ्चलौ खञ्जरीटौ पक्षिविशेषौ, तयोः खञ्जरीटयोर्बन्धनाय सुचिरम् अर्पितः योजितः शोभना भ्रुरेव चापः धनुः येन तादृशो यश्चाण्डालः व्याधः तस्य पाशयुगलाविव शून्यकर्णौ तिष्ठत इति शेषः । वसन्ततिलकं वृत्तम् ॥ ९९ ॥

हार इति । हरिणाक्षीणां मृगनयनानां कान्तानां स्तनमण्डले अयं हारः मौक्तिकसरः लुठति, मुक्तानामपि मौक्तिकहाराणामपि सिद्धानामपीति ध्वनिः इयम् अवस्था, स्मरकिङ्कराः कामदासाः वयं के ? अस्माकमीदृशी दशा भवतीति किं वक्तव्यमिति भावः । अनुष्टुब्वृत्तम् ॥ १०० ॥

इति वि, ए उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्येण
विरचिता अमरुशतकव्याख्या समाप्ता ।

---

# शृङ्गारशतकम् ।

—o—

शम्भुस्वयम्भुहरयो हरिणेक्षणानां
येनाक्रियन्त सततं गृहकर्मदासाः ।
वाचामगोचरचरित्रविचित्रताय
तस्मै नमो भगवते कुसुमायुधाय ॥ १ ॥

स्मितेन भावेन च लज्जया भिया
पराङ्मुखैरर्द्धकटाक्षवीक्षणैः ।
वचोभिरीर्ष्याकलहेन लीलया
समस्तभावैः खलु बन्धनं स्त्रियः ॥ २ ॥

शम्भ्विति । येन शम्भुस्वयम्भुहरयः हरविधिकेशवाः हरिणेक्षणानां मृगनयनानां सततं गृहकर्मसु दासाः किङ्कराः अक्रियन्त कृताः, वाचां वाक्यानाम् अगोचरो चरित्रस्य विचित्रता वैचित्र्यं यस्य तादृशाय तस्मै भगवते सर्वप्रभवे मकरध्वजाय मदनाय नमः ॥ वसन्ततिलकं वृत्तं, उक्तं वसन्ततिलकं तभजा जगौ ग इति तल्लक्षणात् ॥ १ ॥

स्मितेनेति । स्त्रियः नार्यः स्मितेन मृदुहासेन, भावेन निर्विकारात्मके चित्ते भावः प्रथमविक्रियेत्युक्तलक्षणेन विलासविशेषेण वा, लज्जया भिया भयेन, पराङ्मुखैः [illegible], अर्द्धकटाक्षैश्च वीक्षणैः अवलोकनैः, वचोभिः वाक्यैः, ईर्ष्याकलहेन, लीलया सुरतविलासादिचेष्टाभिः (किं बहुना) समस्तभावैः सर्वैः प्रकारैरित्यर्थः बन्धनं संयमनं खलु पुरुषाणामिति शेषः । स्मितादिभिः भावैः पुरुषाः स्त्रीभि[illegible]

भ्रूचातुर्य्याकुञ्चिताक्षाः कटाक्षाः
स्निग्धा वाचो लज्जितान्तैव हासाः।
लीलामन्दं प्रस्थितं च स्थितञ्च
स्त्रीणामेतद् भूषणञ्चायुधञ्च ॥ ३ ॥

क्वचित् सुभ्रूभङ्गैः क्वचिदपि च लज्जापरिणतैः
क्वचिद्भीतित्रस्तैः क्वचिदपि च लीलाविलसितैः।
नवोढानामेभिर्वदनकमलैर्नेत्रचलितैः
स्फुरल्लीलालीनां प्रकरपरिपूर्णा इव दिशः ॥ ४ ॥

क्रियन्ते इति तात्पर्य्यम्। वंशस्थविलं वृत्तं, वदन्ति वंशस्थविलं जतौ जराविति तल्लक्षणात् ॥ २ ॥

भ्रूचातुर्य्येति। भ्रुवोश्चातुर्य्येण भङ्गिविशेषेण आकुञ्चितानि सङ्कुचितानि अक्षीणि नेत्राणि येषु तथाविधाः कटाक्षाः, स्निग्धाः प्रेमपूर्णा इति यावत् वाचः वाक्यानि, लज्जिताः लज्जासंवलिताः हासाः, लीलया विलासविशेषेण मन्दं मन्थरं प्रस्थितं गमनं, स्थितम् अवस्थानञ्च एतत् सर्वं स्त्रीणां भूषणम् अलङ्करणम् आयुधम् अस्त्रञ्च एषां मनोहरणात् कामावेशेन पीडनाच्चेति भावः। शालिनीवृत्तं, मात्तौ गौ चेच्छालिनी वेदलोकैरिति तल्लक्षणात् ॥ ३ ॥

क्वचिदिति। क्वचित् सुभ्रूभङ्गैः भ्रूकौटिल्यशालिभिः, क्वचिदपि लज्जया परिणतैः सङ्कुचितैरिति यावत्, क्वचित् भीतित्रस्तैः भयचकितैः, क्वचिदपि लीलया भङ्गिविशेषेण विलसितैः स्फुरितैः, नवोढानां मुग्धानां नेत्राणि चलितानि येषु तथोक्तैः चञ्चलनयनैरित्यर्थः, एभिः वदनकमलैः मुखसरोजैः दृशः दर्शनव्यापाराः दृष्टिप्रसरा इति यावत्, स्फुरन्ती प्रसरन्ती लीला विलासो येषां तादृशानाम् अलीनां भ्रमराणां प्रकरैः समूहैः परिपूर्णा इव व्याप्ता इव दृश्यन्ते इति शेषः।

वक्त्रं चन्द्रविकासि पङ्कजपरीहासक्षमे लोचने
वर्णः स्वर्णमपाकरिष्णुरलिनीजिष्णुः कचानाञ्चयः।
वक्षोजाविभकुम्भसम्भ्रमहरौ गुर्वी नितम्बस्थली
वाचां हारि च मार्दवं युवतिषु स्वाभाविकं मण्डनम् ॥५॥
स्मितं किञ्चिद्वक्त्रे सरलतरलो दृष्टिविभवः
परिस्पन्दो वाचामभिनवविलासोक्तिसरसः।
गतीनामारम्भः किसलयितलीलापरिकरः
स्पृशन्त्यास्तारुण्यं किमिह न हि रम्यं मृगदृशः ॥६॥

शिखरिणीवृत्तं, रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणीति तल्लक्षणात् ॥४॥

वक्त्रमिति। चन्द्रवत् विकसति शोभते इति तच्छीलं वक्त्रं वदनं, लोचने नेत्रे पङ्कजेषु परिहासः अवज्ञया हास्यं तस्य क्षमे योग्ये कुञ्जजयिनी इति भावः, वर्णः कान्तिः स्वर्णं काञ्चनम् अपकरिष्णुः जिष्णुः, कचानां केशानां चयः सङ्घः अलिनी भ्रमरमाला तस्याः जिष्णुः विजेता, वक्षोजौ कुचौ इभकुम्भयोः गजकुम्भयोः सम्भ्रमहरौ गौरवजयिनौ, नितम्बस्थली नितम्बदेशः गुर्वी महती, वाचां वचनानां हारि मनोहारकं मार्दवं मृदुत्वञ्च, एतत् सर्वं युवतिषु तरुणीषु स्वाभाविकं सहजं मण्डनं भूषणम्। शार्दूलविक्रीडितं वृत्तम्। सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति तल्लक्षणात् ॥५॥

स्मितमिति। वक्त्रे वदने किञ्चित् मन्दं स्मितं हास्यं सरलतरलः सहजचपलः दृष्टिविभवः दृक्सम्भरः, वाचां परिस्पन्दः कथनम् अभिनवया विलासोक्त्या विलासभाषितेन सरसः मधुर इत्यर्थः, गतीनां पदविक्षेपाणाम् आरम्भः प्रक्रमः किसलयितः पल्लवितः विस्फुरित इति यावत् लीलापरिकरः विलासभङ्गिः यत्र तादृशः,

दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्त्य तिष्ठति बलादालिङ्गिता वेपते ।
निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
जाता वामतयैव सम्प्रति मम प्रीत्यै नवोढ़ा प्रिया ॥ ७ ॥

द्रष्टव्येषु किमुत्तमं ? मृगदृशां प्रेमप्रसन्नं मुखं
घ्रातव्येष्वपि किं ? तदास्यपवनः श्राव्येषु किं ? तद्वचः ।
किं स्वाद्येषु ? तदोष्ठपल्लवरसः स्पृश्येषु किं ? तत्तनुः
ध्येयं किं ? नवयौवनात् सहृदयैः सर्वत्र तद्विभ्रमः ॥ ८ ॥

अतः तारुण्ये यौवनं सम्प्राप्तवत्याः मृगदृशः कामिन्याः इह जगति किं रम्यं न हि, सर्वमेव रमणीयमित्यर्थः । शिखरिणी-वृत्तम् ॥ ६ ॥

दृष्टेति । नवोढ़ा अभिनवविवाहिता प्रिया दृष्टा निरीक्षिता सती मयेति शेषः अधः दृष्टिं ददाति अधोमुखी भवतीत्यर्थः आभाषिता आलपने कृतप्रयत्ना इति भावः आलापं न कुरुते उत्तरं न ददातीत्यर्थः शय्यायां परिवृत्त्य तिष्ठति, बलात् बलमाश्रित्य यावच्छेषम्पञ्चकी । आलिङ्गिता आश्लिष्टा सती वेपते कम्पते सखीषु वासभवनात् निर्यान्तीषु गच्छन्तीषु निर्गन्तुमेव ईहते चेष्टते । अतः सम्प्रति वामतयैव प्रतिकूलतयैव मम प्रीतये आनन्दाय जाता । शार्दूलविक्रीडितं वृत्तम् ॥ ७ ॥

द्रष्टव्येष्विति । द्रष्टव्येषु दर्शनीयेषु वस्तुषु मध्ये उत्तमम् उत्कृष्टं किम ? मृगदृशां मृगाक्षीणां प्रेम्णा प्रणयेन प्रसन्नं विकस्वरं मुखम् उत्कृष्टमिति शेषः । घ्रातव्येषु आघ्राणीयेषु वस्तुषु अपि मध्ये किम् उत्कृष्टमिति शेषः ? तासां मृगदृशाम् आस्यपवनः मुखमारुतः उत्तम इति शेषः । श्राव्येषु श्रवणीयेषु वस्तुषु मध्ये किम् उत्तममिति शेषः ? तासां मृगदृशां वचः वचनम् उत्तममिति शेषः ।

एताः स्खलद्वलयसंहतिमेखलोत्थ-
झङ्कारनूपुररवाहृतराजहंसाः ।
कुर्वन्ति कस्य न मनो विवशं तरुण्यो
वित्रस्तमुग्धहरिणीसदृशैः कटाक्षैः ॥ ९ ॥

कुङ्कुमपङ्ककलङ्कितदेहा गौरपयोधरकम्पितहारा ।
नूपुरहंसरणत्पदपद्मा कं न वशीकुरुते भुवि रामा ॥ १० ॥

स्वाद्येषु आस्वादनीयेषु वस्तुषु मध्ये उत्तमं किम ? तासां मृगदृशाम् ओष्ठपल्लवस्य रसः उत्तम इति शेषः । स्पृश्येषु स्पर्शविषयेषु वस्तुषु मध्ये किम् उत्तममिति शेषः ? तासा मृगदृशां तनुः अङ्गम् उत्तमेति शेषः । सहृदयैः सचेतोभिः जनैः ध्येयं चिन्तनीयं किम् ? नवयौवनात् सर्वत्र सर्वेषु अङ्गेषु तासा विभ्रमः विलास इत्यर्थः । उक्तिमत्युक्तिपरं पद्यमेतत् । शार्दूलविक्रीड़ितं वृत्तम् ॥ ८ ॥

एता इति । स्खलता चलतां वलयानां करभूषणविशेषाणां संहतेः समूहात् तथा मेखलायाः काञ्च्याः उत्थेन उद्गतेन झङ्कारेण नूपुराणां रवेण च आहूताः राजहंसाः याभिः तादृश्यः एताः तरुण्यः विश्वस्तानां निःशङ्कितानां मुग्धानां हरिणीनां मृगीणां सदृशैः कटाक्षैः कस्य जनस्य मनः विवशं न कुर्वन्ति ? सर्वस्यैव कुर्वन्तीत्यर्थः । वसन्ततिलकं वृत्तम् ॥ ९ ॥

कुङ्कुमेति । कुङ्कुमाना पङ्कैः द्रवैः कलङ्कितः कलुषितः देहो यस्याः तथोक्ता गौरयोः पयोधरयोः स्तनयोः कम्पितः तरलितः हारो यस्याः तादृशी, नूपुरौ एव हंसौ ताभ्यां रणती स्वनती पादपद्मे चरणकमले यस्याः तथाभूता वामा कान्ता भुवि पृथिव्यां कं जनं न वशीकुरुते ? सर्वमेव वशीकुरुते इत्यर्थः । दोधकं वृत्तं, दोधकमाहु भत्रितयाद्गुरुणाविति तल्लक्षणात् ॥ १० ॥

नूनं हि ते कविवरा विपरीतबोधा
ये नित्यमाहुरबला इति कामिनीनाम्।
याभिर्विलोलतरतारकदृष्टिपातैः
शक्रादयोऽपि विजितास्त्वबलाः कथं ताः? ॥ ११ ॥
नूनमाज्ञाकरस्तस्याः सुभ्रुवो मकरध्वजः।
यतस्तन्नेत्रसञ्चारसूचितेषु प्रवर्त्तते ॥ १२ ॥
केशाः संयमिनः श्रुतेरपि परं पारं गते लोचने
अन्तर्वक्त्रमपि स्वभावशुचिभिः कीर्णं द्विजानां गणैः।

नूनमिति। ये कामिनीनाम् अबला इति नित्यं सततम् आहुः, ते कविवराः कविश्रेष्ठाः विपरीतबोधाः विपर्य्यस्तबुद्धयः नूनं हि निश्चितमेव। याभिः कामिनीभिः विलोलतरा चञ्चलतरा तारका येषु तादृशैः दृष्टिपातैः शक्रादयः इन्द्रादयः अपि का कथान्येषामिति भावः विजिताः वशीकृताः, ताः अबलाः कथम्? नैवाबला इत्यर्थः। वसन्ततिलकं वृत्तम् ॥ ११ ॥

नूनमिति। मकरध्वजः कामः तस्याः सुभ्रुवः कान्तायाः आज्ञाकरः किङ्करः इति नूनम् उत्प्रेक्षे। यतः यस्मात् तस्याः सुभ्रुवः नेत्रसञ्चारेण सूदितेषु व्यथितेषु जनेष्विति शेषः सूचितेष्विति पाठे सूचितः संज्ञितः इषुः शरः यत्र तत् यथा तथा प्रवर्त्तते प्रसरति। अनुष्टुब्वृत्तम् ॥ १२ ॥

केशा इति। हे तन्वि! कृशाङ्गि! तव केशाः संयमिनः संयताः वेण्याकारेण बद्धा इति यावत् इन्द्रियसंयमवन्त इति ध्वनिः। लोचने नेत्रे श्रुतेरपि श्रवणेन्द्रियस्यापि वेदस्यापीति ध्वनिः परं पारं गते, आकर्णकृष्टे इति यावत् श्रुतिपारदृश्वनी इति ध्वनिः वक्त्रं वदनमपि स्वभावशुचिभिः द्विजानां दन्तानां ब्राह्मणानाञ्चेति ध्वनिः गणैः, दन्तविप्राण्डजा द्विजा इत्यमरः। अन्तः कीर्णं व्याप्तं

मुक्तानां सतताधिवासरुचिरं वक्षोजकुम्भद्वयम्
इत्थं तन्वि ! वपुः प्रशान्तमपि ते क्षोभं करोत्येव नः ॥१३॥

मुग्धे ! धनुष्मती केयमपूर्वापि च दृश्यसे ।
यथावद्धंसि चेतांसि गुणैरेव न सायकैः ॥ १४ ॥

सति प्रदीपे सत्यग्नौ सत्सु तारारवीन्दुषु ।
विना मे मृगशावाक्ष्या तमोभूतमिदं जगत् ॥ १५ ॥

वक्षोजकुम्भद्वयं स्तनकलसयुगलं मुक्तानां मौक्तिकसराणां सिद्धानाञ्चेति ध्वनिः सततमधिवासेन सततसङ्गेन रुचिरं मनोहरम् इत्थं प्रशान्तं सौम्यमपि प्रकृष्टशमपरमपीति ध्वनिः ते तव वपुः शरीरं नः अस्माकं क्षोभं व्यथां करोत्येव तत्प्राप्तिबाधकतयेति भावः । अत्र क्षोभहेतुं विना क्षोभकार्य्योत्पत्तेर्विभावनालङ्कारः, अक्षोभहेतौ सत्यपि तत्फलाभावात् विशेषोक्तिरलङ्कारश्चेत्यनयोः सङ्करः । तदुक्तं दर्पणे । विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते इति, सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधेति च । शार्दूलविक्रीडितं वृत्तम् ॥ १२ ॥

मुग्धे इति । हे मुग्धे ! का इयम् अपूर्वा अद्भुता धनुष्मती दृश्यसे त्वमिति शेषः । तथाहि गुणैः सौन्दर्य्यादिभिः मौर्वीभिश्चेति ध्वनिः एव यथावत् यथोचितं चेतांसि मनांसि हंसि विध्यसि, न सायकैः न शरैः हंसीति पूर्वेणान्वयः । धनुष्मान् शरेणैव लक्ष्यं विध्यति त्वं गुणैरेवेति तव धनुष्मत्त्वम् अपूर्वमिति भावः । अनुष्टुब्वृत्तम् ॥ १४ ॥

सतीति । प्रदीपे सति अग्नौ सति तारारवीन्दुषु नक्षत्रसूर्य्यचन्द्रमःसु सत्स्वपि मृगशावाक्ष्या कान्तया विना इदं जगत् मे मम तमोभूतम् अन्धकारमयं जातमिति शेषः । विरहिण उक्तिरियम् । अत्रापि विभावनाविशेषोक्त्योः सङ्करः । अनुष्टुब्वृत्तम् ॥ १५ ॥

उद्वृत्तः स्तनभार एष तरले नेत्रे चले भ्रूलते
रागान्धेषु तदोष्ठपल्लवमिदं कुर्वन्तु नाम व्यथाम् ।
सौभाग्याक्षरपंक्तिरेव लिखिता पुष्पायुधेन स्वयं
मध्यस्थापि करोति तापमधिकं रोमावली केन सा ॥१६॥

गुरुणा स्तनभारेण मुखचन्द्रेण भास्वता ।
शनैश्चराभ्यां पादाभ्यां रेजे ग्रहमयीव सा ॥ १७ ॥

तस्याः स्तनौ यदि घनौ जघनं विहारि
वक्त्रं च चारु तव चित्त ! किमाकुलत्वम् ।

उद्वृत्त इति । उद्वृत्तः उन्नतः अत्युन्नतत्वादिति भावः एष स्तनभारः तरले चञ्चले नेत्रे चले भ्रूलते तत् रक्तमिति भावः इदं ओष्ठपल्लवम् एतानि रागान्धेषु प्रणयान्धेषु जनेषु व्यथां पीड़ां कुर्वन्तु नाम । पुष्पायुधेन कामेन स्वयं सौभाग्याक्षरपङ्क्तिरेव इयं सुभगा भवेदित्येवं वर्णावली वेत्यर्थः । अत्रैवशब्द इवार्थः । लिखिता मध्यस्था मध्यदेशवर्त्तिनीत्यर्थः उदासीनेति ध्वनिः सा रोमावली केन हेतुना अधिकं तापं करोति जनयति ? कामिन्या रोमावलीदर्शनस्यातीवोद्दीपकत्वादिति भावः । अत्र माध्यस्थ्यस्य तापहेतुत्वाभावौचित्येऽपि तापकारणत्वेन कीर्त्तनात् विभावनालङ्कारः । शार्दूलविक्रीड़ितं वृत्तम् ॥ १६ ॥

गुरुणेति । सा कान्ता गुरुणा महता वृहस्पतिना च भास्वता कान्तिमता सूर्य्येण च मुखचन्द्रेण मुखेन चन्द्रेण च तथा शनैश्चराभ्यां मन्दगामिभ्यां तदाख्यग्रहाभ्याञ्च पादाभ्यां चरणाभ्यां ग्रहमयीव गुरु-चन्द्रसूर्य्यशनैश्चरग्रहस्वरूपेव रेजे शुशुभे । अत्र श्लेषानुप्राणितोत्प्रेक्षालङ्कारः । अनुष्टुब्वृत्तम् ॥ १७ ॥

तस्या इति । हे चित्त ! तस्याः कान्तायाः स्तनौ यदि घनौ निविड़ौ, जघनं कटिपुरोभागः यदि विहारि विशेषेण मनोहारकं,

पुण्यं कुरुष्व यदि तेषु तवास्ति वाञ्छा
पुण्यैर्विना न हि भवन्ति समीहितार्थाः ॥ १८ ॥

मात्सर्य्यमुत्सार्य्य विचार्य्य कार्य्यम्
आर्य्याः समर्य्यादमिदं वदन्तु ।
सेव्या नितम्बा किमु भूधराणाम् ?
उत स्मरस्मेरविलासिनीनाम् ? ॥ १९ ॥

संसारेऽस्मिन्नसारे परिणतितरले द्वे गती पण्डितानां
तत्त्वज्ञानामृताम्भःपुलकितमनसां यातु कालः कदाचित् ।
नोचेन्मुग्धाङ्गनानां स्तनजघनभराभोगसम्भोगिनीनां
स्थूलोपस्थस्थलीषु स्थगितकरतलस्पर्शलोलोद्यतानाम् ॥२०॥

वक्त्रं वदनञ्च यदि चारु मनोज्ञं, तदा तव व्याकुलत्वं व्याकुलत्वं किम् ? किमर्थम् ? कथं त्वं व्याकुलीभवसीत्यर्थः यदि तेषु स्तनादिषु भोक्तव्येष्विति भावः तव वाञ्छा अभिलाषः अस्ति, तदा पुण्यं कुरुष्व, पुण्यैः विना समीहितार्थाः इष्टार्थाः न हि भवन्ति । वसन्ततिलकं वृत्तम् ॥ १८ ॥

मात्सर्य्यमिति । आर्य्याः विद्वांसः मात्सर्य्यं विद्वेषम् उत्सार्य्य त्यक्त्वा कार्य्यं विचार्य्य विविच्य भूधराणां पर्वतानां किमु ? उत अथवा स्मरेण कामेन स्मेराः मृदुहासिन्यः याः विलासिन्यः कामिन्यः तासां नितम्बाः सेव्याः इदं समर्य्यादं सयुक्तिकं वदन्तु । समर्य्यादमुदा-हरन्त्विति वा पाठः । उपजातिवृत्तम् ॥ १९ ॥

संसारे इति । अस्मिन् असारे परिणतितरले परिणामचपले अचिरपरिणामिनि क्षणध्वंसिनीति यावत् संसारे पण्डितानां विदुषां द्वे गती उपायौ कालक्षेपणस्येति भावः । कदाचित् तत्त्वज्ञानमेव अमृतं तदेव अम्भः जलं तेन तत्पानेनेति भावः पुलकितम् आनन्दितं

मुखेन चन्द्रकान्तेन महानीलैः शिरोरुहैः।
पाणिभ्यां पद्मरागाभ्यां रेजे रत्नमयीव सा॥ २१॥

सम्मोहयन्ति मदयन्ति विडम्बयन्ति
निर्भर्त्सयन्ति रमयन्ति विषादयन्ति।
एताः प्रविश्य सदयं हृदयं नराणां
किन्नाम वामनयना न समाचरन्ति॥ २२॥

मनो येषां तथाभूतानां सतां कालः यातु गच्छतु। नीचैर् नट-
स्यथा स्तनयोर्जघनभरस्य विशालजघनस्य आभोगे विस्तारे यः
सम्भोगः सम्यग्भोगः तद्वतीनां मुग्धाङ्गनानां सुन्दरीणां स्थूलोपस्थ-
स्थलीषु विशालयोनिषु स्थगितेन स्थितेन निहितेनेति यावत् कर-
तलेन यः स्पर्शः तस्मिन् लालसत्वं चञ्चलं वा, लोलस्तृष्णायो-
रित्यमरः। उद्यतानां प्रवृत्तानां सतां कालः यात्वित्यनेन सम्बन्धः।
स्रग्धरावृत्तं, म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेय-
मिति तल्लक्षणात्॥ २०॥

मुखेनेति। सा कान्ता चन्द्रकान्तेन चन्द्रवत् रमणीयेन तदाख्य-
मणिना च, महानीलैः अतिनीलवर्णैः नीलकान्तमणिभिश्च शिरोरुहैः
केशैः तथा पद्मरागाभ्यां पद्मवत् रागः कान्तिर्ययोस्तादृशाभ्यां
तदाख्यरत्नाभ्याञ्च पाणिभ्यां भुजाभ्यां रत्नमयीव चन्द्रकान्तनीलकान्त-
पद्मरागरत्नस्वरूपेव रेजे शुशुभे। श्लेषानुप्राणितोत्प्रेक्षा। अनुष्टुब्-
वृत्तम्॥ २१॥

सम्मोहयन्तीति। एताः वामनयनाः कुटिलनेत्राः सुन्दरनयना
वा नार्य्यः नराणां पुंसां हृदयं सदयं प्रविश्य किं नाम न समाच-
रन्ति? सर्व्वमेव समाचरन्तीत्यर्थः। तथाहि सम्मोहयन्ति ज्ञानशून्यान्
कुर्व्वन्ति, मदयन्ति उल्लासयन्ति मत्तान् कुर्व्वन्ति वा, विडम्बयन्ति प्रतार-
यन्ति, निर्भर्त्सयन्ति तिरस्कुर्व्वन्ति, रमयन्ति रतं कारयन्ति, विषादयन्ति

विश्रम्य विश्रम्य वनद्रुमाणां
छायासु तन्वी विचचार काचित् ।
स्तनोत्तरीयेण करोद्धृतेन
निवारयन्ती शशिनो मयूखान् ॥ २३ ॥
अदर्शने दर्शनमात्रकामा
दृष्ट्वा परिष्वङ्गरसैकलोला ।
आलिङ्गितायां पुनरायताक्ष्याम्
आशास्महे विग्रहयोरभेदम् ॥ २४ ॥

विषयान् कुर्वन्ति च । दीपकालङ्कारः । तदुक्तं दर्पणे । अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते । अथ कारकमेकं स्यादनेकासु क्रियासु चेदिति । वसन्ततिलक वृत्तम् ॥ २२ ॥

विश्रम्येति । काचित् तन्वी वनद्रुमाणां वनतरूणां छायासु विश्रम्य विश्रम्य करोद्धृतेन हस्तेन ऊर्द्धं नातेन स्तनोत्तरीयेण स्तनावरणस्य वस्त्रेणेत्यर्थः शशिनः चन्द्रस्य मयूखान् किरणान् निवारयन्ती विचचार । विरहिण्याः वर्णनमिदं, तस्या एव चन्द्रमयूखस्योद्दीपकत्वेन तद्वारणाय वसनाञ्चलाच्छादनस्यौचित्यादित्यलम् । उपजातिवृत्तम् ॥ २३ ॥

अदर्शने इति । अदर्शने दर्शनाभावे आयताक्ष्या इति शेषः दर्शनमात्रकामाः दर्शनेनैव परितृप्तिकामिनः दृष्ट्वा आयताक्षीमिति शेषः परिष्वङ्गः आलिङ्गनं तस्मिन् यः रसः स्वादः तत्र एकलोला अतिसतृष्णा इत्यर्थः आयताक्ष्यां विशालनयनायां कान्तायामिति शेषः आलिङ्गितायां पुनः विग्रहयोः शरीरयोः अभेदं विश्लेषाभावमित्यर्थः आशास्महे आकाङ्क्षामः वयमिति शेषः । उपजातिवृत्तम् ॥ २४ ॥

मालती शिरसि जृम्भणोन्मुखी
चन्दनं वपुषि कुङ्कुमाविलम् ।
वक्षसि प्रियतमा मनोहरा
स्वर्ग एष परिशिष्ट आगतः ॥ २५ ॥

ऋतुवर्णनं तत्रादौ वसन्तः ।

परिमलभृतो वाताः शाखा नवाङ्कुरकोटयो
मधुरविरुतोत्कण्ठा वाचः प्रियाः पिकपक्षिणाम् ।
विरलसुरतस्वेदोद्रेका वधूवदनेन्दवः
प्रसरति मधौ रात्र्यां जातो न कस्य गुणोदयः ॥२६॥

मालतीति । जृम्भणोन्मुखी विकासेन उन्मुखा मालती तत्पुष्पमालेति यावत् शिरसि, कुङ्कुमेन आविलं सम्पृक्तं चन्दनं वपुषि शरीरे, मनोहरा प्रियतमा वक्षसि यदि स्यादिति शेषः, तदा एषः परिशिष्टः अपरः स्वर्गः आगतः उपस्थितः । रथोद्धतावृत्तं, रात् परैर्नरलगै रथोद्धतेति तल्लक्षणात् ॥ २५ ॥

परिमलेति । मधौ वसन्ते रात्र्यां कस्य वस्तुन इति शेषः गुणोदयः गुणोत्कर्षः जातः ननु न प्रसरति न विजृम्भते ? अपितु सर्वस्यैवेत्यर्थः । तथाहि वाताः वायवः परिमलभृतः विविधपुष्पाणां मलयजानाञ्च सौरभशालिनः, शाखाः तरुविटपाः नवा अङ्कुराणां कोटिः अग्रावयवा यासु तथोक्ताः नवकिसलयविकाशशालिन्य इति भावः पिकपक्षिणां पिकानां कोकिलानाम अन्येषाञ्च पक्षिणां मधुराः मनोहराः विरुतोत्कण्ठा उत्कण्ठाहारिण्यः यद्वा विशिष्टेषु रुतेषु उत्कण्ठा औत्सुक्यं याभिः तथाभूताः प्रियाः प्रीतिदायिन्यः वाचः, तथा वधूनां कामिनीनां वदनेन्दवः मुखचन्द्रमसः विरलः अल्पः सुरतात् स्वेदोद्रेकः घर्मसलिलोदयः येषु तादृशाः नातिशीतोष्णत्वात् समवस्थेति भावः । मधौ वसन्ते प्रसरति समुज्जृम्भमाणे सति

मधुरयं मधुरैरपि कोकिला-
कलकलैर्मलयस्य च वायुभिः ।
विरहिणः प्रणिहन्ति शरीरिणो
विपदि हन्त सुधापि विषायते ॥ २७ ॥

आवासः किल किञ्चिदेव दयितापार्श्वे विलासालसः
कर्णे कोकिलकाकलीकलरवस्मेरा लतामण्डपाः ।
गोष्ठी सत्कविभिः समङ्कतिपयैः सेव्याः सितांशोः कराः
केषाञ्चित्सुखयन्ति नेत्रहृदये चैत्रे विचित्राः क्षपाः॥२८॥

रात्र्यां कस्य गुणोदयः न जात इत्यप्यन्वयः समीचीन इति बोध्यम् । अत्र वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । हरिणीवृत्तं, नसमरसलागः षड्वेदहयैर्हरिणी मतेति तल्लक्षणात् ॥ २६ ॥

मधुरेति । अयं मधुरैरपि मधुरैः मनोहरैः कोकिलानां आकल-कलैः मलयस्य वायुभिश्च विरहिणः शरीरिणः प्राणिनः प्रणिहन्ति व्यथयन्तीति भावः । हन्त खेदे विपदि सुधापि अमृतमपि विषायते विषवत् आचरति । अत्र च विरहिणां विरह एव विपदिति बोध्यम् । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । तदुक्तं दर्पणे । सामान्यं वा विशेषेण विशेषस्तेन वा यदि । कार्यञ्च कारणेनेदं कार्येण च समर्थ्यते । साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा तत इति ॥ २७ ॥

आवास इति । दयितायाः कान्तायाः पार्श्वे किञ्चिदेव कियत्-क्षणमपीति भावः विलासेन ततमङ्गचेष्टया अलसः विवशः आवासः अवस्थानं कर्णे कोकिलानां काकलीकलरवेण सूक्ष्मकलध्वनिना स्मेराः विकसन्त्यः लतामण्डपाः लतागृहाणि, कतिपयैः सत्कविभिः समं सेव्या गोष्ठी सभा, सितांशोश्चन्द्रस्य कराः किरणाः, तथा चैत्रे विचित्राः मनोहारिण्यः क्षपाः रात्रयः केषाञ्चित् पुण्यवतामिति भावः नेत्रहृदये नयनमनसी सुखयन्ति । शार्दूलविक्रीडितं वृत्तम् ॥२८॥

पान्थस्त्रीविरहानलाहुतिकथानातन्वती मञ्जरी
माकन्देषु पिकाङ्गनाभिरधुना सोत्कण्ठमालोक्यते ।
अप्येते नवपाटलापरिमलप्राग्भारपाटच्चराः
वान्ति क्लान्तिहराः सुशीतलतराः श्रीखण्डशैलानिलाः ॥ २९ ॥
सहकारकुसुमकेसरनिकरभरामोदमूर्च्छितदिगन्ते ।
मधुरमधुविधुरमधुपे मधौ सदा भवेदुत्कण्ठा ॥ ३० ॥

ग्रीष्मः ।

अच्छाच्छचन्दनरसार्द्रकरा मृगाक्ष्यो
धारागृहाणि कुसुमानि च कौमुदी च ।

पान्थेति । अधुना वसन्ते पिकाङ्गनाभिः कोकिलाभिः माकन्देषु चूतेषु पान्थस्त्रीणां पथिकाङ्गनानां विरहानलेषु आहुतिकथान् हवनीयाज्यानभान् मकरन्दानिति भावः आतन्वती विस्तारयन्ती मञ्जरी सोत्कण्ठं सकौतुकम् आलोक्यते दृश्यते । अपि किञ्च एते नवानां पाटलानां पाटलापुष्पाणां परिमलस्य सौरभस्य प्राग्भारः उत्कर्षातिशयः अथवा पूर्वभारः प्रथमोद्गम इति यावत् तस्य पाटच्चराः तस्कराः तद्वाहिन इति यावत् क्लान्तिहराः श्रमहारिणः सुशीतलतराः अतिसुशीतलाः श्रीखण्डशैलानिलाः मलयवायवः वान्ति वहन्ति । शार्दूलविक्रीडितं वृत्तम् ॥ २९ ॥

सहकारेति । सहकारकुसुमानां चूतकुसुमानां केसरनिकरभरस्य किञ्जल्कनिचयातिशयस्य आमोदेन मूर्च्छितः व्याप्तः दिगन्तः यस्मिन् तादृशे मधुरेण मनोज्ञेन मधुना मकरन्देन तत्पानेनेति भावः विधुराः मत्ताः मधुपाः भ्रमरा यत्र तादृशे मधौ वसन्ते सदा उत्कण्ठा भवेत् विरहिणामिति शेषः आर्यावृत्तम् ॥ ३० ॥

अच्छेति । अच्छाच्छैरतिविशदैः चन्दनरसैः आर्द्रकराः सिक्तहस्ताः मृगाक्ष्यः मृगनेत्रा नार्यः धारागृहाणि जलयन्त्रमन्दिराणि

मन्दो मरुत् सुमनसः शुचि हर्म्यपृष्ठं
ग्रीष्मे मदश्च मदनश्च विवर्द्धयन्ति ॥ २१ ॥

स्रजो हृद्यामोदव्यजनपवनश्चन्द्रकिरणः
परागः कासारो मलयजरजः सिन्धुविशदम् ।
शुचिः सौधोत्सङ्गः प्रतनु वसनं पङ्कजदृशो
निदाघे तूर्णं तत्सुखमुपलभन्ते सुकृतिनः ॥ २२ ॥

सुधाशुभ्रन्धाम स्फुरदमलरश्मिः शशधरः
प्रियावक्त्राम्भोजं मलयजरजश्चातिसुरभि ।

कुसुमानि, कौमुदी ज्योत्स्ना, मन्दः सुमनसः कुसुमस्य सुमनसामिति पाठस्तु समीचीनः । मरुत् वायुः, शुचि पवित्रं हर्म्यपृष्ठम् अट्टालिकोपरिभाग इत्यर्थः ग्रीष्मे मदम् उल्लासम् आनन्दमिति यावत् मदनञ्च कामञ्च विवर्द्धयन्ति जनयन्ति । वसन्ततिलकं वृत्तम् ॥ २१ ॥

स्रज इति । स्रजः हाराः, हृद्यः मनोज्ञः आमोदः सौरभं यस्य तादृशः व्यजनपवनः वीजनवायुः, चन्द्रकिरणः, कासारो सरोवरसम्बन्धी पद्मसम्बन्धीति भावः, अत्र कासारशब्देन सरोजं लक्ष्यते । परागः रजः कमलरज इत्यर्थः, सिन्धुविशदं वारिवत्स्वच्छं मलयजरजः चन्दनधूलिः, शुचिः परिशुद्धः सौधोत्सङ्गः हर्म्यतलं, प्रतनु सूक्ष्मं वसनं पङ्कजदृशः कमलनेत्राः कान्ता इति शेषः । निदाघे ग्रीष्मे तूर्णं शीघ्रं सुकृतिनः पुण्यवन्तः तत्सुखं तत्तत्स्रगादीनां सम्भोगसुखम् उपलभन्ते प्राप्नुवन्ति । शिखरिणीवृत्तं, रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणीति तल्लक्षणात् ॥ २२ ॥

सुधेति । सुधया चूर्णेन शुभ्रं धौतं धाम गृहं स्फुरन्तः प्रसरन्तः अमलाः निर्मलाः रश्मयः किरणाः यस्य तादृशः शशधरश्चन्द्रः

स्रजो हृद्याः कौन्दास्तदिदमखिलं रागिणि जने
करोत्यन्तःक्षोभं न तु विषयसंसर्गविमुखे ॥ २३ ॥

वर्षासमयः ।

तरुणी वश्या दीपितकामा विकसज्जातीपुष्पसुगन्धिः ।
उन्नतपीनपयोधरभारा प्रावृट् कुरुते कस्य न हर्षम् ॥ २४ ॥

वियदुपचितमेघम्भूमयः कन्दलिन्यो
नवकुटजकदम्बामोदिनो गन्धवाहाः ।

प्रियायाः कान्तायाः वक्त्रान्भोज मुखकमलम् अतिसुरभि मलयजरज-चन्दनभूमिः हृद्याः मनोज्ञाः कौन्दाः स्रजः कुन्दकुसुमहाराः तत् इदम् अखिलं सर्वं रागिणि विषयवासनावति जने रागिणो जनस्येति भावः अन्तःक्षोभं मनोदुःखं तत्तदभावनिबन्धनमिति भावः करोति, विषयसंसर्गविमुखे वीतरागे इत्यर्थः न तु, वीतरागस्य नैतेषु मनःक्षोभः स्यादिति भावः । शिखरिणीवृत्तम् ॥ २३ ॥

तरुणीति । तरुणी नवीना वश्या लवङ्गकुसुमामोदवती वशवर्त्तिनी च दीपितकामा कामोद्दीपनी उद्दृप्तकामा च विकसज्जातीपुष्पैः सुगन्धिः शोभनगन्धशालिनी विकसितजातीकुसुमगन्धेन सौरभवती च उन्नताः उदिताः पीनाः पयोधराणां भाराः सङ्घाः यस्यां तथोक्ता उन्नतपीनस्तनाभोगा च प्रावृट् वर्षाकालः कस्य जनस्य हर्षम् आनन्दं न कुरुते ? सर्वस्यैव कुरुते इत्यर्थः । अत्र समानलिङ्गविशेषणाभ्यां प्रावृषि अप्रस्तुतायाः नायिकायाः व्यवहारसमारोपरूपा समासोक्तिः । तदुक्तं दर्पणे । समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः । व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुन इति ॥ २४ ॥

वियदिति । उपचिताः वृद्धिं गताः मेघाः यत्र तादृशं वियत् आकाशं, कन्दलिन्यः सञ्जातकन्दलकुसुमाः भूमयः, नवैः कुटजैः तदाख्यकुसुमैः कदम्बैश्च आमोदिनः सौरभवन्तः गन्धवाहाः वायवः,

शिखिकुलकलकेका एव रम्या वनान्ताः
सुखिनमसुखिनं वा सर्वमुत्कण्ठयन्ति ॥ ३५ ॥

उपरि घनं घनपटलं तिर्यग्गिरयोऽपि नर्तितमयूराः ।
वसुधा कन्दलधवला दृष्टिं पथिकः क्व पातयतु ॥ ३६ ॥

इतो विद्युद्वल्लीविलसितमितः केतकितरोः
स्फुरद्गन्धः प्रोद्यज्जलदनिनदस्फूर्जितमितः ।
इतः केकिक्रीडाकलकलरवः पक्ष्मलदृशां
कथं यास्यन्त्येते विरहदिवसाः सम्भृतरसाः ॥ ३७ ॥

शिखिकुलानां मयूरवृन्दानां कलाः मधुरास्फुटाः केकाः रवविशेषाः, केका वाणी मयूरस्येत्यमरः । रम्याः मनोहराः नवपत्रपुष्पोद्गमेनेति भावः वनान्ताः वनप्रान्ताः सुखिनम् अविरहिणम् असुखिनं विरहिणं वा सर्वं जनम् उत्कण्ठयन्ति कामावेशेन व्याकुलयन्तीत्यर्थः । मालिनीवृत्तं, ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ॥ ३५ ॥

उपरीति । उपरि आकाशे इति भावः घनं सान्द्रं घनपटलं मेघवृन्दं, तिर्यक् पार्श्वयोरिति यावत् गिरयः पर्वता अपि नर्त्तितमयूराः मयूराणां नर्त्तनशालिनः, वसुधा तलभूमिरित्यर्थः कन्दलैः नवाङ्कुरैः धवला, अतः पथिकः क्व कुत्र दृष्टिं सन्तापं पातयतु करोत्वित्यर्थः निर्वृतिं लभतामिति भावः । दृष्टिमित्यत्र दृष्टिमिति पाठः समीचीनः । आर्य्यावृत्तं, यस्याः प्रथमे पादे द्वादशमात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये पञ्चदश चतुर्थके सार्य्येति तल्लक्षणात् ॥ ३६ ॥

इत इति । इतः अस्मिन् प्रदेशे विद्युद्वल्लीनां विद्युल्लतानां विलसितं स्फुरणम्, इतः अस्मिन् स्थले केतकितरोः केतकवृक्षस्य

अमुष्मिन् संसारे तमसि नभसि प्रौढ़जलद-
ध्वनिप्राये तस्मिन् पतति दृषदां तीरनिचये ।
इदं सौदामिन्याः कनककमनीयं विलसितं
मुदञ्च ग्लानिञ्च प्रथयति पथिष्वेव सुदृशाम् ॥ ३८ ॥
आसारेषु न हर्म्यतः प्रियतमैर्यातुं यदा शक्यते
शीतोत्कम्पनिमित्तमायतदृशी गाढ़ं समालिङ्गते ।
जाताः शीतलशीकराश्च मरुतो वात्यन्तखेदच्छिदो
धन्यानां वत दुर्दिनं सुदिनतां याति प्रियासङ्गमे ॥ ३९ ॥

स्फुरन् प्रसरन् मन्द्रः, इतः अस्मिन् स्थाने प्रोद्यताम् उदयमानानां जलदानां मेघानां निनदश्च स्फूर्जितं वज्रनिष्पेषध्वनिः, इतः अस्मिन् देशे केकिनां मयूराणां क्रीड़ासु कलः मधुरः कलरवः, अतः एते पक्ष्मलदृशां घनलोमाढ्यनेत्राणां सम्भृतरसाः रागोद्दीपिनः विरह-दिवसाः कथं यास्यन्ति ? अतिक्लेशकरा एते दिवसा विरहिणामिति भावः । शिखरिणीवृत्तम् ॥ ३७ ॥

अमुष्मिन्निति । अमुष्मिन् संसारे जगत्यां तमसि अन्धकारे अन्धकाराच्छन्ने इति भावः नभसि आकाशे प्रौढ़ानां समुद्धतानां जलदानां मेघानां ध्वनिप्राये गर्जितभूयिष्ठे तस्मिन् दृषदां प्रस्तराणां तीरनिचये शरसमूहे करकानिचये इति भावः पतति सति इदं सौदामिन्याः विद्युतः कनककमनीयं काञ्चनवत् रमणीयं विलसितं स्फुरणं सुदृशां सुनयनानां पथिष्वेव मार्गेष्वेव स्थानेष्वित्यर्थः मुदञ्च हर्षञ्च ग्लानिञ्च व्यथाञ्च प्रथयति विस्तारयति । तत्र अविरहिणीनां मुदं विरहिणीनां ग्लानिमिति यथायथ बोद्धव्यम् । शिखरिणी-वृत्तम् ॥ ३८ ॥

आसारेष्विति । आसारेषु धारासम्पातेषु प्रियतमैः यदा हर्म्यतः सौधमन्दिरात् यातुं निर्गन्तुं न शक्यते, तदा आयतदृशी

## शरद्: ।

अर्द्धं नीत्वा निशायाः सरभससुरतायासखिन्नश्लथाङ्गः
प्रोद्भूतासह्यतृष्णो मधुमदनिरतो हर्म्यपृष्ठे विविक्ते ।
सम्भोगक्लान्तकान्ताशिथिलभुजलतातर्जितं कर्करान्तं
ज्योत्स्नाभिन्नाधरांशं पिबति न सलिलं शारदं मन्दभाग्यः ॥ ४० ॥

हेमन्ते दधिदुग्धसर्पिरशना माञ्जिष्ठवासोधृताः
काश्मीरद्रवसान्द्रदिग्धवपुषः खिन्ना विचित्रै रतैः ।

विशालनेत्रा कान्ता शीतेन तत्कम्पनिमित्तं गाढं यथा तथा समालिङ्गते समाश्लिष्यति । अत्यन्तखेदाच्छदः अतिशयेन श्रमापहाः शीतलशीकराः शीतलाम्बुकणवाहिनः मरुतः वायवस्तु जाता वा जाता एव । वाशब्दोऽत्रावधारणार्थः । अतः एतं हर्षे, प्रियासङ्गमे सति धन्यानां पुण्यवतां दुर्दिनं मेघाच्छन्नं दिनं सुदिनतां याति गच्छति । शार्दूलविक्रीडितं वृत्तम् ॥ ३९ ॥

अर्द्धमिति । मन्दभाग्यः दुर्भाग्यो जनः विविक्ते विजने, विविक्तौ पूतविजनाविल्यमरः । हर्म्यपृष्ठे सौधोपरिभागे सरभसेन सवेगेन अत्यन्तेनेत्यर्थः सुरतायासेन निधुवनपरिश्रमेण खिन्नं क्लान्तं श्लथं विवशम् अङ्गं यस्य तथाभूतः सन् निशायाः अर्द्धं नीत्वा अतिवाह्य मधुमदे सुरापानजनितोल्लासे निरतः प्रोद्भूता असह्या दुःसहा तृष्णा जलपानलालसा यस्य तादृशः अपि रताध्याहार्य्यः सम्भोगेन क्लान्तायाः कान्तायाः शिथिलतया खिन्नतयेति भावः भुजलतया तर्जितं तर्जनया दत्तं कर्करान्तं कर्करो दर्पणः तद्वत् अन्तं रम्यं स्वच्छमिति यावत् ज्योत्स्नया अभिन्नः अभेदं गतः अधरांशः निम्नभागः यस्य तथाभूतं शारदं शरत्कालभवं सलिलं न पिबति तर्जनया दत्ततया अभिमानादिति भावः । स्रग्धरावृत्तम् ॥ ४० ॥

हेमन्त इति । हेमन्ते धन्याः पुण्यवन्तः दधि दुग्धं सर्पिर्घृतं तानि अश्नन्ति भुञ्जते इति तथोक्ताः, मञ्जिष्ठया रञ्जितं माञ्जिष्ठं

पीनोरःस्थलकामिनीजनकृताश्लेषा गृहाभ्यन्तरे
ताम्बूलोद्दलपूगपूरितमुखा धन्याः सुखं शेरते ॥ ४१ ॥

शिशिरः ।

चुम्बन्तो गण्डभित्तीरलकवति मुखे शीत्कृतान्यादधाना
वक्षःसूत्कञ्चुकेषु स्तनभरपुलकोद्भेदमापादयन्तः ।
ऊरूनाकम्पयन्तः पृथुजघनतटात् स्रंसयन्तोऽंशुकानि
व्यक्तं कान्ताजनानां विटचरितभृतः शैशिरा वान्ति वाताः ४२

यत् वासः वसनं तत् धृतं यैः तथोक्ताः, काश्मीरद्रवेण कुङ्कुमरसेन सान्द्रं निविड़ं यथा तथा दिग्धं लिप्तं वपुः शरीरं येषां तथाभूताः गृहाभ्यन्तरे पीनं पीवरं कुचयोः सन्निवेशादिति भावः उरःस्थलं यस्य तादृशेन कामिनीजनेन कृताश्लेषाः कृतालिङ्गनाः अतएव विचित्रैः विविधैः रतैः सुरतैः खिन्नाः क्लान्ताः ताम्बूलाद्दलपूगाभ्यां पूरितं मुखं येषां तथोक्ताः सन्तः सुखं शेरते स्वपन्ति । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४१ ॥

चुम्बन्त इति । गण्डभित्तीः कपोलदेशान् चुम्बन्तः अलकवति चूर्णकुन्तलशालिनि मुखे शीत्कृतानि शीत्कारान् आदधाना जनयन्तः उत्कञ्चुकेषु उन्नमितकञ्चुकेषु, स्तनयोरुच्छ्रायातिशयादिति भावः वक्षःसु स्तनभरयोः पुलकोद्भेदं रोमहर्षविकाशम् आदधानाः उत्पादयन्तः ऊरून् आकम्पयन्तः पृथुजघनतटात् विशालकटिपुरोभागात् अंशुकानि वसनानि स्रंसयन्तः अतएव कान्तानां नारीणां व्यक्तं स्फुटं विटचरितभृतः लम्पटचरितशालिनः शैशिराः वाताः शिशिरवायवः वान्ति वहन्ति । स्रग्धरावृत्तम् । अत्र एकस्य धर्मं कथमन्यो वहत्विति विटचरितमिव चरितमिति बिम्बानुबिम्बवत्प्रत्यायनात् असम्भवद्वस्तु-सम्बन्धरूपा निदर्शना । तदुक्तं दर्पणे । सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शनेति ॥ ४२ ॥

केशानाकलयन् दृशो मुकुलयन् वासो बलादाक्षिपन्
आतन्वन् पुलकोद्गमं प्रकटयन्नालिङ्ग्य कम्पं शनैः ।
वारंवारमुदारशीत्कृतकृतो दन्तच्छदान् पीडयन्
प्रायः शैशिर एष सम्प्रति मरुत् कान्तासु कान्तायते ॥४३॥

असाराः सन्ततोऽमी विरतिविरसायासविषया
जुगुप्सन्तां यद्वा ननु सकलदोषास्पदमिति ।
तथाप्यन्तस्तत्त्वे प्रणिहितधियामप्यतिबल-
स्तदीयो नाख्येयः स्फुरति हृदये कोऽपि महिमा ॥४४॥

भवन्तो वेदान्तप्रणिहितधियां सन्तु गुरवो
विदग्धालापानां वयमपि कवीनामनुचराः ।

केशानिति । एष शैशिरो मरुत् वायुः सम्प्रति इदानीं केशान् आकलयन् स्पृशन्, दृशः नयनानि मुकुलयन् निमीलयन्, बलात् वासः वसनम् आक्षिपन् आकर्षन्, पुलकोद्गमं रोमाञ्चम् आतन्वन् विस्तारयन्, शनैः मन्दं मन्दम् आलिङ्ग्य कम्पं प्रकटयन् प्रापयन् वारंवारं पुनःपुनः उदारशीत्कृतकृतः महाशीत्कारयत दशनैः दन्तच्छदान् अधरान् पीडयन्, अतएव कान्तासु नारीषु प्रायः बाहुल्येन कान्तायते कान्तवत् आचरति । उपमालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥४३॥

असारा इति । एते विरतिः परिणामः तत्र विरसाः विषमाः आयासविषयाः खेदविषयाः कान्तासम्भोगादय इति भावः असाराः साररहिताः अस्थिरा इति यावत् यद्वा सकलदोषाणाम् आस्पदं स्थानम् इति हेतोः जुगुप्सन्तां निन्दन्तां नाम खलु । तथापि इदं जुगुप्सितत्वेऽपि अतिबलः अतिप्रबलः तदीयः कान्तासम्भोगस्य कोऽपि नाख्येयः अनिर्वचनीयः महिमा अन्तस्तत्त्वे आत्मन्तरिकवस्तु-दर्शने इति यावत् प्रणिहितधियां समर्पितमतीनामपि हृदये स्फुरति विकाशते । शिखरिणीवृत्तम् ॥ ४४ ॥

तथाप्येतद् भूमौ न हि परहितात् पुण्यमधिकं
न चास्मिन् संसारे कुवलयदृशो रम्यमपरम् ॥ ४५ ॥

किमिह बहुभिरुक्तैर्युक्तिशून्यैः प्रलापै-
र्द्वयमिह पुरुषाणां सर्वदा सेवनीयम् ।
अभिनवमदलीलालालसं सुन्दरीणां
स्तनभरपरिखिन्नं यौवनं वा वनं वा ॥ ४६ ॥

सत्यं जना ! वच्मि न पक्षपातात्
लोकेषु सर्वेषु च तथ्यमेतत् ।

भवन्त इति । भवन्तः वेदान्तेषु उपनिषत्सु प्रतिष्ठिता निश्चिता धीः यैः तथोक्तानां तत्त्वदर्शिनामिति भावः गुरवः सन्तु भवन्तु । वयमपि विदग्धः सरसः आलापः वचनं येषां तथोक्तानां कवीनां काव्यरचयितॄणाम् अनुचराः सङ्गिनः । तथापि भवादृग्भ्यः अस्माकं क्षुद्रबोधत्वेऽपीत्यर्थः एतत् सिद्धान्तितमस्माभिरिति शेषः भूमौ पृथिव्यां परहितात् परेषां हितकरणात् अधिकं पुण्यं न हि नैव अस्तीति शेषः तथा अस्मिन् संसारे कुवलयदृशः नीलोत्पलाक्ष्याः कान्तायाः अपरम् अन्यं रम्यं रमणीयं वस्तु न च अस्तीति शेषः । शिखरिणीवृत्तम् ॥ ४५ ॥

किमिति । इह संसारे बहुभिः युक्तिशून्यैः उक्तैः प्रलापैः अनर्थकैः वचोभिरित्यर्थः किम् ? न किमपि प्रयोजनमित्यर्थः । इह संसारे पुरुषाणाम् अभिनवमदलीलायां लालसं निरतं स्तनयोर्भरेण परिखिन्नं क्लान्तं सुन्दरीणां यौवनं वा वनं वा एतत् द्वयं द्वयोरन्यतरमिति भावः सर्वदा सेवनीयम् । मालिनीवृत्तं, ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ॥ ४६ ॥

सत्यमिति । हे जनाः ! सत्यं वच्मि वदामि, पक्षपातात् प्रणयात् स्नेहाद्वा नेत्यर्थः । सर्वेषु लोकेषु जगत्सु च एतत् तथ्यम् अवि-

नान्यन्मनोहारि नितम्बिनीभ्यो
दुःखैकहेतुर्न च कश्चिदन्यः ॥ ४७ ॥

प्राङ्मा मेति मनागमानितगुणं जाताभिलाषं ततः
सव्रीडं तदनु श्लथोद्यतमनु प्रत्यस्तधैर्य्यं पुनः ।
प्रेमार्द्रं स्पृहणीयनिर्भररहःक्रीडाप्रगल्भं ततो
निःशङ्काङ्गविकर्षणाधिकसुखं रम्यं कुलस्त्रीरतम् ॥ ४८ ॥

उरसि निपतितानां स्रस्तधम्मिल्लकानां
मुकुलितनयनानां किञ्चिदुन्मीलितानाम् ।

तथं निश्चितमिति भावः । नितम्बिनीभ्यः कान्ताभ्यः अन्यत् अपरम् मनोहारि वस्तु न अस्तीति शेषः, अन्यः नितम्बिनीभ्य इति शेषः कश्चित् विषय इति शेषः दुःखस्य एकहेतुः एकमात्रकारणं न च अस्तीति शेषः, नितम्बिन्य एव रमणीयं वस्तु दुःखनिदानञ्च नापरमिति निष्कर्षः । इन्द्रवज्रावृत्तम् ॥ ४७ ॥

प्राङिति । प्राक् प्रथमं मा मा न न इति मनाक् अल्पं यथा तथा अमानितः अस्वीकृतः गुणः धर्मविशेषः यस्य तथोक्तं, ततः ईषत्स्वादानन्तरमिति भावः जाताभिलाषं सञ्जाताकाङ्क्षं तदनु तदनन्तरं सव्रीडं सलज्जम् अनु तदनन्तरं श्लथं लघु यथा तथा उद्यतं मन्दप्रवृत्तमित्यर्थः पुनः तदनन्तरं प्रत्यस्तधैर्य्यं ध्वस्तधैर्य्यं, ततः धैर्य्यध्वंसानन्तरं प्रेमात् प्रणयातिरेकात् दुःस्पृहणीया दुराकाङ्क्षणीया या निर्भररहःक्रीडा आत्यन्तिको विहारः तत्र प्रगल्भं लोलं लालसमिति यावत् ततः निःशङ्कं यथा तथा अङ्गानां विकर्षणेन मर्द्दनेन अधिकं सुखं यत्र तथाभूतं कुलस्त्रीणां कुलकामिनीनां रतं सुरतं रम्यं मनोहरम् । शार्दूलविक्रीडितं वृत्तम् ॥ ४८ ॥

उरसीति । भाग्यवन्तः जनाः उरसि वक्षसि निपतितानां स्रस्ताः स्खलिताः धम्मिल्लाः संयतकेशाः यासां तथोक्तानां, धम्मिल्लाः

सुरतजनितखेदादार्द्रगण्डस्थलीनां
अधरमधु वधूनां भाग्यवन्तः पिबन्ति ॥ ४९

आमीलितनयनानां
यत् सुरतरसोऽनुसंविदं कुरुते ।
मिथुनैर्मिथोऽवधारित-
मवितथमिदमेव कामनिर्वहणम् ॥ ५० ॥

इदमनुचितमक्रमश्च पुंसां
यदिह जरास्वपि मान्मथा विकाराः ।
यदपि च न कृतं नितम्बिनीनां
स्तनपतनावधि जीवितं रतं वा ॥ ५१ ॥

संयताः कचा इत्यमरः । सुखमीलितनयनानां सुखभरेण निमीलितनेत्राणां किञ्चित् ईषत् उन्मीलितानाम् उन्मीलितचक्षुषामिति भावः सुरत-जनितखेदात् आर्द्रगण्डस्थलीनां स्विन्नकपोलानां वधूनां कान्तानाम् अधरमधु अधरामृतं पिबन्ति । मालिनीवृत्तम् ॥ ४९ ॥

आमीलितेति । आमीलितनयनानाम् ईषन्मुकुलितनेत्राणां यूनां युवतीनाञ्चेति शेषः सुरतरसः सुरतास्वादः यत् अनुसंविदं चेतना-संवलनं कुरुते चित्तस्थानं हृदयं प्रविशतीति भावः, इदं कामनिर्वहणं मन्मथपरिणमनं मिथुनैः स्त्रीपुरुषैः मिथः परस्परम् अवितथं सत्यम् अवधारितं निर्णीतम् । आर्य्यावृत्तम् ॥ ५० ॥

इदमिति । इह संसारे जरासु वार्द्धक्येषु अपि पुंसां यत् मान्मथाः विकाराः कामविकृतयः भवन्तीति शेषः इदम् अनुचितम् अक्रमञ्च अनियमश्च । यदपि यच्च नितम्बिनीनां कामिनीनां स्तन-पतनावधि जीवितं जीवनं वा रतं वा न कृतं न निर्णीतं विधिनेति शेषः इदमपि अनुचितमक्रमश्चेति शेषः । पुष्पिताग्रावृत्तम् ॥ ५१ ॥

एतत्कामफलं लोके यद्द्वयोरेकचित्तता
अन्यचित्तकृते कामे शवयोरिव सङ्गमः ॥ ५२ ॥

प्रणयमधुराः प्रेमोद्गाढा रसादलसास्तथा
भणितिमधुरा मुग्धप्रायाः प्रकाशितप्रेमदाः ।
प्रकृतिसुभगा विस्रम्भार्हाः स्मरोदयदायिनः
रहसि किमपि स्वैरालापा हरन्ति मृगीदृशाम् ॥ ५३ ॥

आवासः क्रियतां गाङ्गे पापहारिणि वारिणि ।
स्तनमध्ये तरुण्या वा मनोहारिणि हारिणि ॥ ५४ ॥

एतदिति । द्वयोः स्त्रीपुंसयोः यत् एकचित्तता अभिन्नमनो-वृत्तित्वं लोके जगति एतत् कामफलं मदनकार्य्यम् । कामे सम्भोगे विषये अन्यत्र पुंसि स्त्रियां वेति भावः चित्तकृते मनसि कृते सति शवयोरिव मृतदेहयोरिव सङ्गमः भवतीति शेषः न तत्र किमपि सुखमिति भावः । अनुष्टुप् वृत्तम् ॥ ५२ ॥

प्रणयेति । प्रणयेन प्रेमातिशयेन मधुराः मनोहराः प्रेम्णा उद्-गाढ़ाः निविड़ाः रसात् अनुरागात् अलसाः मन्दाः परिमिता इति यावत् भणित्या वाग्भङ्गिविशेषेणेत्यर्थः मधुराः मनोज्ञाः, झटि-तीति पाठे झटिति श्रवणमात्रेणेत्यर्थः । मुग्धप्रायाः प्रायेण सरलाः प्रकाशितं यथा तथा प्रेमदा प्रणयदायिन्य इत्यर्थः प्रकृत्या स्वभावेन सुभगाः चारवः विस्रम्भार्हाः विश्वासयोग्याः स्मरस्य कामस्य उदय-दायिनः वृद्धिकराः मृगीदृशां कामिनीनां रहसि विजने किमपि अनिर्वचनीया इति भावः स्वैरालापाः स्वेच्छाकृतवाक्यानि हरन्ति मोहयन्ति । हरिणीवृत्तं, नसमरसलागः षड्वेदैर्हयैर्हरिणी मतेति तल्लक्षणात् ॥ ५३ ॥

आवास इति । पापहारिणि गाङ्गे वारिणि गङ्गाजले, तरुण्याः

प्रियपुरतो युवतीनां तावत्पदमातनोतु हृद्विमानः ।
भवति न यावच्चन्दनतरुसुरभिर्मधुनिर्मलः पवनः ॥ ५५॥

दुर्विरक्तप्रशंसा ।

तावदेव कृतिनामपि स्फुरत्येष निर्मलविवेकदीपकः ।
यावदेव न कुरङ्गचक्षुषां ताड्यते चपललोचनाञ्चलैः॥ ५६॥

वचसि भवति सङ्गत्यागमुद्दिश्य वार्ता
श्रुतिमुखरमुखानां केवलं पण्डितानाम् ।
जघनमरुणरत्नग्रन्थिकाञ्चीकलापं
कुवलयनयनानां को विहातुं समर्थः ॥ ५७ ॥

मनोहारिणि हारिणि हारशोभिते स्तनमध्ये वा आवासः क्रियताम् । अनुष्टुब्वृत्तम् ॥ ५४ ॥

प्रियेति । प्रियस्य कान्तस्य पुरतः अग्रतः युवतीनां हृदः हृदयस्य विमानः विशिष्टो मानः तावत् पदम् आतनोतु विस्तारयतु, यावत् चन्दनतरुसुरभिः मधुना वसन्तेन निर्मलः पवनः न भवति न वहति । भवतीत्यत्र वहतीति पाठान्तरं समीचीनम् । आर्य्यावृत्तम् ॥ ५५ ॥

तावदिति । कृतिनां तत्त्वदर्शिनामपि तावदेव एष निर्मलविवेकदीपकः स्फुरति प्रकाशते, यावदेव कुरङ्गचक्षुषां मृगदृशां रमणीनां चपललोचनाञ्चलैः चञ्चलनयनप्रान्तैः न ताड्यते न निरोध्यते इति यावत् । स्त्रीणां कटाक्षविद्धो विवेकं विस्मरतीति भावः । रथोद्धतावृत्तं, रात् परैर्नरलगै रथोद्धतेति तल्लक्षणात् ॥ ५६ ॥

वचसीति । श्रुत्या वेदपाठेन मुखरं मुखं येषां तथाभूतानां वेदपारदृश्वनामिति भावः पण्डितानां विदुषां केवलं वचसि वाक्ये न तु मनसीति भावः सङ्गत्यागं विषयाणामिति शेषः उद्दिश्य वार्त्ता आलापः भवति । को जनः कुवलयनयनानां नीलोत्पलाक्षीणाम्

स्वपरप्रतारकोऽसौ निन्दति योऽलीकं पण्डितो युवतीः ।
यस्मात्तपसोऽपि फलं स्वर्गः स्वर्गस्यापि फलं तथा स रसः॥५८

मत्तेभकुम्भदलने भुवि सन्ति शूराः
केचित् प्रचण्डमृगराजवधेऽपि दक्षाः ।
किन्तु ब्रवीमि बलिनां पुरतः प्रसह्य
कन्दर्पदर्पदलने विरला मनुष्याः ॥ ५९ ॥

सन्मार्गे तावदास्ते प्रभवति च नरस्तावदेवेन्द्रियाणां
लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव ।
भ्रूचापाकृष्टमुक्ताः श्रवणपथगता नीलपक्ष्माण एते
यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति ॥६०

अरुणानां रत्नानां प्रचयो यत्र तादृशः काञ्चीकलापः रशनादाम यस्मिन् तादृशं जघनं कटिपुरोभागं विद्वान् त्यक्तुं समर्थः? न कोऽपीत्यर्थः । मालिनीवृत्तम् ॥ ५७ ॥

स्वपरेति । यः पण्डितः अलीकं वृथा युवतीः निन्दति, असौ स्वपरप्रतारकः स्वस्य आत्मनः परस्य च प्रवञ्चकः । यस्मात् तपसः अपि फलं स्वर्गः, स्वर्गस्यापि तथा स एव रसः युवतीनां सम्भोगास्वादः फलम् । आर्य्यावृत्तम् ॥ ५८ ॥

मत्तेभेति । भुवि पृथिव्यां मत्तानाम् इभानां हस्तिनां कुम्भदलने कुम्भविदारणे शूराः बलवन्तः सिंहा इति भावः सन्ति विद्यन्ते । केचित् प्रचण्डानां मृगराजानां सिंहानामपि बधे दक्षाः समर्थाः सन्तीति शेषः । किन्तु अहं प्रसह्य बलेन बलिनां बलवतां पुरतः अग्रतः ब्रवीमि कन्दर्पस्य मदनस्य दर्पदलने दर्पहरणे मनुष्याः विरलाः न शक्ता इति भावः । वसन्ततिलकं वृत्तम् ॥ ५९ ॥

सन्मार्गे इति । भ्रूचापेन भ्रूधनुषा आकृष्टाः मुक्ताश्च निक्षिप्ताश्च श्रवणपथगताः आकर्णदीर्घा इत्यर्थः नीलानि पक्ष्माणि लोमानि

उन्मत्तप्रेमसंरम्भादारभन्ते यदङ्गनाः ।
तत्र प्रत्यूहमाधातुं ब्रह्मापि खलु कातरः ॥ ६१ ॥

तावन्महत्त्वं पाण्डित्यं कुलीनत्वं विवेकिता ।
यावज्ज्वलति नाङ्गेषु स्वतः पञ्चेषुसायकः ॥ ६२ ॥

शास्त्रज्ञोऽपि प्रथितविनयोऽप्यात्मबोधोऽपि बाढं
संसारेऽस्मिन् भवति विरलो भाजनं सद्गतीनाम् ।
येनैतस्मिन्निरयनगरद्वारमुद्घाटयन्ती
वामाक्षीणां भवति कुटिला भ्रूलताकुञ्चितेव ॥ ६३ ॥

येषां तथोक्ताः एते धृतिमुषः धैर्य्यध्वंसिनः लीलावतीनां विलासिनीनां दृष्टिबाणाः कटाक्षशराः हृदि यावत् न पतन्ति, नरः तावत् सन्मार्गे शिष्टाचारे आस्ते तिष्ठति, तावदेव इन्द्रियाणां प्रभवति प्रभुर्भवति, तावत् लज्जां विधत्ते करोति, तावदेव विनयमपि नम्रतामपि समालम्बते आश्रयति न त्यजतीति भावः । स्रग्धरावृत्तम् ॥ ६० ॥

उन्मत्तेति । जनाः उन्मत्तस्य उत्कटस्य प्रेम्णः संरम्भात् संवेगात् यत् अङ्गनाः अविनयादिकं यावत् आरभन्ते कुर्वन्ति, ब्रह्मापि का कथान्येषामिति भावः तत्र तदारम्भे प्रत्यूहं विघ्नम् आधातुं जनयितुं कातरः खलु असमर्थ एव । अनुष्टुब्वृत्तम् ॥ ६१ ॥

तावदिति । यावत् अङ्गेषु पञ्चेषुसायकः मदनशरः स्वतः आत्मना न ज्वलति न दीप्यते, तावत् महत्त्वम् औदार्य्यम्, पाण्डित्यं विद्यावत्त्वं, कुलीनत्वं सत्कुलजातत्वं, विवेकिता विज्ञत्वञ्च तिष्ठतीति शेषः । कामपीडितस्य महत्त्वादयो नश्यन्तीति भावः । अनुष्टुब्वृत्तम् ॥६२॥

शास्त्रज्ञ इति । अस्मिन् संसारे शास्त्रज्ञः अपि प्रथितः प्रख्यातः विनयः शिष्टाचारः यस्य तादृशोऽपि बाढम् अत्यर्थम् आत्मबोधः आत्मज्ञानवानपि विरलः अल्पो जनः सद्गतीनां सत्पदानां भाजनं पात्रं भवति । येन हेतुना एतस्मिन् संसारे निरयनगरद्वारं नरक-

कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलो
व्रणी पूयक्लिन्नः कृमिकुलशतैरावृततनुः ।
क्षुधाक्षामो जीर्णः पिठरककलापार्पितगलः
शुनीमन्वेति श्वा हतमपि निहन्त्येव मदनः ॥ ६४ ॥

स्त्रीमुद्रां झषकेतनस्य जननीं सर्वार्थसम्पत्करीं
ये मूढाः प्रविहाय यान्ति कुधियो मिथ्याफलान्वेषिणः ।
ते तेनैव निहत्य निर्दयतरं नग्नीकृता मुण्डिताः ।
केचित्पञ्चशिखीकृताश्च जटिलाः कापालिकाश्चापरे ॥ ६५ ॥

पुरद्वारम् उद्घाटयन्ती आकुञ्चितेव केनापि सङ्कोचं नीतेव कुटिला वामाक्षीणां वामनयनानां भ्रूलता भवति तिष्ठति । वामाक्षीणां कुटिलभ्रूविद्धः कोऽपि निष्कृतिं न लभते इति भावः । मन्दाक्रान्तावृत्तम् ॥ ६२ ॥

कृश इति । कृशः क्षीणः काणः दृष्टिहीनः खञ्जः चरणरहितः श्रवणरहितः बधिरः पुच्छविकलः लाङ्गूलरहितः व्रणी क्षताङ्गः पूयक्लिन्नः क्षरत्पूय इत्यर्थः कृमिकुलानां क्षुद्रकीटविशेषाणां शतैः आवृततनुः व्याप्तदेहः, क्षुधया क्षामः क्षीणः जीर्णः वृद्धः पिठरककलापेन रोगविशेषेणेति भावः अर्पितगलः बद्धकण्ठ इति यावत् श्वा कुक्कुरः शुनीं कुक्कुरीम् अन्वेति अनुसरति सम्भोगेच्छयेति भावः, अतः मदनः कामः हतमपि निहन्त्येव । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । शिखरिणीवृत्तम् ॥ ६४ ॥

स्त्रीमुद्रामिति । ये मूढाः मूर्खाः कुधियः कुबुद्धयः मिथ्याफलान्वेषिणः वृथाशास्त्रानुसन्धायिनः जनाः झषकेतनस्य कामस्य जननीम् उद्दीपनीमित्यर्थः मातरमिति ध्वनिः सर्वार्थसम्पत्करीं सर्वकार्यसम्पत्तिविधायिनीं स्त्रीमुद्रां स्त्रीरूपां मुद्रां मुदो हर्षान् राति ददातीति तथोक्तां स्त्रीरत्नमिति भावः प्रविहाय परित्यज्य यान्ति गच्छन्ति न

विश्वामित्रपराशरप्रभृतयो वाताम्बुपर्णाशना-
स्तेऽपि स्त्रीमुखपङ्कजं सुललितं दृष्ट्वैव मोहं गताः ।
शाल्यन्नं सघृतं पयोदधियुतं ये भुञ्जते मानवा-
स्तेषामिन्द्रियनिग्रहो यदि भवेत् विन्ध्यस्तरेत्सागरम् ॥६६

स्त्रीणां परित्यागप्रशंसा ।

संसारेऽस्मिन्नसारे कुनृपतिभवनद्वारसेवावलम्ब-
व्यासङ्गध्वस्तधैर्याः कथममलधियो मानसं संविदध्युः ।
यद्येताः प्रोद्यदिन्दुद्युतिनिचयभृतो न स्युरम्भोजनेत्राः
प्रेङ्खत्काञ्चीकलापाः स्तनभरविनमन्मध्यभागास्तरुण्यः ॥६७॥

आक्रियन्त इति भावः, ते जनाः तेनैव आपीतनेनैव निर्दयतरम् अतिनिष्ठुरं यथा तथा निहत्य जनन्या अनादरादिति भावः नग्नीकृताः विवसनीकृताः, मुण्डिताः कृतशिरोमुण्डनाः । केचित् पञ्चशिखीकृताश्च जटिलाश्च जटावन्तश्च, अपरे कापालिका कपालधारिणश्च कृता इति शेषः । कामशराच्चैः कामभोगमप्राप्यैव वैराग्येण तादृशा अवस्था जाता इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ६५ ॥

विश्वामित्रेति । ते प्रसिद्धाः वाताम्बुपर्णाशनाः वायुभोजिनः अम्बुमात्रपायिनः पत्रमात्राशिनश्च विश्वामित्रपराशरप्रभृतयः महामुनय इति भावः अपि सुललितम् अतिमनोहरम् स्त्रीणां मुखपङ्कजं दृष्ट्वैव मोहं गताः । ये मानवाः सघृतं पयोदधियुतं दुग्धदधिसंवलितं शाल्यन्नं शालिधान्यस्यान्नं तमन्नं भुञ्जते, तेषाम् इन्द्रियनिग्रहः यदि भवेत् तदा विन्ध्यः गिरिरिति शेषः सागरं तरेत् । शार्दूलविक्रीडितं वृत्तम् ॥ ६६ ॥

संसारे इति । अस्मिन् असारे साररहिते दुःखबहुले इति भावः संसारे अमलधियः निर्मलमतयः कुनृपतेः कुत्सितस्य प्रभोरिति यावत् भवनद्वारस्य सेवावलम्बव्यासङ्गेन सेवावलम्बनसम्पर्केण ध्वस्तं विगतं

सिद्धाध्यासितकन्दरे हरवृषस्कन्धावगाढ़द्रुमे
गङ्गाधौतशिलातले हिमवतः स्थाने स्थिते श्रेयसि ।
कः कुर्वीत शिरःप्रणाममलिनं मानं मनस्वी जनो
यद्युत्त्रस्तकुरङ्गशावनयना न स्युः स्मरास्त्रं स्त्रियः ॥६८॥
संसार ! तव निस्तारपदवी न दवीयसी ।

धैर्य्यं येषां तथाभूताः नितरां विरज्यमानचित्ता इति भावः कथं केन प्रकारेण मानसं संविदध्युः सञ्चारयेयुः क्षणमपि सुखेन कालं नयेयुरिति भावः, यदि प्रोद्यतः उदयमानस्य इन्दोश्चन्द्रस्य द्युतिनिचयभृतः कान्तिसमूहधारिण्यः चन्द्रकान्ता इति यावत् अम्भोजनेत्राः पद्मनयनाः प्रेङ्खन् झनत्कारं कुर्वन् काञ्चीकलापः रशनादाम यासां तथाभूताः स्तनभरेण विनमन् मध्यभागः यासां तादृश्यः एताः तरुण्यः न स्युः न तिष्ठेयुः । स्वच्छे यदि तादृशी तरुणी स्यात् यत् सकाशे चित्तं प्रसीदति तदा प्रभुनिकटे दासत्वक्लेशोऽपि सह्यते इति भावः । स्रग्धरावृत्तम् ॥ ६७ ॥

सिद्धेति । यदि उत्त्रस्तकुरङ्गशावनयनाः चकितमृगशावनेत्राः स्त्रियः स्मरस्य कामस्य अस्त्रं न स्युः न तिष्ठेयुः, तदा सिद्धैः देवयोनिविशेषैः तपःसिद्धिं गतैर्वा अध्यासिता अधिष्ठिता कन्दरा गुहा यस्य तादृशे हरस्य यो वृषः तस्य स्कन्धेन ककुदेति यावत् अवगाढ़ः उद्घर्षितः द्रुमः तरुः यत्र तथोक्ते गङ्गया धौतं क्षालितं शिलातलं यस्य तथाभूते अतिपवित्रे इति भावः हिमवतः हिमाद्रेः श्रेयसि सर्वोत्कृष्टे स्थाने स्थिते सति कः मनस्वी प्रशस्तमनाः जनः मानं स्वगौरवं शिरसा प्रणामेन प्रणत्या मलिनं खर्वमित्यर्थः कुर्वीत ? न कोऽपीत्यर्थः । कामशरार्त्त एव स्त्रीषु प्रणत्या स्वगौरवं नाशयतीति भावः स्त्रीनिमित्तं हि प्रभुसेवा ततश्च अपमानस्वीकारः इति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ६८ ॥

संसारेति । रे संसार ! तव निस्तारपदवी त्वत्तः परित्राणमार्गं

अन्तरा दुस्तरा न स्युर्यदि रे मदिरेक्षणाः ॥ ६९ ॥

यौवनप्रशंसा ।

राजन् ! तृष्णाम्बुराशेर्न हि जगति गतः कश्चिदेवावसानम्
किं वार्थोच्चैः प्रभूतैः स्ववपुषि गलिते यौवने सानुरागे ।
गच्छामः सद्म यावद्विकसितमुदेन्दीवरालोकनीनाम्
आक्रम्याक्रम्यरूपं झटिति न जरया लुप्यते प्रेयसीनाम् ॥७०॥

रागस्यागारमेकं नरकशतमहादुःखसम्प्राप्तिहेतु-
र्मोहस्योत्पत्तिबीजं जलधरपटलं ज्ञानताराधिपस्य ।

इत्यर्थः न दवीयसी नातिदूरवर्त्तिनीत्यर्थः, यदि अन्तरा मध्ये मदिरेक्षणाः मत्तखञ्जननयनाः कामिन्य इति शेषः दुस्तराः अपाराः न स्युः न भवेयुः । स्त्रीषु प्रणयरहिता एव संसारात् मुच्यन्ते इति भावः । अनुष्टुब्वृत्तम् ॥ ६९ ॥

राजन्निति । हे राजन् ! जगति कश्चिदेव कोऽपीत्यर्थः तृष्णाम्बुराशेः वासनासागरस्य अवसानं पारं न हि गतः नैव प्राप्तः । स्ववपुषि निजशरीरे सानुरागे यौवने गलिते भ्रष्टे सति तैः प्रभूतैः प्रचुरैः अर्थैः धनैः किं वा ? न किमपि प्रयोजनमित्यर्थः । यावत् जरया विकसितं यत् कुमुदम् इन्दीवरं नीलोत्पलञ्च तद्वत् आलोकन्ते अवलोकयन्तीति तथोक्तानां प्रेयसीनां कान्तानां रूपं सौन्दर्य्यं आक्रम्य आक्रम्य झटिति न लुप्यते न नाश्यते तावत् सद्म गृहं गच्छामः गृहे तिष्ठाम इति भावः । यावत् प्रेयस्याः मम च जरा न आक्रामति तावत् प्रेयस्या सह सङ्गं करोमीति तात्पर्य्यम् । स्रग्धरावृत्तम् ॥ ७० ॥

रागस्येति । अस्मिन् लोके जगति यौवनात् अन्यात् अपरं रागस्य विषयवासनायाः एकमद्वितीयम् अगारं गृहं नरकाणां शतं

कन्दर्पस्यैकमित्रं प्रकटितविविधस्पष्टदोषप्रबन्धं
लोकेऽस्मिन्नह्यनर्थं निजकुलदहनं यौवनादन्यदस्ति ॥७१॥

शृङ्गारद्रुमनीरदे बहुतरक्रीडारसस्रोतसि
प्रद्युम्नप्रियबान्धवे चतुरतामुक्ताफलोदन्वति ।
तन्वीनेत्रचकोरपारणविधौ सौभाग्यलक्ष्मीनिधौ
धन्यः कोऽपि न विक्रियां कलयति प्राप्ते नवे यौवने ॥७२॥

## कामिनीगर्हणम् ।

कान्तेत्युत्पललोचनेति विपुलश्रोणीभरेत्युत्सुकः

तत्र यत् महादुःखं तस्य यस्याप्तिहेतुः यस्याप्तेः कारणं, मोहस्य अज्ञानस्य उत्पत्तिबीजम् उद्भवनिदानं ज्ञानताराधिपस्य ज्ञानचन्द्रमसः; जलधरपटलं मेघवृन्दम् आवरकमिति यावत्, कन्दर्पस्य कामस्य एकम् अद्वितीयं मित्रं, प्रकटितः प्रकाशितः विविधः बहुप्रकारः स्पष्टः दोषाणां प्रबन्धः निचयः येन यस्मिन् वा तत् निजकुलदहनं स्ववंश-दहनकारि अनर्थम् अनिष्टसाधनम् अस्तीति शेषः न हि अस्ति नैव विद्यते । स्रग्धरावृत्तम् ॥ ७१ ॥

शृङ्गारेति । कोऽपि धन्यः पुण्यवान् जनः शृङ्गारद्रुमस्य निधुवनवृक्षस्य नीरदे जलदे जलदो यथा वृक्षं पुष्णाति यौवनं तथा शृङ्गारमिति भावः, बहुतरा या क्रीडा विहारः तस्याः रसः स्वादः तस्य स्रोतसि प्रवाहस्वरूपे इति यावत्, प्रद्युम्नस्य कामस्य प्रियबान्धवे उद्दीपकत्वादिति भावः, चतुरता रसिकता एव मुक्ताफलानि तेषाम् उदन्वान् समुद्रः तस्मिन्, तन्वीनां युवतीनां नेत्रचकोरस्य नयनरूप-चकोरपक्षिणः पारणे सुधापाने विधुः चन्द्रः तस्मिन् सौभाग्यस्य वाल्लभ्यस्य या लक्ष्मीः श्रीः तस्याः निधौ आश्रये प्राप्ते आगते नवे यौवने न विक्रियां विकारं कलयति करोति सन्तुष्यतीति भावः । रूपकालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ७२ ॥

पीनोत्तुङ्गपयोधरेति सुमुखाम्भोजेति सुभ्रूरिति ।
दृष्ट्वा माद्यति मोदतेऽतिरमते प्रस्तौति जानन्नपि
प्रत्यक्षाशुचिपुत्रिकां स्त्रियमहो ! मोहस्य दुश्चेष्टितम् ॥ ७३ ॥
श्रुता भवति तापाय दृष्टा चोन्मादवर्द्धिनी ।
स्पृष्टा भवति मोहाय सा नाम दयिता कथम् ॥ ७४ ॥
तावदेवामृतमयी यावल्लोचनगोचरा
चक्षुःपथादपगता विषादप्यतिरिच्यते ॥ ७५ ॥

कान्तेति । उत्सुकः कामातुर इति भावः जनः स्त्रियं प्रत्यक्षाशुचिपुत्रिकां प्रत्यक्षपरिदृश्यमानाम् अपवित्रपुत्तलिकां जानन्नपि कान्ता इति उत्पललोचना इन्दीवराक्षी इति विपुलश्रोणीभरा विशालनितम्बा इति पीनोत्तुङ्गपयोधरा पीवरोन्नतस्तनी इति सुमुखाम्भोजं वदनकमलं यस्यास्तथोक्तेति सुभ्रूरिति दृष्ट्वा बुद्ध्वेति भावः माद्यति मत्तो भवति मोदते हृष्यति अतिरमते अतिमात्रं विहरति प्रस्तौति प्रकर्षेण प्रशंसति अहो आश्चर्यं मोहस्य अज्ञानस्य दुश्चेष्टितं दुर्विलसितम् । कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः । शार्दूलविक्रीडितं वृत्तम् ॥ ७२ ॥

श्रुतेति । सा श्रुता कीर्त्तितापि नामश्रवणेऽपीत्यर्थः तापाय भवति, दृष्टा च अवलोकिता च उन्मादवर्द्धिनी भवति, स्पृष्टा सती मोहाय भवति मुग्धं करोतीति भावः, सा दयिता प्रिया नाम कथम् ? ऐहिकानिष्टकारित्वेऽपि प्रियत्वं कुत इति भावः । अनुष्टुप् वृत्तम् ॥ ७४ ॥

तावदिति । यावत् लोचनगोचरा दृष्टिपथवर्त्तिनी तावदेव अमृतमयी कान्तेति शेषः, चक्षुःपथात् दृष्टिमार्गात् अपगता अतिक्रान्ता चेदिति शेषः विषादपि अतिरिच्यते अधिकक्लेशकरी भवतीत्यर्थः । अनुष्टुप् वृत्तम् ॥ ७५ ॥

नामृतं न विषं किञ्चिदेकां मुक्त्वा नितम्बिनीम् ।
सैवामृतलता रक्ता विरक्ता विषवल्लरी ॥ ७६ ॥

आवर्त्तः संशयानामविनयभवनं पत्तनं साहसानां
दोषाणां सन्निधानं कपटशतमयं क्षेत्रमप्रत्ययानाम् ।
स्वर्गद्वारस्य विघ्नो नरकपुरमुखं सर्वमायाकरण्डं
स्त्रीयन्त्रं केन सृष्टं विषममृतमयं प्राणिनां मोहपाशः ॥ ७७

न सत्येन शशाङ्क एष वदनीभूतो नवेन्दीवर-
द्वन्द्वे लोचनतां गते न कनकैरप्यङ्गयष्टिः कृता ।

नामृतमिति । एकां केवलां नितम्बिनीं कान्तां मुक्त्वा विहाय किञ्चित् वस्तु अमृतं न विषञ्च न, सैव नितम्बिन्येव रक्ता अनुरागिणी सती अमृतलता, विरक्ता अननुरक्ता सती विषवल्लरी गरलमञ्जरी भवति । अनुष्टुब्वृत्तम् ॥ ७६ ॥

आवर्त्त इति । संशयानां सन्देहानाम् आवर्त्तः भ्रमिविशेषः आश्रय इति यावत्, अविनयस्य दुर्णयस्य भवनं गृहं, साहसानाम् अविमृश्यकारितायाः पत्तनं नगरं दोषाणां सन्निधानं निधिरित्यर्थः कपटशतमयं बहुधा कपटात्मकम् अप्रत्ययानाम् अविश्वासानाम् क्षेत्रं स्थानं स्वर्गद्वारस्य वैदिकानुष्ठानस्य विघ्नः प्रत्यूहः नरकपुरस्य मुखं द्वारमित्यर्थः सर्वासां मायानां कपटानां करण्डं पेटकं विषं गरलमयम् अमृतमयञ्च प्राणिनां मोहपाशः मोहनरज्जुः मोहनायेति पाठान्तरम् । स्त्रीरत्नं केन हेतुना कथं वा केन जनेन वा सृष्टं निर्मितम् । स्रग्धरावृत्तम् । रूपकमलङ्कारः ॥ ७७ ॥

नेति । एषः वदनीभूतः वदनरूपेणावतीर्णः शशाङ्कः चन्द्रः सत्येन तत्त्वतः न, इन्दीवरद्वन्द्वे नीलोत्पलयुगले न वा लोचनतां नयनत्वं गते प्राप्ते, अङ्गयष्टिरपि कनकैः न कृता न निर्मिता ।

किन्त्वेवं कविभिः प्रतारितमनास्तत्त्वं विजानन्नपि
त्वङ्मांसास्थिमयं वपुर्मृगदृशां मन्दो जनः सेवते ॥ ७८ ॥
लीलावतीनां सहजा विलासास्त एव मूढ़स्य हृदि स्फुरन्ति ।
रागो नलिन्या हि निसर्गसिद्धस्तत्र भ्रमत्येव मुदा षड़ङ्घ्रिः ॥ ७९ ॥
यदेतत् पूर्णेन्दुद्युतिहरमुदाराकृतिवरं
मुखाब्जं तन्वङ्ग्याः किल वसति तत्राधरमधु ।
इदं तावत्पक्वं द्रुमफलमिवातीव विरसं
व्यतीतेऽस्मिन् काले विषमिव भविष्यत्यसुखदम् ॥ ८० ॥

किन्तु कविभिः एवम् इत्थं प्रतारितमनाः विप्रलब्धचित्तः मन्दो मूढ़ो जनः तत्त्वं याथार्थ्यं विजानन्नपि विशेषेण बुध्यमानोऽपि मृगदृशां त्वङ्मांसास्थिमयं वपुः शरीरं सेवते रमणीयतयेति भावः । शार्दूल-विक्रीडितं वृत्तम् ॥ ७८ ॥

लीलावतीनामिति । लीलावतीनां विलासिनीनां सहजाः स्वाभाविकाः ये विलासाः सन्तीति शेषः त एव विलासाः मूढ़स्य मन्द-बुद्धेः हृदि स्फुरन्ति विकाशन्ते । हि तथाहि नलिन्याः पद्मिन्याः रागः विकासः निसर्गसिद्धः स्वभावसिद्धः । षड़ङ्घ्रिः षट्चरणः भ्रमरः मुदा आनन्देन तत्रैव भ्रमति । विशेषेण सामान्यसमर्थन-रूपोऽर्थान्तरन्यासः । उपजातिर्वृत्तम् ॥ ७९ ॥

यदेतेति । यत् एतत् पूर्णेन्दुद्युतिहरं पूर्णचन्द्रकान्तिहरम् उदारा आकृतिर्यस्य तथोक्तं वरं श्रेष्ठं तन्वङ्ग्याः कृशाङ्ग्याः मुखाब्जं मुख-कमलम् अस्तीति शेषः तत्र अधरमधु वसति किल तिष्ठत्येव । इदं मुखाब्जं तावत् आपातत इत्यर्थः पक्वं द्रुमफलमिव वृक्षफलमिव सुरसं सुमधुरम् । अस्मिन् काले व्यतीते अतिक्रान्ते सति विषमिव असुखदं भविष्यति । शिखरिणीवृत्तम् । उपमालङ्कारः ॥ ८० ॥

उन्मीलत्त्रिवलीतरङ्गनिलया प्रोत्तुङ्गपीनस्तन-
द्वन्द्वेनोद्यतचक्रवाकमिथुनाकाराम्बुजोद्भासिनी ।
कान्ताकारधरा नदीयमभितः क्रूराशया नेष्यते
संसारार्णवमज्जनं यदि जना दूरात् परित्यज्यताम् ॥ ८१॥
जल्पन्ति सार्द्धमन्येन पश्यन्त्यन्यं सविभ्रमाः ।
हृदये चिन्तयन्त्यन्यं प्रियः को नाम योषिताम् ? ॥८२॥

उन्मीलदिति । हे जनाः ! यदि उन्मीलन्त्यः राजन्त्यः याः त्रिवल्यः ता एव तरङ्गाः तेषां निलया आश्रया तद्वतीत्यर्थः प्रोत्तुङ्गेन अत्युन्नतेन पीनेन स्तनद्वन्द्वेन कुचयुगलेन उद्यतः उदितः चक्रवाकमिथुनस्य आकारः यस्या तादृशी अम्बुजवत् कमलवत् उद्भासिनी शोभिनी अम्बुजैरुद्भासिनी च कान्तः रमणीयः आकारः तस्य धरतीति धरा पचाद्यच्प्रत्ययः । कान्ताया आकारस्य धरा या अभितः समन्ततः क्रूराशया भीषणान्तःकरणा हिंस्रजलजन्तुभिः व्याप्तत्वात् निष्ठुरान्तरा इयं नदी न इष्यते नाभिलष्यते, तदा संसारार्णवे भवाम्बुधौ मज्जनं दूरात् परित्यज्यताम् । नदीपथेनैव लोकाः समुद्रं गच्छन्ति तत्र मज्जन्ति च तत्परित्यागे यथा समुद्रे मज्जनाभावः, तथा नारीपरित्यागे निमज्जनाभाव इति भावः । अत्र नायिकायां नदीत्वारोपात् संसारे चार्णवत्वारोपात् रूपकालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ८१ ॥

जल्पन्तीति । अन्येन जनेन सार्द्धं सह जल्पन्ति आलपन्ति योषित इति शेषः सविभ्रमाः सविलासाः सत्यः अन्यं जनं पश्यन्ति । अन्यं जनं हृदये चिन्तयन्ति अतः को जनः योषितां प्रियो नाम सम्भावनायाम् । न कोऽपि प्रिय इति सम्भावयामीत्यर्थः । अनुष्टुब्वृत्तम् । काव्यलिङ्गमलङ्कारः । तदुक्तं दर्पणे, हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते इति ॥ ८२ ॥

मधु तिष्ठति वाचि योषितां हृदि हालाहलमेव केवलम् ।
अतएव निपीयतेऽधरो हृदयं मुष्टिभिरेव ताड्यते ॥ ८३ ॥

अपसर सखे ! दूरं तस्मात् कटाक्षविषानलात्
प्रकृतिविषमाद्योषित्सर्पाद्विलासफणाभृतः ।
इतरफणिना दष्टाः शक्याश्चिकित्सितुमौषधै-
श्चतुरवनिताभोगिग्रस्तं त्यजन्ति हि मन्त्रिणः ॥ ८४ ॥

विस्तारितं मकरकेतनधीवरेण
स्त्रीसंज्ञितं बडिशमत्र भवाम्बुराशौ ।

मध्विति । योषितां नारीणां वाचि मधु तिष्ठति, हृदि केवलमेव हालाहलं विषं तिष्ठतीति पूर्वेण सम्बन्धः । अतएव अधरः मधुभाजनमिति भावः निपीयते हृदयं मुष्टिभिरेव ताड्यते प्रहन्यते स्तनद्वयं मर्द्दते इति भावः जनैरिति शेषः । काव्यलिङ्गमलङ्कारः । सुन्दरीवृत्तं विषमे ससजा गुरुः समे सभरालगौ यदि सुन्दरी तदेति तल्लक्षणात् ॥ ८३ ॥

अपसरेति । हे सखे ! कटाक्ष एव विषानलः गरलाग्निः यस्य तथोक्तात् प्रकृतिविषमात् स्वभावभीषणात् विलासाः विभ्रमा एव फणाः बिभर्त्तीति तस्मात् तस्मात् योषिदेव सर्पः तस्मात् दूरम् अपसर अपगच्छ । इतरेण अन्येन फणिना भुजङ्गेन दष्टाः जनाः औषधैः चिकित्सितुं शक्याः साध्याः, चतुरा या वनिता कान्ता सा एव भोगी सर्पः तेन ग्रस्तं दष्टं कवलितमिति यावत् जनं मन्त्रिणः मन्त्रकुशलाः सदुपदेशिन इति भावः त्यजन्ति हि परिहरन्त्येव । रूपकालङ्कारः । हरिणीवृत्तम् ॥ ८४ ॥

विस्तारितमिति । मकरकेतनः काम एव धीवरः मत्स्यजीवी तेन अत्र भवाम्बुराशौ संसारसागरे स्त्रीति संज्ञा आख्या यस्य

येनाचिरात्तदधरामिषलोलमर्त्य-
मत्स्यान् विकृष्य पचतीत्यनुरागवह्नौ । ८५ ॥

कामिनीकायकान्तारे कुचपर्वतदुर्गमे ।
मा सञ्चर मनःपान्थ ! तत्रास्ते स्मरतस्करः ॥ ८६ ॥

आदीर्घेण चलेन चक्रगतिना तेजस्विना भोगिना
नीलाब्जद्युतिहारिणा वरमहं दष्टो न तच्चक्षुषा ।
धन्याः सन्ति चिकित्सका दिशि दिशि प्रायेण धर्मार्थिनो
मुग्धाक्षीक्षणवीक्षितस्य न हि मे वैद्यो न चाप्यौषधम् ॥८७॥

अस्येति तथोक्तं अस्य जाते इति इतप्रत्ययः । वड़िशं मत्स्यवेधन-यन्त्रं विस्तारितं प्रसारितम् । येन स्त्रीसंज्ञितेन वडिशेन अचिरात् झटिति तस्य स्त्रीसंज्ञितवड़िशस्य अधर एव आमिषं भोग्यं वस्तु तस्मिन् लोलाः सतृष्णाः मर्त्याः मानवा एव मत्स्याः तान् विकृष्य अनुरागः प्रेम एव वह्निः तस्मिन् इतीत्थं पचति । रूपकालङ्कारः । वसन्ततिलकं वृत्तम् ॥ ८५ ॥

कामिनीति । हे मनःपान्थ ! चित्तपथिक ! कुचा एव पर्वताः तैः दुर्गमे गन्तुमशक्ये अपारणीये इति भावः कामिनीनां कायः देह एव कान्तारः दुर्गमं वनं कान्तारो वर्त्म दुर्गममित्यमरः । तस्मिन् मा सञ्चर न भ्रम, तत्र कान्तारे स्मर एव काम एव तस्करः चोरः आस्ते तिष्ठति । स तव सर्वस्वं लुण्ठिष्यतीति भावः । रूपकमलङ्कारः । अनुष्टुब्वृत्तम् ॥ ८६ ॥

आदीर्घेणेति । आदीर्घेण आत्यायतेन चलेन चञ्चलेन चक्रगतिना चक्रवत् घूर्णमानेनेति भावः वक्रगतिना कुटिलगामिना तेजस्विना प्रबलेन कान्तिमता च नीलाब्जस्य नीलपद्मस्य द्युतिहारिणा कान्ति-शालिना कृष्णवर्णेन च भोगिना सर्पेण वरम् अहं दष्टः श्रेयस्करमिति शेषः । तस्याः मुग्धाक्ष्याः चक्षुषा पूर्वोक्तविशेषणशालिनेति भावः

इह हि मधुरगीतं नृत्यमेतद्रसोऽपि
स्फुरति परिमलोऽसौ स्पर्श एष स्तनानाम् ।
इति हृतपरमार्थैरिन्द्रियैर्भ्राम्यमाणै-
रहितकरणदक्षैः पञ्चभिर्वञ्चितोऽस्मि ॥ ८८ ॥

न गम्यो मन्त्राणां न च भवति भैषज्यविषयो
न चापि प्रध्वंसं व्रजति विविधैः शान्तिशतकैः ।
भ्रमावेगादङ्गे किमपि विदधद्भव्यमसमः
स्मरापस्मारोऽयम्भ्रमयति दृशं घूर्णयति च ॥ ८९ ॥

न दष्टः भवेयमिति शेषः । धन्याः पुण्यवन्तः प्रायेण धर्मार्थिनः धर्माभिलाषिणः चिकित्सकाः दिशि दिशि सन्ति ये सर्पदष्टं मां चिकित्सित्वा अरोगं कुर्वन्तीति भावः । किन्तु मुग्धाक्ष्या वामलोचनया चणं वीक्षितस्य निरीक्षितस्य मे मम वैद्यः चिकित्सकः न हि नैव, औषधञ्चापि न अस्तीति शेषः । अत्रार्थश्लेषः । तदुक्तं दर्पणे, शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनमिति । शार्दूलविक्रीडितं वृत्तम् ॥ ८७ ॥

इहेति । इह अस्यां कान्तायां मधुरं गीतम् एतत् नृत्यं रसः अनुरागः अपि स्फुरति प्रकाशते, असौ परिमलः विमर्दोत्थगन्धः, विमर्दोत्थे परिमल इत्यमरः । एष स्तनानां स्पर्शः स्पर्शजनितं सुखमित्यर्थः । इति इत्थं हृताः नाशिताः परमार्थाः धर्मादय इति यावत् यैः तथाभूतैः भ्राम्यमाणैः विषयेष्विति शेषः मनसेति कर्त्तृपदमूह्यम् । अहितकरणेषु कुकार्य्यानुष्ठानेषु दक्षैः पटुभिः पञ्चभिरिन्द्रियैः श्रोत्रनेत्ररसनानासिकात्वग्भिरिति यावत् वञ्चितः प्रतारितः अस्मि । मालिनीवृत्तम् ॥ ८८ ॥

नेति । अयम् असमः अतुल्यः स्मरापस्मारः कामरूपापस्मार-रोगविशेषः मन्त्राणां न गम्यः न प्रतिविधेयः भैषज्यविषयः औषध-

जात्यन्धाय च दुर्मुखाय च जराजीर्णाखिलाङ्गाय च
ग्रामीणाय च दुष्कुलाय च गलत्कुष्ठाभिभूताय च ।
यच्छन्तीषु मनोहरं निजवपुर्लक्ष्मीलवश्रद्धया
पण्यस्त्रीषु विवेककल्पलतिकाशस्त्रीषु रज्येत कः ॥ ९० ॥
वेश्यासौ मदनज्वाला रूपेन्धनसमेधिता ।
कामिभिर्यत्र हूयन्ते यौवनानि धनानि च ॥ ९१ ॥
कश्चुम्बति कुलपुरुषो वेश्याधरपल्लवं मनोज्ञमपि ।

प्रतीकार्यश्च न भवति, विविधैः नानाप्रकारैः शान्तिशतकैः उपशामकवस्तुभिः न च प्रध्वंसं क्षयं व्रजति न च नश्यतीत्यर्थः अमावेगात् मोहावेशवशात् अङ्गे देहे किमपि अनिर्वचनीयं भव्यं सुखं विदधत् जनयन् भ्रमयति घूर्णयति दृशं नेत्रं घूर्णयति च । रूपकमलङ्कारः । शिखरिणीवृत्तम् ॥ ८९ ॥

जात्यन्धायेति । लक्ष्मीलवश्रद्धया यत्किञ्चिद्धनाशयेत्यर्थः जात्यन्धाय जन्मान्धाय च दुर्मुखाय कटुभाषिणे च जरया जीर्णम् अखिलं समस्तम् अङ्गं यस्य तादृशाय च ग्रामीणाय अविदग्धायेत्यर्थः दुष्कुलाय च अकुलजाताय च गलता कुष्ठेन अभिभूताय आक्रान्ताय च मनोहरं निजं स्वं वपुः शरीरं यच्छन्तीषु अर्पयन्तीषु विवेकः सदसद्ज्ञानमेव कल्पलतिका कल्पतरुः तस्याः शस्त्रीषु संहारिणीष्विति भावः पण्यस्त्रीषु वेश्यासु को जनः रज्येत ? अनुरक्तो भवति ? न कोऽपीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् । रूपकमलङ्कारः ॥ ९० ॥

वेश्येति । असौ वेश्या रूपमेव इन्धनं काष्ठं तेन समेधिता संवर्द्धिता मदनज्वाला मदनाग्निशिखेत्यर्थः । यत्र अग्निशिखायां कामिभिः यौवनानि धनानि च हूयन्ते प्रक्षिप्यन्ते । रूपकमलङ्कारः । अनुष्टुब्वृत्तम् ॥ ९१ ॥

क इति । कः कुलपुरुषः सत्कुलोद्भवः मानवः मनोज्ञमपि

चारभटचौरचेटकनटविटनिष्ठीवनशरावम् ॥ ९२ ॥

सुचरितप्रशंसा ।

धन्यास्त एव तरलायतलोचनानां
तारुण्यपूर्णघनपीनपयोधराणाम् ।
क्षामोदरोपरिलसत्त्रिवलीलतानां
दृष्ट्वाकृतिं विकृतिमेति मनो न येषाम् ॥ ९३ ॥

बाले ! लीलामुकुलितममी सुन्दरा दृष्टिपाताः
किं क्षिप्यन्ते विरम विरम व्यर्थ एष श्रमस्ते ।
सम्प्रत्यन्ये वयमुपरतं बाल्यमास्था वनान्ते
क्षान्तो मोहस्तृणमिव जगज्जालमालोकयामः ॥ ९४ ॥

चाराणां किङ्करविशेषाणां भटानां सैनिकानां चौराणां तस्कराणां चेटकानां नीचजातीयविशेषाणां विटानां लम्पटानां निष्ठीवनस्य मुखप्रक्षिप्तश्लेष्मणः शरावं भाजनविशेषभूतं वेश्यायाः अधरपल्लवं चुम्बति ? न कोऽपीत्यर्थः । रूपकालङ्कारः । आर्य्यावृत्तम् ॥ ९२ ॥

धन्या इति । येषां मनः तरलायतलोचनानां चञ्चलविशाल-नेत्राणां तारुण्येन पूर्णौ घनौ निविडौ पीनौ पीवरौ पयोधरौ स्तनौ यासां तथोक्तानां क्षामस्य क्षीणस्य उदरस्य उपरि लसन्त्यः राजन्त्यः त्रिवल्य एव लता यासां तथाभूतानां कान्तानामिति शेषः आकृतिं दृष्ट्वा विकृतिं विकारम् एति प्राप्नोति, त एव धन्याः पुण्य-वन्तः । वसन्ततिलकं वृत्तम् ॥ ९३ ॥

बाले इति । हे बाले ! सुन्दरि ! लीलया विभ्रमेण मुकुलितं यथा तथा अमी सुन्दराः चारवः दृष्टिपाताः किं कथं क्षिप्यन्ते ? विरम विरम निवर्त्तस्व निवर्त्तस्व एष ते तव श्रमः व्यर्थः निरर्थकः । सम्प्रति वयम् अन्ये अपरे, बाल्यं शैशवम् उपरतं विनष्टम् । वनान्ते

इयं बाला मां प्रत्यनवरतमिन्दीवरदल-
प्रभाचौरं चक्षुः क्षिपति किमभिप्रेतमनया ।
गतो मोहोऽस्माकं स्मरसमरबाणव्यतिकर-
ज्वरज्वालाः शान्तास्तदपि न वराकी विरमति ॥ ९५ ॥

शुभ्रं सद्मसविभ्रमा युवतयः श्वेतातपत्रोज्ज्वला
लक्ष्मीरित्यनुभूयते स्थिरमिव स्फीते शुभे कर्म्मणि ।
विच्छिन्ने नितरामनङ्गकलहक्रीडात्रुटत्तन्तु किं
मुक्ताजालमिव प्रयाति झटिति भ्रश्यद्दिशो दृश्यताम् ॥ ९६ ॥

वनसीमायाम् आस्था यत्नः, मोहः शान्तः निवृत्तः। जगज्जालं तृणमिव आलोकयामः पश्यामः मन्दाक्रान्ता वृत्तम् ॥ ९४ ॥

इयमिति। इयं बाला मां प्रति अनवरतम् इन्दीवराणां प्रभाचौरं कान्तिहरं चक्षुः क्षिपति, अनया बालया किम् अभिप्रेतम् इष्टम्? अस्माकं मोहः गतः नष्टः, स्मरस्य कामस्य समरे बाण-व्यतिकरस्य शरनिपातस्य ज्वरज्वालाः सन्तापशिखाः शान्ताः निवृत्ताः, तदपि तथापि वराकी तपस्विनी इयमिति शेषः न विरमति न निवर्त्तते अनुरागं दर्शयतीति भावः। शिखरिणीवृत्तम्। उपमा-लङ्कारः ॥ ९५ ॥

शुभ्रमिति। शुभ्रा गौरवर्णाः सद्मसविभ्रमाः सन् रवेण रागेण विभ्रमः विलासः येषां तादृश्यः सद्गु रसवत्य इत्यर्थः युवतयः तरुण्यः शुभे कर्मणि कर्मजनिता पूर्वे इति भावः स्फीते प्रवृद्धे सति श्वेतातपत्रेण उज्ज्वला लक्ष्मीरिति स्थिरमिव अनुभूयते प्रतीयते। विच्छिन्ने अवसिते तस्मिन् शुभे कर्मणीति शेषः तत्तु स्थिरलक्ष्मीवत् युवति-मण्डलमिति शेषः अनङ्गकलहे या क्रीड़ा तया त्रुटत् छेदं गच्छत् मुक्ताजालमिव नितराम् अतिशयेन भ्रश्यत् अपगच्छत् झटिति दृश्यः

सदा योगाभ्यासव्यसनवशयोरात्ममनसो-
रविच्छिन्ना मैत्री स्फुरति यमिनस्तस्य किमु तैः ।
प्रियाणामालापैरधरमधुभिर्वक्त्रविधुभिः
सनिश्वासामोदैः सकुचकलशाश्लेषसुरतैः ॥ ८७ ॥

किं कन्दर्प ! करं कदर्थयसि ? किङ्कोदण्डझङ्कारितम् ?
रे रे कोकिल ! कोमलङ्कलरवङ्किन्त्वं वृथा भाषसे ?
मुग्ध ! स्निग्धविदग्धमधुरैर्लोलैः कटाक्षैरलं ?
चेतः सम्प्रति चन्द्रचूडचरणध्यानामृते वर्त्तते ॥ ८८ ॥

अदृश्यतां प्रयाति किम् ? यावत् शुभादृष्टसद्भावः तावत् तादृश-लक्ष्मीसदृशप्रेयसीसम्भोगः स्यात् असति शुभादृष्टे तत्सम्भोगो नैव भवतीति भावः । शार्दूलविक्रीडितं वृत्तम् । उपमालङ्कारः ॥८६॥

सदेति । सदा सततं योगाभ्यासव्यसनेन जीवब्रह्मणोरैक्यचिन्तनं सोऽहमिति भावनमिति भावः योगः तस्य अभ्यासे पुनःपुनरनुशीलने यत् व्यसनम् आसक्तिः तेन वशयोः वशं गतयोः आत्ममनसोः जीवचित्तयोः अविच्छिन्ना अनवरता मैत्री यस्य यमिनः जितेन्द्रियस्य स्फुरति विकाशते, तस्य तैः प्रियाणां कान्तानाम् आलापैः मधुरै-रिति शेषः अधरमधुभिः वक्त्रविधुभिः मुखचन्द्रैः सह निश्वासामोदैः निश्वाससौरभैः तथा सकुचकलशाश्लेष सुरतैः स्तनमर्दन पूर्वकविहारै-रित्यर्थः किमु ? न किमपि प्रयोजनमित्यर्थः । प्रियालापादयः तं तं न विचालयन्तीति भावः । शिखरिणी वृत्तम् ॥ ८७ ॥

किमिति । हे कन्दर्प ! किं कोदण्डेन कुसुमितधनुषा झङ्का-रितम् आस्फालितं करं किं कथं कदर्थयसि क्लेशयसि ? रे रे कोकिल ! त्वं वृथा कोमलं कलरवं मधुररवं किं कथं भाषसे ? हे मुग्धे सुन्दरि ! स्निग्धविदग्धमधुरैः समयचतुरमनोहरैः कटाक्षैः अलं

यदासीदज्ञानं स्मरतिमिरसञ्चारजनितं
तदा सर्वं नारीमयमिदमशेषं जगदभूत्।
इदानीमस्माकं पटुतरविवेकाञ्जनदृशां
समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ॥ ९९ ॥

यां चिन्तयामि सततं मयि सा विरक्ता
सा चान्यमिच्छति जनं स जनोऽन्यरक्तः।
अस्मत्कृतेऽपि परितुष्यति काचिदन्या
धिक् तां च तं च मदनं च इमां च मां च ॥ १०० ॥

इति श्रीभर्तृहरिविरचितं शृङ्गारशतकं समाप्तम्।

न किमपि प्रयोजनं मयास्तीति शेषः, यतः चेतः मनः मदीयमिति शेषः चन्द्रचूड़स्य हरस्य चरणध्यानमेव अन्तरं तस्मिन् तत्स्थाने इति भावः वर्त्तते तिष्ठति। इदानीं युष्मत्परतन्त्रो नाहमिति भावः। शार्दूलविक्रीड़ितं वृत्तम् ॥ ९८ ॥

यदेति। यदा स्मरः काम एव तिमिरम् अन्धकारः तस्य सञ्चारेण आविर्भावेन जनितम् अज्ञानं मोहः आसीत् तदा इदं सर्वम् अशेषं जगत् नारीमयम् अभूत्। इदानीं पटुतरः विशुद्धतरः विवेकः ज्ञानमेव अञ्जनं दृशोर्नयनयोर्येषां तथाभूतानाम् अस्माकं समीभूता दृष्टिः सर्वत्र समदृष्टिरित्यर्थः त्रिभुवनमपि ब्रह्म मनुते पश्यति। शिखरिणीवृत्तम् ॥ ९९ ॥

यामिति। यां सततं चिन्तयामि भावयामि, सा मयि विरक्ता सा च मच्चिन्तितेति शेषः अन्यं जनम् इच्छति, स तदिष्टो जनः अन्यस्यां नार्य्यां रक्तः अनुरागवान्। काचित् अन्या नारी अस्मत्-कृतेऽपि मदर्थमपि परितुष्यति, परिचिन्तयतीति पाठान्तरम्। अतः तां च नारीं तं च पुरुषं मदनं च इमां च मां च धिक्। संसारोऽयं धिक्कार्य्य इति भावः वसन्ततिलकं वृत्तम् ॥ १०० ॥

इति वि, ए उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण, विरचिता शृङ्गारशतकव्याख्या समाप्ता।

# दृष्टान्तशतकम् ।

---

शिवस्मरणमेवैकं संसारान्तकनाशनम् ।
घनौघो घोरदावाग्निनिर्वापणपटुर्भवेत् ॥ १ ॥
साधुरेव प्रवीणः स्यात् सद्गुणामृतवर्णने ।
नवचूताङ्कुरास्वादकुशलः कोकिलः किल ॥ २ ॥
दुर्जनो दूषयत्येव सतां गुणगणं क्षणात् ।
मलिनीकुरुते धूमः सर्वथा विमलाम्बरम् ॥ ३ ॥
यथा दोषो विभात्यस्य जनस्य न तथा गुणः ।
प्रायः कलङ्क एवेन्दोः प्रस्फुटो न प्रसन्नता ॥ ४ ॥

शिवेति । एकं शिवस्य स्मरणमेव ध्यानमेव संसार एव अन्तकः यमः तस्य नाशनं नाशहेतुः । घनानां मेघानां ओघः समूहः घोरस्य उत्कटस्य दावाग्नेर्वनानलस्य निर्वापणे भस्मीकरणे पटुः समर्थः भवेत् । दृष्टान्तालङ्कारः । तदुक्तं, दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनमिति । अनुष्टुब्वृत्तम् । प्रायेणैवमुत्तरत्र बोध्यम् ॥ १ ॥

साधुरिति । साधुरेव सतां सुजनानां गुणा एव अमृतानि तेषां वर्णने कीर्तने प्रवीणः निपुणः स्यात् नान्य इति शेषः । कोकिलः किल पिक एव नवः यः चूताङ्कुरः तस्य आस्वादे कुशलः पटुः नान्य इति शेषः ॥ २ ॥

दुर्जन इति । दुर्जनः क्षणात् क्षणमात्रेण सतां साधूनां गुणगणं गुणराशिं दूषयत्येव । धूमः विमलं निर्मलम् अम्बरम् आकाशं वस्त्रं वा सर्वथा मलिनीकुरुते मलिनयति ॥ ३ ॥

यथेति । अस्य जनस्य प्राणिनः यथा दोषः विभाति प्रकाशते,

विवेक एव व्यसनं पुंसां क्षपयितुं क्षमः ।
अपहर्त्तुं समर्थोऽसौ रविरेव निशातमः ॥ ५ ॥
प्रायः सन्त्युपदेशार्हा धीमन्तो न जडाशयाः ।
तिलाः कुसुमसौगन्ध्यवाहिनो न यवाः क्वचित् ॥ ६ ॥
चिन्त्यते नय एवादावमन्दं समुपेप्सुभिः ।
विनम्य पूर्वं सिंहोऽपि हन्ति हस्तिनमोजसा ॥ ७ ॥
संस्थितस्य गुणोत्कर्षः प्रायः प्रस्फुरति स्फुटम् ।
दग्धस्यागुरुखण्डस्य स्फारीभवति सौरभम् ॥ ८ ॥

तथा गुणो न । इन्दोश्चन्द्रस्य कलङ्क एव प्रायः प्रस्फुटः सुव्यक्तः, प्रसन्नता निर्मलता न ॥ ४ ॥

विवेक इति । विवेकः ज्ञानमेव पुंसां व्यसनं विपदं क्षपयितुं नाशयितुं क्षमः योग्यः । असौ रविः सूर्य एव निशातमः रात्रि-तिमिरम् अपहर्त्तुं नाशयितुं समर्थः ॥ ५ ॥

प्राय इति । धीमन्तः बुद्धिमन्तः जनाः प्रायः उपदेशार्हाः उपदेशयोग्याः सन्ति भवन्ति, जडाशयाः निर्बोधा न । तिलाः कुसुमानां सौगन्ध्यं वहन्तीति तथाभूताः, यवाः क्वचित् कुत्रापि न तथेति शेषः ॥ ६ ॥

चिन्त्यते इति । अमन्दम् अनपायमित्यर्थः समुपेप्सुभिः सम्प्राप्तु-मिच्छुभिः जनैः आदौ अग्रतः नय एव नीतिरेव चिन्त्यते केन नयेन वर्त्तितव्यमिति भाव्यते । सिंहोऽपि पशुरपीति भावः का कथा मानवानामित्यपिशब्दार्थः । पूर्वम् अग्रतः विनम्य विनतो भूत्वा ओजसा बलेन हस्तिनं हन्ति नाशयति ॥ ७ ॥

संस्थितस्येति । प्रायः बाहुल्येनेत्यर्थः संस्थितस्य मृतस्य जनस्य गुणानाम् उत्कर्षः स्फुटं सुव्यक्तं यथा तथा प्रस्फुरति प्रकाशते ।

मनस्विहृदयं धत्ते रोषेणैव प्रसन्नताम् ।
भस्मना ज्वलदङ्गारः प्रसादं लभतेतराम् ॥ ९ ॥
उत्तमः क्लेशविक्षोभं क्षमः सोढुं न हीतरः ।
मणिरेव महाशाणघर्षणं न तु मृत्कणः ॥ १० ॥
सजातीयं विना वैरी न जय्यः स्यात् कदाचन ।
विना वज्रमणिं मुक्तामणिर्भेद्यः कथं भवेत् ॥ ११ ॥
सज्जना एव साधूनां प्रथयन्ति गुणोत्करम् ।
पुष्पाणां सौरभं प्रायस्तनुते दिक्षु मारुतः ॥ १२ ॥

दग्धस्य अगुरुखण्डस्य चन्दनविशेषखण्डस्य सौरभं सौगन्ध्यं स्फारीभवति विस्तारं गच्छति ॥ ८ ॥

मनस्विहृदयमिति । मनस्विनां प्रशस्तमनसां जनानां हृदयं रोषेणैव क्रोधेनैव प्रसन्नतां धत्ते आश्रयति क्षणं रोषाकुलमपि शीघ्रं प्रसीदतीत्यर्थः । ज्वलदङ्गारः ज्वलन्ननल इति यावत् भस्मना प्रसादं सौम्यतां शीतलतां लभतेतराम् अतिशयेन लभते इत्यर्थः ॥ ९ ॥

उत्तम इति । उत्तमः महान् जनः क्लेशस्य विक्षोभं विशेषाक्रमणं सोढुं क्षमः शक्तः, इतरः क्षुद्रः जनः न हि नैव क्षम इति शेषः । मणिरेव रत्नमेव महाशाणेन घर्षणं सोढुं क्षम इति शेषः, मृत्कणः मृत्तिकाकणः न ॥ १० ॥

सजातीयमिति । सजातीयं विना वैरी शत्रुः कदाचन न जय्यः जेतुं शक्यः स्यात् । वज्रमणिं हीरकप्रस्तरं विना मुक्तामणिः कथं भेद्यः भवेत् नैव भवेदित्यर्थः ॥ ११ ॥

सज्जना इति । सज्जनाः साधव एव साधूनां गुणोत्करं गुणनिचयं प्रथयन्ति विस्तारयन्ति । मारुतः वायुः प्रायः पुष्पाणां सौरभं दिक्षु तनुते विस्तारयति ॥ १२ ॥

उपकर्त्तुं यथा स्वल्पः समर्थो न तथा महान् ।
प्रायः कूपस्तृषां हन्ति सततं न तु वारिधिः ॥ १३ ॥
सति शीले गुणा भान्ति पुंसां शौर्यादयो यथा ।
यौवने सदलङ्कारा: शोभाम्बिभ्रति सुभ्रुवः ॥ १४ ॥
जड़ः प्रभवति प्रायो दुःखं बिभ्रति साधवः ।
शीतांशावुदिते पद्माः सङ्कोचं यान्ति वारिधि ॥ १५ ॥
गुणेन स्पृहणीयः स्यान्न रूपेण युतो नरः ।
सौगन्ध्यहीनं नादेयं पुष्पं कान्तमपि क्वचित् ॥१६॥

उपकर्त्तुमिति। स्वल्पः सामान्य इत्यर्थः जनः यथा उपकर्त्तुं समर्थ, महान् जनः तथा न। कूपः प्रायः बाहुल्येन सततं तृषां पिपासां हन्ति, वारिधिः समुद्रः न तु नैवेत्यर्थः। यथा वारिधेर्जलं लवणमयत्वात् लोकैर्न पीयते, कूपजलन्तु मधुरत्वात् शीतलत्वाच्च पीयते, तथा सामान्यजनेन स्वस्य केनापि स्वल्पुपकारे कृते दुःखं जानता लोकस्य उपकारः क्रियते, महता तु परेण क्रियमाणमुपकारमनाकाङ्क्षता प्रायेण उपकर्त्तुं नेष्यते इत्यतः सामान्यजनस्य यत्नतः क्रियमाणमुपकारं सर्वं आद्रियते महतस्तु कथञ्चित् स्वयत्नेन क्रियमाणमुपकारं न बहु मन्यते इति भावः ॥ १३ ॥

सतीति। शीले सौजन्ये सति पुंसा शौर्यादयः गुणाः यथा भान्ति शोभन्ते, यौवने सति सुभ्रुवा नारीणां सदलङ्काराः उत्तमभूषणानि तथा शोभा विभ्रति धारयन्ति ॥ १४ ॥

जड़ इति। जड़ः मूर्खः प्रायः बाहुल्येन प्रभवति प्रभुर्भवतीत्यर्थः साधवस्तु दुःखं बिभ्रति भजन्ते न प्रभावं प्राप्नुवन्तीति भावः। शीतांशौ चन्द्रे जड़मये इति भावः उदिते सति वारिधि जले पद्माः कमलानि सङ्कोचं यान्ति निमीलन्ति ॥ १५ ॥

गुणेनेति। जनः गुणेन युतः स्पृहणीयः प्रशंसनीय इति भावः

कश्चित् कस्यचिदेव स्यात् सुहृद्विस्रम्भभाजनम् ।<br>
पद्मं विकासयत्यर्कः सङ्कोचयति कैरवम् ॥ १७ ॥

ईश्वराः पिशुनान् शश्वद् विशन्तीति किमद्भुतम् ।<br>
प्रायो निधय एवाहीन् द्विजिह्वान् दधतेतराम् ॥ १८ ॥

सम्पद्यास्ते परैः साकं विपदि स्वजनैर्जड़ः ।<br>
जृम्भत्यम्भोरुहं भृङ्गैः शुष्यत्युदकशैवलैः ॥ १९ ॥

स्यात्, रूपेण युतः रूपवानित्यर्थः न । क्वचित् कुत्रापि कान्तमपि रमणीयमपि पुष्पं सौगन्ध्येन स्त्रीर्न वर्जितं न श्राद्धेयं न ग्राह्यं नादरणीयमित्यर्थः ॥ १६ ॥

कश्चिदिति । कश्चित् जनः कस्यचिदेव जनस्य विस्रम्भभाजनं विश्वासपात्रं सुहृत् सखा स्यात् । अर्कः सूर्यः पद्मं विकासयति प्रस्फोटयति किन्तु कैरवं कुमुदं सङ्कोचयति निमीलयति ॥ १७ ॥

ईश्वरा इति । ईश्वराः धनिन इति यावत् शश्वत् सततं पिशुनान् दुर्जनान् विशन्ति आश्रयन्ति इति एतत् किम् अद्भुतम् आश्चर्य्यम् ? प्रायः बाहुल्येन निधयः रत्नानि द्विजिह्वान् अहीन् सर्पानेव दधतेतराम् अतिशयेन अवलम्बन्ते तेषां शिरःसु तिष्ठन्तीति भावः ॥ १८ ॥

सम्पदीति । जड़ः अज्ञः जनः सम्पदि परैः साकं सार्द्धम् आस्ते तिष्ठति परान् सम्पत्सु सुलभान् जनानाश्रयतीत्यर्थः । विपदि स्वजनैः साकम् आस्ते तिष्ठति विपत्काले सम्पत्सुलभैर्जनैः परित्यक्तत्वात् अनन्यगत्या स्वजनमाश्रयतीति भावः । अम्भोरुहं पद्मं भृङ्गैः सह जृम्भति विजृम्भते विकसितं सत् भृङ्गैः सह सङ्गच्छते इति यावत् किन्तु उदकशैवलैः उदकैः शैवलैश्च सह शुष्यति शोषं प्राप्नोति । तदानीं भृङ्गा न दृश्यन्ते इति भावः ॥ १९ ॥

नीचावमानमलिनां प्रभुङ्क्ते सम्पदं पुमान्।
लशुनाक्तां सकर्पूरचर्चां वितनुते तनौ ॥ २० ॥
व्यसनानन्तरं सौख्यं स्वल्पमप्यधिकं भवेत्।
काषायरसमास्वाद्य स्वाद्वतीवाम्बु विन्द्यते ॥ २१ ॥
गुणानामन्तरं प्रायस्तज्ज्ञो जानाति नेतरः।
मालतीमल्लिकामोदं घ्राणं वेत्ति न लोचनम् ॥ २२ ॥
प्रभूतवयसः पुंसो धियः पाकः प्रवर्त्तते।
जीर्णस्य चन्दनतरोरामोद उपजायते ॥ २३ ॥

नीचेति। पुमान् भिक्षुः किङ्करो वेति भावः नीचानां क्षुद्राणां दातॄणां प्रभूणां वेति भावः अवमानेन अनादरेण मलिनां दूषितामित्यर्थः सम्पदं प्रभुङ्क्ते प्रकर्षेण भुनक्ति। तथाहि तनौ शरीरे लशुनाक्तां लशुनमिश्रितां सकर्पूरचर्चां कर्पूराक्तविलेपनं वितनुते करोति जन इति शेषः ॥ २० ॥

व्यसनेति। व्यसनानन्तरं विपदपगमात् परं स्वल्पमपि सौख्यम् अधिकं भवेत् अधिकमिव प्रतीयते इति भावः। काषायरसं हरीतक्यादिरसमिति भावः आस्वाद्य अम्बु जलम् अतीव अतिमात्रं स्वादु मधुरं विन्द्यते बुध्यते ॥ २१ ॥

गुणानामिति। तज्ज्ञः गुणज्ञ इत्यर्थः गुणानाम् अन्तरं प्रभेदं प्रायः बाहुल्येन जानाति, इतरः अगुणज्ञः न। घ्राणं नासिका मालतीमल्लिकयोः आमोदं वेत्ति अवबुध्यते लोचनं नेत्रं न ॥ २२ ॥

प्रभूतेति। प्रभूतवयसः अधिकवयस्कस्य पुंसः पुरुषस्य धियः बुद्धेः पाकः परिणामः प्रवर्त्तते भवति। जीर्णस्य प्राचीनस्य सारवत इति भावः चन्दनतरोः आमोदः सौरभातिशय इति यावत् उपजायते प्रसरति ॥ २३ ॥

कामाय स्पृहयत्यात्मा संयतोऽपि मनीषिणः ।
वीथीनियमितोऽप्युच्चैः शष्पमासाद्य धावति ॥ २४ ॥
धनागमेऽधिकं पुंसां लोभमभ्येति मानसम् ।
निदाघकाले प्रालेयः प्रायः शैत्यं वहत्यलम् ॥ २५ ॥
सहजोऽपि गुणः पुंसां साधुवादेन वर्धते ।
कामं सुरसलेपेन कान्तिं वहति काञ्चनम् ॥ २६ ॥
निन्दां यः कुरुते साधोस्तथा स्वं दूषयत्यसौ ।
खे धूलिं यस्त्यजेदुच्चैर्मूर्ध्नि तस्यैव सा पतेत् ॥ २७ ॥

कामायेति । मनीषिणः विदुषः संयतोऽपि विषयेभ्यः निरुद्धोऽपि आत्मा अन्तःकरणं कामाय विषयसम्भोगायेत्यर्थः स्पृहयति आकाङ्क्षति । वीथीनियमितः इतिनिबद्धोऽपि उच्चैः वृषः शष्पं नवतृणम् आसाद्य समीपे दृष्ट्वेत्यर्थः धावति अभियाति ॥ २४ ॥

धनागमे इति । पुंसां मानसं धनागमे अर्थोपार्जने अधिकं लोभम् अभ्येति प्राप्नोति । निदाघकाले ग्रीष्मे प्रालेयः शिशिरः प्रायः बाहुल्येन अलम् अत्यर्थं शैत्यं शीतलत्वं वहति आश्रयति ॥२५॥

सहज इति । पुंसां सहजोऽपि स्वाभाविकोऽपि गुणः साधुवादेन प्रशंसयेत्यर्थः वर्द्धते वृद्धिं गच्छति । काञ्चनं स्वर्णं सुरसलेपेन सुन्दररससंयोगेन औज्ज्वल्यकारकद्रव्यसंयोगेनेत्यर्थः कामं सम्यक् कान्तिं दीप्तिं वहति आश्रयति ॥ २६ ॥

निन्दामिति । यः साधोः निन्दां कुरुते, असौ जनः स्वम् आत्मानं तथा तेनैव साधुनिन्दनेनैव दूषयति दूषितं करोति, सर्वो जनः साधोर्निन्दकमेव दूषयति न तु साधुमिति भावः । यः खे आकाशे धूलिं त्यजेत् सा धूलिः तस्यैव मूर्ध्नि शिरसि उच्चैरतिशयेन पतेत्, तेन आकाशस्य न काचित् हानिरिति भावः ॥ २७ ॥

स्वभावं नैव मुञ्चन्ति सन्तः संसर्गतोऽसताम् ।
न त्यजन्ति रुतं मञ्जु काकसम्पर्कतः पिकाः ॥ २८ ॥
सम्पत्तौ कर्कशं चित्तं खलस्यापदि कोमलम् ।
शीतलं कठिनं प्रायस्तप्तं मृदु भवत्ययः ॥ २९ ॥
प्रायः प्रकुप्यतितरां प्रीत्यैव प्रखलो जनः ।
नयनं स्नेहसम्पर्कात्कालुष्यं समुपैत्यलम् ॥ ३० ॥
शुभं वाप्यशुभं कर्म फलकालमुपेक्षते ।
शरद्येव फलत्याशु शालिर्न सुरभौ क्वचित् ॥ ३१ ॥

स्वभावमिति । सन्तः साधवः असतां संसर्गतः सङ्गात् स्वभावं निजं भावं नैव मुञ्चन्ति नैव त्यजन्ति । पिकाः कोकिलाः काकानां सम्पर्कतः सङ्गेन मञ्जु मनोहरं रुतं रवं न त्यजन्ति ॥ २८ ॥

सम्पत्ताविति । खलस्य दुर्जनस्य चित्तं सम्पत्तौ सम्पत्काले कर्कशं कठिनं लोकपीड़नक्षमत्वादिति भावः, आपदि कोमलं मृदु भवति अक्षमत्वादिति भावः । अयः लौहः प्रायः बाहुल्येन शीतलं सत् कठिनं भवति तथा तप्तम् अग्निसंयुक्तं सत् मृदु कोमलं भवति द्रवत्वादिति भावः ॥ २९ ॥

प्राय इति । प्रखलः प्रकृष्टः खलो जनः प्रायः बाहुल्येन प्रीत्यैव प्रणयेनैव प्रकुप्यतितराम् अतिशयेन कुप्यतीत्यर्थः । नयनं नेत्रं स्नेहस्य तैलस्य सम्पर्कात् अलम् अत्यर्थं कालुष्यम् आविलत्वं समुपैति प्राप्नोति ॥ ३० ॥

शुभमिति । शुभं वा अशुभं वा कर्म फलकालम् अपेक्षते प्रतीक्षते काले शुभकर्म अशुभकर्म वा फलतीत्यर्थः । शालिः धान्य-विशेषः शरदि शरत्काल एव आशु शीघ्रं फलति, क्वचित् कुत्रापि सुरभौ वसन्ते न फलतीति शेषः ॥ ३१ ॥

भोगेच्छा नोपभोगेन भोगिनां जातु शाम्यति ।
लवणेनान्तरालेन तृष्णा प्रत्युत जायते ॥ ३२ ॥
दुर्लभोऽप्युत्तमः प्रायः सजातीयेन लभ्यते ।
कर्णकोटरगं वारि वारिणैवावकृष्यते ॥ ३३ ॥
जन्तोर्निरुपभोगस्य दृश्यते भुवि रूक्षता ।
वाताशिनो द्विजिह्वत्वं विहितं पश्य वेधसा ॥ ३४ ॥
ऊर्जितं सज्जनं दृष्ट्वा द्वेष्टि नीचः पुनः पुनः ।
कवलीकुरुते स्वस्थं विधुं दिवि विधुन्तुदः ॥ ३५ ॥
न लभन्ते विनोद्योगं जन्तवः सम्पदां पदम् ।

भोगेच्छेति । भोगिनां विषयभोगरतानां भोगेच्छा विषयसम्भोगवासना उपभोगेन विषयसम्भोगेन जातु कदाचित् न शाम्यति न निवर्त्तते । अन्तरालेन अन्तःस्थितेन लवणेन जलस्येति भावः प्रत्युत वैपरीत्ये पिपासाङ्कुरस्य दूरे तिष्ठत्विति भावः तृष्णा पिपासा जायते उद्भवति । लवणजलपाने तृष्णानिवृत्तिर्न स्यात् प्रत्युत तृष्णावृद्धिरेव स्यादिति भावः ॥ ३२ ॥

दुर्लभ इति । दुर्लभः दुष्प्रापोऽपि उत्तमः श्रेष्ठान् जनः प्रायः बाहुल्येन सजातीयेन तुल्यजातीयेनैव लभ्यतेति भावः लभ्यते आकृष्यते इत्यर्थः । कर्णकोटरगं कर्णविवरगतं वारि जलं वारिणैव जलेनैव अवकृष्यते आकृष्य बहिर्नीयते इति यावत् ॥ ३३ ॥

जन्तोरिति । भुवि पृथिव्यां निरुपभोगस्य निराहारस्य जन्तोः प्राणिनः रूक्षता कर्कशता दृश्यते । वाताशिनः वायुमात्रभोजिनः अन्यत् किमपि भक्ष्यमलभमानस्येति भावः भुजङ्गस्येति शेषः द्विजिह्वत्वं विषधरत्वमिति यावत् वेधसा विधात्रा विहितं पश्य अवलोकय ॥ ३४ ॥

ऊर्जितमिति । नीचः क्षुद्रो जनः ऊर्जितम् अभ्युदितमित्यर्थः

सुराः क्षीरोदविक्षोभमनुभूयामृतं पपुः ॥ ३६ ॥

सम्पत्तौ कोमलं चित्तं साधोरापदि कर्कशम् ।
सुकुमारं मधौ पत्रं तरोः स्यात्कठिनं शुचौ ॥ ३७ ॥

आकरः कारणं जन्तोर्दौर्जन्यस्य न जायते ।
कालकूटः सुधासिन्धोः प्राणिनां प्राणहारकः ॥ ३८ ॥

गुणदोषाववाप्येते पुंसां संशीलनाद्बुधैः ।
लेभातेऽमृतगरले मन्थनादम्बुधेः सुरैः ॥ ३९ ॥

सज्जनं साधुं दृष्ट्वा पुनः पुनः द्वेष्टि निन्दति । विधुन्तुदः राहुः दिवि आकाशे स्वस्थं प्रकृतौ स्थितं स्वतेजसा दीप्यमानमिति भावः विधुं चन्द्रं कवलीकुरुते ग्रसति ॥ ३५ ॥

नेति । जन्तवः प्राणिनः उद्योगं परिश्रमं विना सम्पदां पदं न लभन्ते न प्राप्नुवन्ति । सुराः देवाः क्षीरोदस्य विक्षोभं विलोडन-दुःखम् अनुभूय अमृतं पपुः पीतवन्तः ॥ ३६ ॥

सम्पत्ताविति । सम्पत्तौ सम्पत्काले साधोः चित्तं कोमलं लोकोपकारकरणोत्सुकमिति भावः, आपदि कर्कशं कठिनं तदक्षम-त्वादिति भावः । तरोर्वृक्षस्य पत्रं मधौ वसन्ते सुकुमारं सुकोमलं, शुचौ ग्रीष्मे कठिनं स्यात् ॥ ३७ ॥

आकर इति । आकरः उत्पत्तिस्थानं जन्तोः प्राणिनः दौर्ज-न्यस्य कारणं न जायते न भवति । सुधासिन्धोः अमृतनिधेः समुद्रस्य क्षीरसागरस्येत्यर्थः कालकूटः हलाहलं प्राणिनां प्राणहारकः जीवननाशकः भवतीति शेषः ॥ ३८ ॥

गुणेति । बुधैर्विद्वद्भिः संशीलनात् सम्यगनुशीलनात् पुंसां गुण-दोषौ अवाप्येते प्राप्येते इति भावः । सुरैः देवैः अम्बुधेः समुद्रस्य मन्थनात् विलोडनात् अमृतगरले अमृतहलाहले लेभाते ॥ ३९ ॥

स्वभावं न जहात्येव साधुरापद्गतोऽपि सन् ।
कर्पूरः पावकस्पृष्टः सौरभं लभतेतराम् ॥ ४० ॥
न व्याप्तिरेषा गुणिनो गुणवान् जायते ध्रुवम् ।
चन्दनेऽनलसन्दग्धे न भस्म सुरभि क्वचित् ॥ ४१ ॥
अप्यापत्समयः साधोः प्रयाति श्लाघनीयताम् ।
विधोर्विधुन्तुदास्कन्दविपत्कालोऽपि सुन्दरः ॥ ४२ ॥
विना परीक्षां नो तत्त्वं प्रसिद्धं ज्ञायते सतः ।
सुवर्णबन्धानो शुद्धिर्ज्ञायते कर्षणं विना ॥ ४३ ॥

स्वभावमिति । साधुर्जनः आपद्गतोऽपि सन् स्वभावं निजं भावं साधुत्वमित्यर्थः न जहात्येव न त्यजत्येव । कर्पूरः पावकेन अग्निना स्पृष्टोऽपि सौरभं लभतेतराम् अतिशयेन लभते इत्यर्थः ॥४०॥

नेति । गुणिनः गुणवतः जनात् गुणवान् जायते ध्रुवं निश्चितम् एषा व्याप्तिः सिद्धान्तः न । चन्दने अनलेन अग्निना सन्दग्धे सम्यक् दग्धे सति भस्म तदीयमिति शेषः क्वचित् कुत्रापि न सुरभि न सुगन्धं स्यादिति शेषः । गुणवतोऽपि चन्दनात् जातं भस्म न सुरभीति कारणगुणाः कार्य्यगुणमारभन्ते इति व्याप्तिर्न सर्वत्र प्रसरतीति भावः ॥ ४१ ॥

अपीति । साधोः सुजनस्य आपत्समयः अपि श्लाघनीयतां प्रशंसनीयतां प्रयाति गच्छति आपद्यपि साधुः श्लाघ्यं कर्म करोतीति भावः । विधोश्चन्द्रस्य विधुन्तुदेन राहुणा आस्कन्दः आक्रमणमेव विपत् तस्याः कालोऽपि सुन्दरः लोकोपकारकत्वात् सत्कार्य्यानुष्ठानेनेति भावः ॥ ४२ ॥

विनेति । परीक्षां परिदर्शनं विना सतः साधोः प्रसिद्धं प्रख्यातं तत्त्वं याथार्थ्यं नो ज्ञायते नावबुध्यते । कषणं कषणप्रस्तरे

प्राप्य वित्तं जड़ास्तूर्णं निर्वृतिं यान्ति नान्यथा ।
तोयमासाद्य गर्जन्ति न रिक्तास्तनयित्नवः ॥ ४४ ॥
कार्यापेक्षी जनः प्रायः प्रीतिमाविष्करोत्यलम् ।
लोभार्थी शौण्डिकः शष्पैर्मेषं पुष्णाति पेशलैः ॥ ४५ ॥
दुर्जनो जीयते युक्त्या निग्रहेण न धीमता ।
निपात्यते महावृक्षस्तत्समीपक्षितिक्षयात् ॥ ४६ ॥

घर्षणं विना सुवर्णस्य वस्मात् कटककुण्डलादिनिर्माणात् शुद्धिः नैर्मल्यं न जायते ॥ ४३ ॥

प्राप्येति । जड़ाः मूर्खाः जड़स्वभावा वा वित्तं धनं प्राप्य तूर्णं शीघ्रं निर्वृतिं सन्तोषं यान्ति प्राप्नुवन्ति अन्यथा धनाप्राप्ताविति भावः न । स्तनयित्नवः मेघाः तोयं जलम् आसाद्य गर्जन्ति रिक्ताः जलरहिता इत्यर्थः न । दुर्जनानां पूर्णतैव औद्धत्यहेतुरिति भावः ॥ ४४ ॥

कार्य्यापेक्षी इति । कार्य्यमपेक्षते आकाङ्क्षतीति तथोक्तः कार्य्यार्थीत्यर्थः जनः प्रायः प्राचुर्य्येण अलम् अत्यर्थं प्रीतिम् आविष्करोति प्रकटयति, स्वकार्य्यसाधनायेति भावः । लोभार्थी लुब्धः मांसे इति शेषः। मांसार्थीति पाठान्तरं समीचीनम् । शौण्डिकः मांसजीवीत्यर्थः पेशलैः कोमलैः शष्पैः नवतृणैः मेषं पुष्णाति पालयति ॥ ४५ ॥

दुर्जन इति । धीमता बुद्धिमता जनेन दुर्जनः युक्त्या योगेन उपायेन जीयते जेतुं शक्यते, निग्रहेण शासनेन न । तस्य महावृक्षस्य समीपे तलदेशे इति यावत् या क्षितिः भूमिः तस्याः क्षयात् खननादिनेति भावः महावृक्षः निपात्यते अधः क्रियते । महावृक्षस्य अन्येन केनापि शाखादिच्छेदनभेदनेन यथा न पातनं तथा दुर्जनस्य अपमान— इभिर्न शान्तिः । विशिष्टोपायेन तलखननेन वृक्षस्येव दुर्जनस्य निपातनं कार्य्यमिति भावः ॥ ४६ ॥

सुखदुःखे समे स्यातां जन्तूनां क्लेशहेतुके ।
मूर्ध्नि स्थितानां केशानां भवेतां स्नेहच्छेदने ॥ ४७ ॥
दुष्टदुर्जनदौरात्म्यैः सज्जने रज्यते जनः ।
आरुह्य पर्वतं पान्थः सानौ निर्वृतिमेत्यलम् ॥ ४८ ॥
स्वभावसुन्दरं वस्तु न संस्कारमपेक्षते ।
मुक्तारत्नस्य शाणास्त्रघर्षणं नोपयुज्यते ॥ ४९ ॥
शोभते विदुषां मध्ये नैव निर्गुणमानसः ।
अन्तरे तमसान्दीपः शोभते नार्कतेजसाम् ॥ ५० ॥

सुखदुःखे इति । जन्तूनां प्राणिनां सुखदुःखे सुखजनकदुःखजनकवस्तुनी समे तुल्ये क्लेशहेतुके क्लेशकारणे स्याताम् । तथाहि मूर्ध्नि शिरसि स्थितानां केशानां स्नेहच्छेदने क्लेशहेतुके भवेताम् । केशेषु सति स्नेहे शिरःपीड़या क्लेशः, स्नेहत्यागेन छेदने च मनोदुःखं तस्मात् वस्तुमात्रं सुखदं दुःखदञ्चेति भावः ॥ ४७ ॥

दुष्टेति । दुष्टानाम् असतां दुर्जनानां खलानां दौरात्म्यैः उपद्रवैरित्यर्थः जनः सज्जने साधुजने रज्यते अनुरक्तो भवति । पान्थः पथिकः पर्वतं दुरारोहं विविधहिंस्रादिजन्तुसद्भावादिति भावः आरुह्य सानौ तदीये प्रस्थदेशे अलम् अत्यर्थं निर्वृतिं विश्रामसुखमित्यर्थः एति प्राप्नोति ॥ ४८ ॥

स्वभावेति । स्वभावेन प्रकृत्या सुन्दरं मनोरमं वस्तु संस्कारं न अपेक्षते, न शोधनमर्हतीत्यर्थः । मुक्तारत्नस्य शाणास्त्रेण घर्षणं न उपयुज्यते । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः । सामान्यं वा विशेषेण विशेषस्तेन वा यदि । कार्यञ्च कारणेनेदं कार्येण च समर्थ्यते । साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा तत इति दर्पणकारः ॥ ४९ ॥

शोभते इति । निर्गुणं गुणरहितं मानसं यस्य तथाभूतो जनः

युक्त्या परोक्षं बाधेत विपक्षक्षपणक्षमः।
शोषयत्यचिरेणैव प्रान्तरस्थमलं पयः॥ ५१॥
दुर्गदेशप्रविष्टोऽपि शूरोऽभ्येति पराभवम्।
गाढ़पङ्कनिमग्नाङ्गो मातङ्गोऽप्यवसीदति॥ ५२॥
नयेनाङ्कुरितं शौर्य्यं जयाय न तु केवलम्।
अन्ययुक्तं विषं भुक्तं पथ्यं स्यादन्यथा मृतिः॥ ५३॥
मृदुभिर्बहुभिः शूरः पुम्भिरेको न बाध्यते।

विदुषां पण्डितानां मध्ये नैव शोभते। दीपः तमसाम् अन्धकाराणाम् अन्तरे मध्ये शोभते, अर्कतेजसां सौररश्मीनाम् अन्तरे न शोभते इति शेषः॥ ५०॥

युक्त्येति। विपक्षाणां शत्रूणां क्षपणे निराकरणे क्षमः शक्तः युक्त्या उपायेन परोक्षम् अप्रत्यक्षं गूढ़मिति भावः बाधेत पीड़येत् शत्रुमिति शेषः। तथाहि प्रान्तरस्थं क्षेत्रमध्यस्थं पयः जलम् अचिरेणैव शीघ्रमेव अलम् अतिशयेन शोषयति रविरिति शेषः॥५१॥

दुर्गेति। शूरः प्रबलः जनः दुर्गदेशप्रविष्टोऽपि शत्रुदुर्गमस्थानस्थितोऽपि पराभवम् अभ्येति लभते। मातङ्गः हस्ती अपि गाढ़े घने पङ्के कर्दमे निमग्नं प्रविष्टम् अङ्गं यस्य तथाभूतः सन् अवसीदति अवसादं प्राप्नोति विनश्यतीत्यर्थः उत्थातुमसामर्थ्यादिति भावः। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः॥ ५२॥

नयेनेति। नयेन नीत्या अङ्कुरितं प्रयुक्तमिति यावत् शौर्य्यं बलं जयाय जयसाधनाय भवतीति शेषः केवलं शौर्य्यं न तु नैव जयायेति शेषः। अन्येन द्रव्येण युक्तं मिश्रितं विषं भुक्तं भक्षितं पथ्यं हितं स्यात्, अन्यथा कुफलभक्षणे इति भावः मृतिः मरणं स्यादिति शेषः॥ ५३॥

मृदुभिरिति। एकः शूरः बलवान् जनः बहुभिः मृदुभिः

कपोतपोतकैरेकः श्येनो जातु न बाध्यते ॥ ५४ ॥
येनात्मा पण्यतां नीतः स एवान्विष्यते जनैः ।
हस्ती हेमसहस्रेण क्रीयते न मृगाधिपः ॥ ५५ ॥
गुणो गुणान्तरापेक्षी स्वरूपख्यातिहेतवे ।
स्वभावरम्यं लावण्यं तारुण्येन मनोहरम् ॥ ५६ ॥
सुलभं वस्तु सर्वस्य न यात्यादरणीयताम् ।
स्वदारपरिहारेण परदारार्थिनो जनाः ॥ ५७ ॥
विक्रीतं निजमात्मानं वस्त्रैः संस्कुरुते जडः ।

दुर्बलैरित्यर्थः पुंभिः न बाध्यते न पराजीयते इत्यर्थः । जातु कदाचित् कपोतपोतकैः पारावतशिशुभिः एकः श्येनः पक्षिविशेषः न बाध्यते न ताड्यते । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५४ ॥

येनेति । येन आत्मा पण्यतां विक्रेयतां नीतः विक्रयार्थं प्रयुक्तः, स एव जनैः अन्विष्यते मृग्यते । हस्ती हेमसहस्रेण सहस्रसुवर्णमुद्रया क्रीयते, मृगाधिपः सिंहः न क्रीयते इति शेषः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५५ ॥

गुण इति । गुणः गुणान्तरम् अपेक्षते इति तथोक्तः गुणान्तरसहकृत इति भावः स्वरूपस्य ख्यातिहेतवे प्रशंसाकारणाय भवतीति शेषः । स्वभावेन रम्यं लावण्यं तारुण्येन नवयौवनगुणेन मनोहरम् ॥ ५६ ॥

सुलभमिति । सुलभम् अनायासलभ्यं वस्तु सर्वस्य जनस्य आदरणीयतां न याति न प्राप्नोति । तथाहि जनाः स्वदारपरिहारेण निजभार्यापरित्यागेन परदारार्थिनः परस्त्रीलोलुपाः भवन्तीति शेषः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ५७ ॥

विक्रीतमिति । जडः मूर्खः जनः विक्रीतं निजम् आत्मानं

परेभ्य. स्वशरीरस्य के वा भूषां वितन्वते ॥ ५८ ॥
क्षणक्षयिणि सापाये भोगे रज्यन्ति नोत्तमाः।
सन्त्यज्याम्भोजकिञ्जल्कं न प्रार्थयति शैवलम् ॥ ५९ ॥
असम्भवगुणस्तुत्या जायते स्वात्मनस्त्रपा।
कर्णिकारं सुगन्धीति वदन् को नोपहस्यते ॥ ६० ॥
धनाशया खलीकारः कस्य नाम न जायते।
दूरादामिषलोभेन बध्यते खे वरः खगः ॥ ६१ ॥

स्वदेहमित्यर्थः वस्त्रैः वसनैः सत्कृते भूषयतीत्यर्थः विक्रीतदेहस्य भूषा केति भावः। के वा जनाः परेभ्यः परेषां तुष्ट्यर्थमिति भावः स्वशरीरस्य भूषाम् अलङ्कारं वितन्वते विस्तारयन्ति कुर्वन्तीत्यर्थः ॥५८॥

क्षणेति। उत्तमाः महान्तः क्षणक्षयिणि क्षणविनश्वरे सापाये सविघ्ने भोगे न रज्यन्ति न संसक्ता भवन्तीत्यर्थः। अम्भोजानां पद्मानां किञ्जल्कं केशरं सर्वदा सुलभमिति भावः सन्त्यज्य शैवलं जलनीलीम् अल्पकालस्थायिनीमिति भावः न प्रार्थयति नाकाङ्क्षति हंस इति शेषः प्रार्थयति इति परस्मैपदप्रयोगश्चिन्त्यः ॥ ५९ ॥

असम्भवेति। असम्भवानां गुणानां परकीयाणामिति भावः स्तुत्या प्रशंसया स्वस्य आत्मनः त्रपा लज्जा जायते। तथाहि कर्णिकारं कर्णिकारकुसुमं सुगन्धीति वदन् को जनः न उपहस्यते न उपहासास्पदं भवति ? सर्व एव भवतीत्यर्थः। विशेषेण सामान्य-समर्थनरूपोऽर्थान्तरन्यासः ॥ ६० ॥

धनाशयेति। धनाशया अर्थलोभेन कस्य जनस्य खलीकारः निर्भर्त्सनमिति भावः न जायते नाम, सर्वस्यैव तदर्थं महान् क्लेशः स्यादिति सम्भावयामि। सम्भावनायां नामशब्दः। तथाहि दूरात् आमिषं भोग्यवस्तु तस्य लोभेन खे आकाशे आगच्छन्निति शेषः वरः श्रेष्ठः महानित्यर्थः खगः पक्षी बध्यते निपात्यते व्याधैरिति शेषः। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६१ ॥

तटस्थैः ख्यापिताश्चेतो विशन्ति गुणिनां गुणाः।
उन्मीलितानां पद्मानां गन्धो वायुभिराहृतः॥ ६२॥
निजाशयवदाभाति पुंसां चित्ते पराशयः।
प्रतिमा मुखचन्द्राभे कृपाणे याति दीर्घताम्॥ ६३॥
अधमं बाधते भूयो दुःखवेगो न तूत्तमम्।
पादद्वयं व्रजत्याशु शीतस्पर्शो न चक्षुषी॥ ६४॥
गुणवान् सुचिरस्थायी देवोऽपि नाभिजायते।
तिष्ठत्येकां निशाञ्चन्द्रः श्रीमान् सम्पूर्णमण्डलः॥ ६५॥

तटस्थैरिति। गुणिनां गुणवतां गुणाः दयादाक्षिण्यादयः तटस्थैः उदासीनैः ततूसम्बन्धवर्जितैरिति यावत् ख्यापिताः कीर्त्तिताः न तु स्वेन स्वकीयैर्वेति भावः चेतः लोकानामिति शेषः विशन्ति हृदयङ्गमा भवन्तीत्यर्थः। तथाहि उन्मीलितानां विकसितानां पद्मानां वायुभिराहृतः गन्धः लोकानां हृदयं प्रविश्य आनन्दयतीति शेषः। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः॥ ६२॥

निजेति। पुंसां नराणां चित्ते मनसि पराशयः परस्य आशयः मानसो भावः निजाशयवत् स्वकीय आशय इव आभाति प्रकाशते। मुखचन्द्राभे मुखचन्द्रस्येव प्रभाशालिनि कृपाणे खड्गे प्रतिमा प्रतिबिम्बं मुखचन्द्रस्येति शेषः दीर्घताम् आयतत्वं याति गच्छति कृपाणस्य दीर्घावयवत्वादिति भावः॥ ६३॥

अधममिति। दुःखानां शोकक्षोभादीनां वेगः अधमं नीचं जनं भूयः अत्यन्तं बाधते उत्तमं महान्तं जनं न तु नैव बाधते इति शेषः। शीतस्पर्शः पादद्वयं चरणयुगलम् आशु शीघ्रं व्रजति गच्छति, चक्षुषी नेत्रे न व्रजतीति शेषः॥ ६४॥

गुणवानिति। गुणवान् देवोऽपि सुचिरस्थायी दीर्घकालजीवी न अभिजायते। तथाहि श्रीमान् सम्पूर्णमण्डलः चन्द्रः एकां निशां

यत एवागतो दोषस्तत एव निवर्त्तते।
अग्निदग्धस्य विस्फोटशान्तिः स्यादग्निना ध्रुवम्॥ ६६॥
स्वधियो निश्चयो नास्ति यस्य स भ्रमते स्वयम्।
प्रवातबालपत्रस्थः पटस्तत्र निदर्शनम्॥ ६७॥
कथाप्रबन्धे बन्ध्योऽपि कश्चिदेवानुरज्यते।
प्रायः श्वासादपत्यस्य श्वसन्निजकलेवरे॥ ६८॥
बुद्धिमत्त्वाभिमानी को भवेत् प्राज्ञोपजीविनाम्।
अन्यदेयैरलङ्कारैर्नाहङ्कारी विभूषणे॥ ६९॥

रात्रिं व्याप्येत्यर्थः, व्याप्तौ द्वितीया। तिष्ठति। विशेषेण सामान्य-समर्थनरूपोऽर्थान्तरन्यासः॥ ६५॥

यत इति। दोषः यत एव यस्मादेव आगतः उत्पन्नः, तत एव निवर्त्तते शाम्यति। तथाहि अग्निदग्धस्य अग्निना ध्रुवम् अग्निनैव विस्फोटानां व्रणानां शान्तिः स्यात्। विशेषेण सामान्य-समर्थनरूपोऽर्थान्तरन्यासः॥ ६६॥

स्वधिय इति। यस्य स्वधियः निजबुद्धेः निश्चयः स्थिरता नास्ति स स्वयं भ्रमते घूर्णते किमपि कर्त्तुं न निश्चिनोतीत्यर्थः। तत्र विषये प्रकृष्टो वातो वायुर्यत्र तादृशे बालपत्रे नवपत्रे तिष्ठतीति तथोक्तः पटः वसनं निदर्शनं दृष्टान्तः॥ ६७॥

कथाप्रबन्धे इति। कथाप्रबन्धे बन्ध्योऽपि कश्चिदेव जनः अनु-रज्यते अनुरक्तो भवति। प्रायः प्रायेणेत्यर्थः अपत्यस्य पुत्रस्येत्यर्थः श्वासात् जीवनात् निजकलेवरे स्वशरीरे श्वसन् जीवन् अनुरज्यते इति शेषः॥ ६८॥

बुद्धिमत्त्वेति। प्राज्ञोपजीविनां पण्डितसेविनां मध्ये को जनः बुद्धिमत्त्वाभिमानी बुद्धिशालित्वाहङ्कारी भवेत्। अन्येन देयैः

उत्तमोऽप्यधमस्य स्याद् याञ्चानम्रकरः क्वचित् ।
कौस्तुभादीनि रत्नानि ययाचे हरिरम्बुधिम् ॥ ७० ॥
प्रयत्ने समके केचिदेव स्युः फलभागिनः ।
क्षीरोदमथनाद्देवैरमृतं प्रापि नासुरैः ॥ ७१ ॥
गुणैः पूजा भवेत् पुंसां नैकस्माज्जायते कुलात् ।
चूडारत्नं शशी शम्भोः यानमुच्चैःश्रवा हरेः ॥ ७२ ॥

भिन्नालङ्कारैरिति भावः न तु स्वसामर्थ्येन प्राप्तैरिति भावः अलङ्कारैः विभूषणे स्वदेहालङ्करणे अहङ्कारो न कर्त्तव्य इति शेषः ॥ ६९ ॥

उत्तम इति । क्वचित् उत्तमोऽपि महानपि अधमस्य नीचस्य निकटे इति शेषः याच्ञया नम्रौ करौ यस्य तथाभूतः स्यात् । तथाहि हरिर्नारायणः कौस्तुभादीनि रत्नानि अम्बुधिं समुद्रं ययाचे प्रार्थयामास । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ७० ॥

प्रयत्न इति । प्रयत्ने प्रयासे समके तुल्ये, अपिरत्राध्याहार्य्यः । केचिदेव न तु सर्वे इति भावः फलभागिनः स्युः भवेयुः । तथाहि देवैः क्षीरोदस्य मथनात् अमृतं प्रापि प्राप्तम् असुरैः तुल्यप्रयासैरपीति भावः न प्रापीति शेषः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ७१ ॥

गुणैरिति । गुणैः पुंसां पूजा भवेत् गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वय इति प्रयोगश्चात्र साम्येनोहनीयः । एकस्मात् केवलात् कुलात् सद्वंशात् न जायते । सत्कुलजातत्वमेव न पूजास्थानमिति भावः । शशी चन्द्रः शम्भोः हरस्य चूडारत्नं शिरोमणिः, उच्चैःश्रवाः तदाख्यः अश्वः हरेरिन्द्रस्य यानं वाहनं जातः चन्द्रस्य गुणाधिक्यात् हरमौलौ अवस्थानं तथा एकस्थानजातस्यापि उच्चैःश्रवसः गुणाप्रकर्षात् इन्द्रस्य वाहनत्वं सञ्जातम् । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ७२ ॥

भोगः परोपतापेन पुंसां दुःखाय न स्थिरः ।
पानमप्यसृजः चिप्रं स्वपीड़ायै जलौकसाम् ॥ ७३ ॥
नोपभोगपरानर्थान् कोऽपि सञ्चिनुते चिरम् ।
आखवः किमलङ्कारानात्मन्याहृत्य कुर्वते ॥ ७४ ॥
विवर्णवचनैर्मन्युर्गूढ़ोऽप्यन्तः प्रकाशते ।
इन्धनान्तरसंस्थैश्च ज्वलत्यग्निः पयःकणैः ॥ ७५ ॥
निकटस्थं गरीयांसमपि लोको न मन्यते ।
पवित्रामपि यन्मर्त्या न नमस्यन्ति जाह्नवीम् ॥ ७६ ॥

भोग इति । परोपतापेन परं पीड़यित्वेति भावः पुंसां भोगः वषयसम्भोगः दुःखाय परिणतावित्ति शेषः भवति, अतः असौ न स्थिरः न परिणतिं सहते इति भावः । जलौकसाम् असृजः रक्तस्य परकीयस्येति शेषः पानमपि चिप्रं शीघ्रं स्वपीड़ायै आत्मपीड़ायै भवतीति शेषः । परिपाकं न कर्त्तुं शक्नुवन्तीति भावः । विशेषेण समान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ७३ ॥

नेति । कोऽपि जनः उपभोगपरान् उपभोग्यानित्यर्थः अर्थान् परिच्छदादीनिति भावः चिरं न सञ्चिनुते न अर्थसञ्चयं करोतीत्यर्थः । तथाहि आखवः उन्दुरवः आत्मनि आहृत्य अलङ्कारान् भूषणानि किं कुर्वते नैव कुर्वते इत्यर्थः । खोदरपूरणार्थमेवार्थसञ्चयं जनाः कुर्वन्ति न तु भूषणाद्यर्थमिति भावः ॥ ७४ ॥

विवर्णेति । अन्तः गूढ़ोऽपि मन्युः क्रोधः शोको वा विवर्णवचनैः विकृतवचनैरिति यावत्, विवर्णवदनैरित्यपि पाठः । प्रकाशते । अग्निः इन्धनान्तरसंस्थैः काष्ठाभ्यन्तरस्थितैः पयसां जलानां कणैः अग्निः ज्वलति दीप्यते ॥ ७५ ॥

निकटस्थमिति । लोकः निकटस्थं सन्निहितं गरीयांसमपि जनं न मन्यते नाद्रियते, यत् यस्मात् मर्त्त्याः मानवाः पवित्रां पाप-

स्वजनः स्वात्मवज्जन्तुर्ज्ञायते गुणवान् परैः।
गोपैर्गोपवद्ज्ञायि हरिर्देवैर्जगत्पतिः॥ ७७॥

उत्तमस्तोषमायाति तदङ्गं पोष्यते यदि।
वृक्षः प्रसीदति प्रायः पादाभ्यङ्गेन न स्वयम्॥ ७८॥

सर्वत्र गुणवानेव चकास्ति प्रथिते नरे।
मणिर्मूर्ध्नि गले बाहौ पादपीठेऽपि शोभते॥ ७९॥

उत्तमं सुचिरं नैव विपदोऽभिभवत्यलम्।
राहुग्रसनसम्भूता क्षणं विच्छाययेद्विधुम्॥ ८०॥

हारिणीमपि जाह्नवीं गङ्गां निकटस्थामिति शेषः न नमस्यन्ति। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः॥ ७६॥

स्वजन इति। गुणवान् स्वजनः स्वजनैः इति शेषः स्वात्मवत् जन्तुः प्राणी ज्ञायते निश्चीयते तथा परैः स्वजनभिन्नैः जनैः गुणवान् एव ज्ञायते। तथाहि गोपैः हरिः कृष्णः गोपवत् गोप इव, देवैः जगतां पतिः अज्ञायि ज्ञातः। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः॥ ७७॥

उत्तम इति। उत्तमः महान् जनः तोषम् आयाति सन्तुष्यतीत्यर्थः यदि तस्य अङ्गं पुष्यते सेव्यते। वृक्षः पादाभ्यङ्गेन चरणे तैलदानेनेत्यर्थः मूले जलदानेनेति भावः प्रायः प्रसीदति प्रसादं गच्छति पोषं गच्छतीति भावः स्वयम् आत्मना न प्रसीदतीत्यर्थः॥ ७८॥

सर्वत्रेति। गुणवान् जनः सर्वत्र प्रथिते विख्याते साधुत्वेनेति भावः नरे नरसमीपे इत्यर्थः एव चकास्ति शोभते। तथाहि मणिः मूर्ध्नि शिरसि गले कण्ठे बाहौ पादपीठेऽपि शोभते॥ ७९॥

उत्तममिति। विपदः उत्तमं जनं सुचिरं दीर्घकालं नैव

प्रायः स्वभावं मुञ्चन्ति सन्तः संसर्गतोऽसताम् ।
चण्डाः कामानलात् पादा हिमांशोरमृतस्रजः ॥८१॥
तुल्यं परोपतापित्वं क्रुद्धयोः साधुनीचयोः ।
न दाहे ज्वलतोर्भिन्नश्चन्दनेन्धनयोः क्वचित् ॥ ८२ ॥
न भाति वाञ्छा वैजात्ये न देवा भान्ति वादिनि ।
अञ्जनं दूषणं वक्त्रे भूषणं किल लोचने ॥ ८३ ॥

अलम् अत्यर्थम् अभिभवन्ति । तथाहि राहुग्रसने सम्भूता सञ्जाता विपदिति शेषः । विधुं चन्द्रं क्षणं क्षणकाल व्याप्य विच्छायवेत् मलिनयेत् । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ८० ॥

प्राय इति । सन्तः साधवः असतां संसर्गतः सङ्गात् स्वभावं निजं भावं प्रायः बाहुल्येन मुञ्चन्ति त्यजन्ति । तथाहि अमृतस्रजः अमृतवर्षिणः हिमांशोः चन्द्रस्य पादाः किरणाः कामानलात् कामजन्यसन्तापात् चण्डाः उग्राः भवन्तीति शेषः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ८१ ॥

तुल्यमिति । क्रुद्धयोः कुपितयोः साधुनीचयोः परोपतापित्वं परपीड़कत्वं तुल्यं समम् । क्वचित् कुत्रापि ज्वलतोः चन्दनेन्धनयोः चन्दनकाष्ठतदन्यकाष्ठयोः दाहे दहनकार्य्ये न भिन्नं न प्रभेदोऽस्तीति शेषः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥८२॥

नेति । वैजात्ये विजातीये वस्तुनीति शेषः अयोग्ये वस्तुनीति भावः वाञ्छा अभिलाषः न भाति न शोभते, देवाः वादिनि तर्कवादरते नास्तिके इति भावः न भान्ति न शोभन्ते नाद्रियन्ते । तथाहि वक्त्रे वदने अञ्जनं कज्जलं दूषणं लोचने किल नयने एव भूषणम् अलङ्कारः शोभाधायकमिति भावः ॥ ८३ ॥

दुर्भगः स्यात् प्रकृत्या यो विभूत्यापि स तादृशः ।
गोमये श्रीनिवासोऽस्ति न तथापि मनोहरम् ॥ ८४ ॥
गुणानर्चन्ति जन्तूनां न जातिं केवलां क्वचित् ।
स्फाटिकं भजनं भग्नं काकिन्यापि न गृह्यते ॥ ८५ ॥
आगच्छन्नुत्सवो भाति यथैव न तथा गतः ।
हिमांशोरुदयः सायं चकास्ति न तथोषसि ॥ ८६ ॥
मनस्विनो न मन्यन्ते परतः प्राप्य जीवनम् ।
बलिभुग्भ्यो न काकेभ्यः स्पृहयन्ति हि कोकिलाः ॥ ८७ ॥

दुर्भग इति । यः प्रकृत्या स्वभावेन दुर्भगः अमनोहर इत्यर्थः स विभूत्यापि सम्पदापि तादृशः दुर्भग एवेत्यर्थः सम्पन्नोऽपि सुभगत्वेन नाद्रियते इति भावः । तथापि गोमये श्रिया लक्ष्म्या निवासो अस्ति भवति, तथापि मनोहरं न । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ८४ ॥

गुणानिति । जन्तूनां गुणान् अर्चन्ति पूजयन्ति जना इति शेषः । गुणाः पूजास्थानमिति पूर्वमुक्तम् । केवलां जातिं सत्कुलजातत्वं क्वचिदपि न अर्चन्तीति शेषः । तथाहि भग्नं स्फाटिकं भाजनं स्फाटिकपात्रं काकिन्या विंशतिवराटिकयापि, वराटकानां दशकद्वयं यत् सा काकिनीति लीलावती । न गृह्यते न क्रीयते जनैरिति शेषः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ८५ ॥

आगच्छन्निति । आगच्छन् उत्सवः यथैव भाति राजते, गतः अतीतः तथा न । तथाहि सायं हिमांशोश्चन्द्रस्य उदयः यथा चकास्ति शोभते, तथा उषसि प्रभाते न । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ८६ ॥

मनस्विन इति । मनस्विनः अभिमानिन इति यावत् परतः अन्यस्मात् जीवनं प्राप्य न मन्यन्ते न कृतज्ञतया तत् स्वीकुर्वन्तीत्यर्थः ।

सन्तोषक्षतये पुंसामाकस्मिकधनागमः।
सरसां सेतुभेदाय वर्षौघः स च न स्थितः॥ ८८॥
जीयते भूगतोऽप्यात्मा कालेनात्मापि स्वर्गतः।
भवेत् श्मशानमुद्यानमुद्यानञ्च श्मशानभम्॥ ८९॥
उच्चशेखरगं वस्तु शुभं स्यात्सुखकारणम्।
उपशामयते बाधां यथैवामृतसंस्कृतम्॥ ९०॥

इह तथापि कोकिलाः वलिभुग्भ्यः स्वकर्मेधितस्वपूजाभोजिभ्यः काकेभ्यः स्वपोषकेभ्य इति भावः न स्पृहयन्ति न तान् पोषकान् मन्यन्ते इति भावः। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः॥ ८७॥

सन्तोषेति। पुंसाम् आकस्मिकधनागमः सहसा धनलाभः सन्तोषस्य लालसाराहित्येन स्थितेरिति यावत् क्षतये नाशाय भवतीति शेषः उत्तरोत्तरं धनाशाया वर्द्धनादिति भावः। वर्षौघः वृष्टिजलप्रवाहः सरसां सरोवराणां सेतुभेदाय भवति, स च वर्षौघः न स्थितः न स्थायीत्यर्थः सेतुभेदेन तत्क्षयादेव निःसरतीति तादृशं धनञ्च न बहुकालं तिष्ठतीति भावः। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः॥ ८८॥

जीयते इति। भूगतः पृथिवीस्थोऽपि आत्मा जीयते शत्रुभिः पराभूयते। कालेन स आत्मापि स्वर्गतः स्वर्गस्थः भवतीति शेषः। श्मशानम् उद्यानम् उपवनम्, उद्यानञ्च उपवनञ्च श्मशानभं श्मशानतुल्यं भवेत् कालेनेति शेषः। कदा कावस्था भवेदिति न केनापि ज्ञायते इति भावः॥ ८९॥

उच्चेति। उच्चशेखरगम् उन्नतशिरोभूषणस्थितम् उत्कृष्टमुकुटस्थमित्यर्थः वस्तु रत्नादिकमिति भावः सुखकारणं सुखहेतुः शोभावर्द्धनेन सन्तोषप्रदमिति भावः शुभं मङ्गलकरञ्च स्यात्। यथा

सन्तुष्यत्युत्तमः स्तुत्या धनेन महताधमः।
प्रसीदन्ति जयैर्देवा बलिभिर्भूतविग्रहाः॥ ९१॥
स्वजातीयविघाताय माहात्म्यं दृश्यते नृणाम्।
श्येनो विहङ्गमानेव हिनस्ति न भुजङ्गमान्॥ ९२॥
गुरुप्रयोजनोद्देशादर्चयन्ति न भक्तितः।
दुग्धदात्रीति गौर्गेहे पोष्यते न तु धर्मतः॥ ९३॥
महतां तादृशं तेजो यत्र शाम्यन्त्यनौजसः।

तथाश्चीत्यर्थः अमृतेन विभातकया सस्कृतं परिपक्वं वस्तु इति शेषः औषधमिति यावत् बाधां पीड़ाम् उपशामयते नाशयतीत्यर्थः॥९०॥

सन्तुष्यतीति। उत्तमः साधुः स्तुत्या स्तुतिवचसा सन्तुष्यति, अधमः नीचः महता धनेन सन्तुष्यतीति शेषः। देवाः जयैः जयकीर्त्तनैः, जय देव जगन्नाथ इत्यादिभिरिति भावः प्रसीदन्ति प्रसन्ना भवन्ति। भूतविग्रहाः भूतानां वेतालादीनां विग्रहाः मूर्त्तयः बलिभिः माषभक्तादिभिरिति भावः प्रसीदन्तीति शेषः॥ ९१॥

स्वजातीयेति। नृणां प्राणिनामिति भावः स्वजातीयविघाताय स्वजातीयध्वंसाय माहात्म्यं प्राबल्यं सामर्थ्यमिति यावत् दृश्यते। तथाहि श्येनः पक्षिविशेषः विहङ्गमान् क्षुद्रपक्षिण एव हिनस्ति, न भुजङ्गमान् न सर्पान्। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः॥ ९२॥

गुर्विति। गुरुणः महतः प्रयोजनस्य कार्य्यस्य उद्देशात् प्रत्याशयेत्यर्थः अर्च्चयन्ति पूजयन्ति सेवन्ते इत्यर्थः जनानिति जना इति च शेषः, न भक्तितः अर्च्चयन्तीति शेषः। तथाहि गौः दुग्धदात्री इति हेतोः गेहे पोष्यते पाल्यते, धर्मतः गोसेवायां धर्मो भवेदिति बुद्ध्येत्यर्थः न पोष्यते इति शेषः। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः॥ ९३॥

महतामिति। महतां जनानां तादृशं तेजः प्रताप इति

अस्तं यान्ति प्रकाशेन तारका हि विवस्वतः ॥ ९४ ॥

दाता दानस्यान्तरा स्यात् पृथिव्यां
गेहे गेहे याचकानां समूहः।
चिन्तारत्नस्यास्ति सत्त्वे विवादो
मार्गे मार्गे प्रार्थकाः सन्त्यसंख्याः ॥ ९५ ॥

चारुता अप्यपसदे पदार्थे धैर्येण तदनुवादिगुणत्वात्।
वेणुगो भवति मञ्जुरसो यन्त्रगो हि सुखदः कृतशब्दः ॥९६॥

नराः संस्काराहा जगति किल केचित् सुकृतिनः

यावत् अस्तीति शेषः, यत्र तेजसि सति अनौजसः निस्तेजसः जनाः शाम्यन्ति न विराजन्ते इति भावः। हि तथाहि तारकाः नक्षत्राणि विवस्वतः सूर्यस्य प्रकाशेन तेजसेत्यर्थः अस्तम् अदर्शनं यान्ति। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ९४ ॥

दातेति। पृथिव्याम् अन्तरा मध्ये इत्यर्थः दानस्य देयवस्तुनः दाता स्यात् विरल इति शेषः। किन्तु गेहे गेहे प्रतिगृहं याचकानां भिक्षूणां समूहः आगच्छतीति ~~भावः। अथवा हि~~ चिन्तारत्नस्य चिन्तामणेः सत्त्वे अस्तित्वे विवादः अस्ति कोऽपि वदति चिन्तामणिर्नाम किमपि रत्नमस्ति, को वा न स्वीकरोतीति भावः, किन्तु मार्गे मार्गे प्रतिपथम् असंख्याः अगण्याः प्रार्थकाः सन्ति। शालिनीवृत्तम् ॥९५॥

चारुतेति। अपसदे अधमे पदार्थे वस्तुनि अपि धैर्येण गाम्भीर्येण स्यादिति शेषः तदनुवादिगुणत्वात् गाम्भीर्यानुसारिगुणयोगात् चारुताः मनोहरत्वादयः गुणा इति शेषः सन्तीति शेषः। हि तथाहि यन्त्रगः वीणादियन्त्रगतः कृतशब्दः उच्चारितशब्दः वेणुगः अधमवंशगत इति यावत् मञ्जुरसः मनोहरास्वादः भवति वेणोः गाम्भीर्यादिति भावः ॥ ९६ ॥

नरा इति। जगति केचित् सुकृतिनः पुण्यवन्तः परधियः उद्-

समानायां जात्यामपि वयसि सत्यां परधियः ।
अयं दृष्टान्तोऽत्र यत् स्फुटकरणतोऽभ्यसनतः
शुकः श्लोकान् वक्तुं प्रभवति न काकः क्वचिदपि ॥ ९७ ॥

धनमपि परदत्तं दुःखमौचित्यभाजां
भवति हृदि तदेवानन्दकारीतरेषाम् ।
मलयजरसबिन्दो वर्द्धते नो हि तोयैः
जगति च रसलाभादेवमन्यो यथा स्यात् ॥ ९८ ॥

कालक्रमेण परिणामवशाद्धि भव्या
भावा भवन्ति खलु पूर्वमतीवतुच्छाः ।

लष्टमतयः नराः समानायां तुल्यायां जात्यामपि वयसि समानेऽपीति शेषः संस्काराहाः संस्कृतमतय इति यावत् विशुद्धचरिता इति भावः भवन्ति । अत्र अयं दृष्टान्तः निदर्शनं, यत् स्फुटकरणतः स्फुटेन्द्रियसद्भावेऽपीत्यर्थः उभयोरिति भावः अभ्यसनतः अभ्यासवशात् शुकः श्लोकान् वक्तुम् उच्चारितुं प्रभवति शक्नोति क्वचिदपि काको न प्रभवतीति शेषः। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः । शिखरिणीवृत्तम् । रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणीति तल्लक्षणात् ॥ ९७ ॥

धनमिति । परदत्तम् अन्येन अर्पितं धनम् औचित्यभाजां मानिनामिति यावत् दुःखं दुःखदमिति भावः परदत्तधनस्य भिक्षालब्धतया हेयत्वादिति भावः । तदेव परदत्तं धनम् इतरेषां नीचानां हृदि आनन्दकारि सन्तोषदं भवति । जगति पृथिव्यां मलयजरसबिन्दुः चन्दनबिन्दुः तोयैः नो हि वर्द्धते न वृद्धिं गच्छति यथा चान्यो वृक्ष इति शेषः रसलाभात् जलप्राप्त्या स्यात् वर्द्धते इति शेषः । मालिनीवृत्तम् । ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ॥ ९८ ॥

कालक्रमेणेति । पूर्वं प्राक् अतीवतुच्छाः भावाः पदार्थाः काल-

मुक्तामणिर्जलदतोयकणोऽप्यणीयान्
सम्पद्यते च चिरकीचकरन्ध्रमध्ये ॥ ९९ ॥
इयं कुसुमदेवेन कविनैकेन निर्मिता ।
दृष्टान्तकलिका नाम जृम्भतां कविमानसे ॥ १०० ॥
इति कुसुमदेवरचितं दृष्टान्तशतकं सम्पूर्णम् ।

---

# नीतिशतकम् ।

---

अज्ञः सुखमाराध्यः सुखतरमाराध्यतेऽशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति ॥ १ ॥

क्रमेण हि परिणामवशात् भव्याः सुन्दरा भवन्ति खलु भवन्त्येव । तथाहि अणीयान् अतिक्षुद्रः जलदस्य मेघस्य तोयकणः जलबिन्दुः चिरं कीचकरन्ध्रमध्ये वेणुविशेषशुषिरमध्ये स्थित इति शेषः । मुक्तामणिः मौक्तिकरत्नं सम्पद्यते जायते । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः । वसन्ततिलकं वृत्तम् । ज्ञेयं वसन्ततिलकं तभजा जगौ ग इति तल्लक्षणात् ॥ ९९ ॥

इयमिति । एकेन केवलेन वा मुख्येन कविना कुसुमदेवेन निर्मिता इयं दृष्टान्तकलिका दृष्टान्ताङ्कुरः दृष्टान्तशतिकेति पाठान्तरं कवीनां मानसे जृम्भतां प्रकाशतां नाम सम्भावनायां कवय इमां मनसा धारयेयुरिति सम्भावयामीत्यर्थः ॥ १०० ॥

इति वि, ए उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता दृष्टान्तशतकव्याख्या समाप्ता ।

---

अज्ञ इति । अज्ञः मूर्खः दुःखयैः सुखं यथा तथा आराध्यः

लभेत सिकतासु तैलमपि यत्नतः पीड़यन्
पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः ।
कदाचिदपि पर्यटन् शशविषाणमासादयेत्
न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ २ ॥
प्रसह्य मणिमुद्धरेन्मकरवक्त्रदंष्ट्राङ्कुरात्
समुद्रमपि सन्तरेत् चपलमूर्मिमालाकुलम् ।
भुजङ्गमपि कोपितं शिरसि पुष्पवद्धारयेत्
न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ॥ ३ ॥

सेव्यः । अशेषज्ञः विज्ञ इत्यर्थः सुखतरम् अतिसुखेनेत्यर्थः आराध्यते सेव्यते । किन्तु ज्ञानलवेन यत्किञ्चिज्ज्ञानेन दुर्विदग्धं वितण्डा-चतुरमिति भावः नरं ब्रह्मापि चतुर्मुखोऽपि न रञ्जयति न तोषयति ॥ १ ॥

लभेतेति । यत्नतः यत्नेन पीड़यन् सिकतासु वालुकासु अपि मध्ये इति शेषः तैलं लभेत प्राप्नुयात् । पिपासार्दितः तृषार्त्तः मृगतृष्णिकासु मरीचिकासु अपि सलिलं पिबेच्च, तथा पर्य्यटन् परितो भ्रमन् कदाचिदपि शशविषाणं शशकस्य शृङ्गम् आसादयेत् लभेत, जन इति शेषः असम्भवमपि सम्भवेदिति भावः, तु किन्तु प्रतिनिविष्टस्य प्रतिवेशिनः मूर्खजनस्य दुर्जनस्येति भावः चित्तं न आराधयेत् न तोषयितुं शक्नुयादिति भावः । पृथ्वीवृत्तम् ॥ २ ॥

प्रसह्येति । प्रसह्य बलात् मकरस्य वक्त्रे वदने यः दंष्ट्राङ्कुरः दशनकलिका तस्मात् मणिं रत्नम् उद्धरेत् उत्पाटयेत्, ऊर्मि-मालाभिः तरङ्गनिचयैः व्याकुलं चपलं समुद्रमपि सन्तरेत्, कोपितं भुजङ्गमपि द्विजिह्वमपि शिरसि मस्तके पुष्पवत् पुष्पमालामिवेति भावः धारयेत्, तु किन्तु प्रतिनिष्टेत्यादि । पृथ्वीवृत्तम् ॥ ३ ॥

शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गनगतः खलो मनसि सप्त शल्यानि मे ॥ ४ ॥

मणिः शाणाल्लीढः समरविजयी हेतिनिहतो
मदक्षीणो नागः शरदि सरितः श्यामपुलिनाः ।
कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता
न निम्नाः शोभन्ते गलितविभवाश्चार्थिषु जनाः ॥ ५ ॥

परिक्षीणः कश्चित् स्पृहयति यवानां प्रसृतये
स पश्चात् सम्पूर्णो गणयति धरित्रीं तृणसमाम् ।

शशीति । शशी चन्द्रः दिवसे धूसरः मलिनः, कामिनी गलितयौवना भ्रष्टयौवना, सरः सरोवरं विगतवारिजं कमलशून्यं, स्वाकृतेः सुन्दरावयवस्य पुरुषस्य मुखम् अनक्षरं वाक्शून्यं, प्रभुः स्वामी राजेत्यर्थः धनपरायणः अर्थलुब्धः, सज्जनः सततदुर्गतः सततदुःस्थः, खलः दुर्जनः नृपाङ्गनगतः राजसभास्थितः, एतानि सप्त मम मनसि शल्यानि । पृथ्वीवृत्तम् ॥ ४ ॥

मणिरिति । शाणेन शाणाख्ययन्त्रेण आलीढः घर्षितः मणिः, समरविजयी संग्रामजयी हेतिनिहतः अस्त्रनिहतः, नागः हस्ती मदेन मदजलस्रावेण क्षीणः कृशः, शरदि शरत्काले श्यामपुलिनाः श्यामसैकताः सरितः नद्यः, कलाशेषः कलामात्रावशिष्टः चन्द्रः, सुरतेन मृदिता क्लान्तिं नीता बालवनिता बाला स्त्री, अर्थिषु याचकेषु गलितविभवाः वितीर्णसम्पदः निम्नाः लघुतां प्राप्ताः जनाः न शोभन्ते । शिखरिणीवृत्तं, रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणीति तल्लक्षणात् ॥ ५ ॥

परिक्षीण इति । परिक्षीणः दरिद्रः कश्चित् जनः यवानां

अतश्चानेकान्ता गुरुलघुतयार्थेषु धनिनाम्
अवस्था वस्तूनि प्रथयति च सङ्कोचयति च ॥ ६ ॥
शास्त्रोपस्कृतशब्दसुन्दरगिरः शिष्यप्रदेयागमा
विख्याताः कवयो वसन्ति विषये यस्य प्रभोर्निर्धनाः ।
तज्जाड्यं वसुधाधिपस्य सुधियो ह्यर्थं विनापीश्वराः
कुत्स्याः स्युः कुपरीक्षका न मणयो यैरर्घतः पातिताः ॥ ७ ॥

प्रवृतये अल्पीकृतपरिमाणाय स्पृहयति आकाङ्क्षति । सः परिक्षीणः पश्चात् सम्पूर्णः धनसम्पदा युक्त इति यावत् धरित्रीं पृथिवीं तृण-समां तृणतुल्यां गणयति मन्यते । अतः अस्मात् कारणाच्च धनिनाम् अर्थेषु गुरुलघुतया गौरवलाघववशात् अनेकान्ता बहुविधा अवस्था वस्तूनि पदार्थान् प्रथयति च सङ्कोचयति च । कारणेन कार्य्य-समर्थनरूपोऽर्थान्तरन्यासः । तदुक्तं दर्पणे, सामान्यं वा विशेषेण विशेषस्तेन वा यदि । कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते । साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः इति । शिखरिणीवृत्तम् ॥ ६ ॥

शास्त्रेति । शास्त्रेण व्याकरणादिना उपस्कृतः व्युत्पन्नः शब्दः यासु तथाविधाः सुन्दर्य्यः मनोहारिण्यः गिरः वाचः येषां तथोक्ताः तथा शिष्येभ्यः प्रदेयः आगमः शास्त्रं यैः तथाविधाः, विशेषणद्वये-नाध्ययनाध्यापने सूचिते । किन्तु निर्धनाः दरिद्राः विख्याताः कवयः यस्य प्रभोः राज्ञः विषये जनपदे वसन्ति, तत् तादृशकवेर्विषयेषु वासकरणमित्यर्थः वसुधाधिपस्य तस्येति शेषः जाड्यं मूर्खत्वम् । हि यतः सुधियः कवयः अर्थं विनापि धनाभावेऽपीत्यर्थः ईश्वराः प्रभवः संसारनिर्वहणसमर्था इत्यर्थः । तत् परीक्षकस्य कुत्सा नाम यदि हि बहुमूल्या मणयः रत्नानि अर्घतः यथार्थमूल्यात् पातिता लघूकृता भवन्ति इति शेषः । शार्दूलविक्रीडितं वृत्तं, सूर्य्या-श्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति तल्लक्षणात् ॥ ७ ॥

विपदि धैर्य्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचिर्व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ ८ ॥

निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥ ९ ॥

हर्तुर्याति न गोचरं किमपि सम्पुष्णाति यत्सर्वदा-
प्यर्थिभ्यः प्रतिपाद्यमानमनिशं प्राप्नोति वृद्धिं पराम् ।

विपदीति । विपदि विपत्काले धैर्य्यम्, अथ विपदनन्तरम् अभ्युदये सम्पदि क्षमा जनापराधसहनं, सदसि सभायां वाक्पटुता वाग्मिता, युधि युद्धे विक्रमः पराक्रमः, यशसि यशःसाधने कर्मणीत्यर्थः अभिरुचिः अभिनिवेशः, तथा श्रुतौ वेदार्थज्ञाने व्यसनम् आसक्तिः, इदं सर्वं महात्मना महापुरुषाणा प्रकृतिसिद्धं नैसर्गिकम् ॥ ८ ॥

निन्दन्त्विति । नीतिनिपुणाः नयकुशलाः निन्दन्तु निन्दां कुर्वन्तु, यदि वा किंवा स्तुवन्तु प्रशंसन्तु, लक्ष्मीः समाविशतु प्रविशतु स्वगृहमिति शेषः, वा यथेष्टं यथाकामं गच्छतु । अद्यैव मरणम् अस्तु भवतु युगान्तरे वा मरणमस्त्विति शेषः, किन्तु धीराः महान्तः न्याय्यात् पथः युक्तिमार्गादित्यर्थः पदम् एकमपीति शेषः न प्रविचलन्ति न प्रभ्रश्यन्ति । वसन्ततिलकं वृत्तं, उक्तं वसन्ततिलकं तभजा जगौ ग इति तल्लक्षणात् ॥ ९ ॥

हर्तुरिति । येषां विदुषामित्यर्थः यत् किमपि अनिर्वचनीयम्

कल्पान्तेष्वपि न प्रयाति निधनं विद्याख्यमन्तर्धनं
येषां तान् प्रति मानमुज्झति नृपः कस्तैन संस्पर्धते ॥१०॥
अधिगतपरमार्थान् पण्डितान्मावमंस्था-
स्तृणमिव लघुलक्ष्मीर्नैव तान् संरुणद्धि ।
अभिनवमदलेखाश्यामगण्डस्थलानां
न भवति विसतन्तुर्वारणं वारणानाम् ॥ ११ ॥

अन्तर्धनम् अन्तःसारमिति यावत् विद्याख्यं विद्यारूपं धनं हर्त्तुः तस्करस्य गोचरं न याति तस्करेण हर्त्तुं न शक्यते इत्यर्थः, सर्वदा सर्वस्मिन् समये संपुष्णाति सम्यक् पुष्टिं गच्छति अनुशीलनेनेति भावः, अनिशं सततम् अर्थिभ्यः याचकेभ्यः शिष्येभ्य इति यावत् प्रतिपाद्यमानमपि दीयमानमपि परां महतीं वृद्धिं प्राप्नोति, तथा कल्पान्तेषु प्रलयेष्वपि निधनं नाशं न प्रयाति नापगच्छतीत्यर्थः, तान् सुधियः प्रति यः नृपः मानम् उज्झति ददाति तेन नृपेण सहेत्यर्थः कः संस्पर्द्धते सम्यक् स्पर्द्धां करोति न कोऽपीत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ १० ॥

अधिगतेति । अधिगतः विदितः परमार्थः परमं तत्त्वं यैः तान् पण्डितान् विदुषः मा अवमंस्थाः न अवजानीहि, तृणमिव लघुलक्ष्मीः क्षुद्रा सम्पद् तान् विदुषः नैव संरुणद्धि न हि आप्नोति सामान्यधनलोभेन ते तव वशवर्त्तिनो न भविष्यन्तीति भावः । अभिनवया मदलेखया मदजलरेखया श्यामं मलिनं गण्डस्थलं येषां तथाभूतानां वारणानां हस्तिनां वारणं बन्धनकारणं विसतन्तुः मृणालसूत्रं न भवति । मृणालसूत्रेण हस्तिनो न बध्यन्ते इत्यर्थः । मालिनीवृत्तम् । ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् । दृष्टान्तालङ्कारः । तदुक्तं दर्पणे । दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिविम्बनमिति ॥ ११ ॥

क्षुत्क्षामोऽपि जराकृशोऽपि शिथिलप्राणोऽपि कष्टान्दशा-
मापन्नोऽपि विपन्नदीधितिरपि प्राणेषु नश्यत्स्वपि ।
उन्मत्तेभविभिन्नकुम्भकवलग्रासैकबद्धस्पृहः
किं जीर्णं तृणमत्ति मानमहतामग्रेसरः केशरी ॥ १२ ॥

असन्तो नाभ्यर्थ्याः सुहृदपि न याच्यः कृशधनः
प्रिया न्याय्या वृत्तिर्मलिनमसुभङ्गेऽप्यसुकरम् ।
विपद्युच्चैः स्थेयं पदमनुविधेयञ्च महतां
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥ १३ ॥

क्षुत्क्षाम इति । क्षुधा क्षामोऽपि क्षीणोऽपि जरया वार्द्धक्येन कृशोऽपि दुर्बलोऽपि शिथिलप्राणोऽपि लघुबलोऽपि कष्टां दशाम् अवस्थाम् आपन्नोऽपि प्राप्तोऽपि विपन्नदीधितिरपि निस्तेजा अपि उन्मत्तानां मदोद्धतानाम् इभानां हस्तिनां विभिन्नाः विदारिताः कुम्भा एव कवलाः ग्रसनीयवस्तूनि तेषां ग्रासे बद्धा स्थिता स्पृहा आकाङ्क्षा यस्य तथाविधः मानमहतां मानोन्नतानाम् अग्रेसरः अग्रणीः केशरी सिंहः प्राणेषु नश्यत्सु नाशं गच्छत्सु अपि आहाराभावादिति भावः जीर्णं तृणं किम् अत्ति किं खादति ? नैवेत्यर्थः । शार्दूलविक्रीडितं वृत्तम् । अत्राप्रस्तुतेन सिंहेन कस्यचित् प्रस्तुतस्य महतः प्रतीतेरप्रस्तुतप्रशंसालङ्कारः । तदुक्तं दर्पणे । क्वचिद् विशेषः सामान्यात् सामान्यं वा विशेषतः । कार्य्यान्निमित्तं कार्य्यञ्च हेतोरथ समात् समम् । अप्रस्तुतात् प्रस्तुतञ्चेद् गम्यते पञ्चधा ततः । अप्रस्तुतप्रशंसा स्यादिति ॥ १२ ॥

असन्त इति । असन्तः असाधवः न अभ्यर्थ्याः न प्रार्थनीयाः, कृशधनः स्वल्पधनः सुहृदपि बन्धुरपि न याच्यः न अभ्यर्थनीयः । प्रिया प्रीतिकरी न्याय्या न्यायादनपेता वृत्तिः जीवनोपायः असुभङ्गेऽपि प्राणान्तेऽपि मलिनं पापम् असुकरं नैव कार्य्यमित्यर्थः ।

मनसि वचसि काये पुण्यपीयूषपूर्णा-
स्त्रिभुवनमुपकारश्रेणिभिः प्रीणयन्तः ।
परगुणपरमाणुं पर्वतीकृत्य नित्यं
निजहृदि विकसन्तः सन्ति सन्तः कियन्तः ॥ १४ ॥

इतः स्वपिति केशवः कुलमितस्तदीयद्विषाम्
इतश्च शरणार्थिनः शिखरिपत्रिणः शेरते ।
इतश्च वडवानलः सह समस्तसंवर्तकैः
अहो ! विततमूर्जितम्भरसहञ्च सिन्धोर्वपुः ॥ १५ ॥

विपदि उच्चैः उन्नततयेत्यर्थः स्थेयं धैर्याद्च्यवनमित्यर्थः महतां पदम् अनुविधेयम् अनुसरणीयं, सतां साधूनाम् इदं विषमं दुर्वहमित्यर्थः असिधाराव्रतम् असिधारोपरिस्थितावपि तत्र पदास्खलनरूपमिति भावः केन उद्दिष्टम् उपदिष्टम् ? शिखरिणीवृत्तम् ॥ १३ ॥

मनसीति । मनसि वचसि काये पुण्यपीयूषेण सुकृतामृतेन पूर्णाः उपकारश्रेणिभिः उपकारपरम्पराभिः त्रिभुवनं प्रीणयन्तः नित्यं सततं परेषां गुणपरमाणुं गुणलेशमिति भावः पर्वतीकृत्य राशीकृत्य निजहृदि विकसन्तः उल्लसन्तः कियन्तः अल्पा इत्यर्थः सन्तः साधवः सन्ति विद्यन्ते । मालिनीवृत्तम् ॥ १४ ॥

इत इति । केशवः नारायणः इतः अस्मिन् स्थाने स्वपिति निद्राति, इतः अस्मिन् प्रदेशे तदीयद्विषाम् असुराणामित्यर्थः कुलं समूहः निवसतीति शेषः । इतश्च अस्मिंश्च स्थाने शरणार्थिनः त्राणार्थिनः इन्द्रकर्तृकपक्षच्छेदनादिति भावः शिखरिपत्रिणः पक्षवन्तः पर्वता इत्यर्थः मैनाकादय इति शेषः शेरते तिष्ठन्तीत्यर्थः । इतश्च अस्मिन् देशे च समस्तैः संवर्तकैः तदाख्यैर्मेघैः सह वडवानलः अस्तीति शेषः । अहो आश्चर्यं सिन्धोः समुद्रस्य वपुः शरीरं विततं विस्तृतम् ऊर्जितं महाबलं भरसहञ्च भारसहनक्षमञ्च ।

उदन्वच्छिन्ना भूः स च निधिरपां योजनशतं
सदा पान्थः पूषा गगनपरिमाणं कलयति ।
इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः
सतां प्रज्ञोन्मेषः पुनरयमसीमो विजयताम् ॥ १६ ॥

क्वचिद् भूमौ शय्या क्वचिदपि च पर्य्यङ्कशयनः
क्वचिच्छाकाहारः क्वचिदपि च शाल्योदनरुचिः ।
क्वचित् कन्थाधारी क्वचिदपि च दिव्याम्बरधरो
मनस्वी कार्य्यार्थी न गणयति दुःखं नच सुखम् ॥१७॥

वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः। तदुक्तं दर्पणे। हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यत इति। पृथ्वीवृत्तम् ॥ १५ ॥

उदन्वदिति। भूः पृथिवी उदन्वता समुद्रेण छिन्ना परिच्छेदं नीता वेष्टितेत्यर्थः। स च अपां निधिः समुद्रः योजनशतं व्याप्य तिष्ठतीति शेषः। पान्थः पथिकः पूषा सूर्य्यः सदा गगनस्य आकाशस्य परिमाणं परिच्छेदं कलयति प्रत्यक्षीकरोतीति भावः। इतीत्थं भावाः पदार्थाः प्रायः बाहुल्येन स्फुरन्त्या प्रसरन्त्या अवधिमुद्रया सीमावेष्टनेन मुकुलिताः परिच्छिन्नाः। पुनः किन्तु सतां साधूनाम् अयं प्रज्ञोन्मेषः बुद्धिविकासः असीमः अपरिमितः अतएव विजयतां सर्वोत्कर्षेण वर्त्तताम्। शिखरिणीवृत्तम्। अत्र व्यतिरेकालङ्कारो व्यङ्ग्यः ॥ १६ ॥

क्वचिदिति। क्वचित् कुत्रचित् प्रदेशे भूमौ भूतले शय्या यस्य तथोक्तः क्वचिदपि पर्य्यङ्कः खट्वा शयनं शय्या यस्य तादृशः क्वचित् शाकाहारः शाकमात्रभोजी, क्वचिदपि शाल्योदने शालिधान्यसम्भवे अन्ने रुचिरभिलाषो यस्य तथाविधः क्वचित् कन्थाधारी स्कन्धनिक्षिप्तकन्थः क्वचिदपि दिव्याम्बरधरः उत्कृष्टवसनपरिधारी कार्य्यार्थी कार्य्यसाधनपरः मनस्वी धीरः दुःखं न सुखञ्च गणयति नैव विचार-

ये सन्तोषसुखप्रमोदमुदितास्तेषां न भिन्ना मुदो
ये त्वन्ये धनलोभसंकुलधियस्तेषां न तृष्णा हता ।
इत्थं कस्य कृते कृतः स विधिना तादृक् पदं सम्पदां
स्वात्मन्येव समाप्तहेममहिमा मेरुर्न मे रोचते ॥ १८ ॥
नमस्यामो देवान्ननु हतविधेस्तेऽपि वशगा
विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः ।
फलं कर्मायत्तं यदि किममरैः किञ्च विधिना
नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥ १९ ॥

यदि । कार्य्यं वा साधयितव्यं शरीरं वा पातयितव्यमिति भावः । शिखरिणीवृत्तम् ॥ १७ ॥

ये इति । ये जनाः सन्तोषेण यः सुखस्य प्रमोदः विकासः तेन मुदिताः हृष्टाः तेषां मुदः आनन्दाः न भिन्नाः न विच्छिन्नाः ते सततानन्दमग्ना इति भावः । ये तु अन्ये अपरे धनलोभेन सङ्कुलधियः समाच्छन्नमतयः, तेषां तृष्णा न हता नापगतेत्यर्थः । इत्थं सन्तोषेण सुखम् असन्तोषेण दुःखमेव स्थिताविति भावः कस्य कृते किंनिमित्तमित्यर्थः विधिना विधात्रा तादृक् सम्पदां पदं स्थानं मेरुः सुमेरुगिरिः कृतः सृष्टः ? यः स्वात्मन्येव निजस्वरूपे एव न तु अन्यप्रयोजनार्थमिति भावः समाप्तः अवसितः हेम्नां काञ्चनानां महिमा गौरवं यस्य तथाभूतः स्वसौन्दर्य्यमात्रफल इति यावत् मे मह्यं न रोचते न प्रीतिं जनयतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ १८ ॥

नमस्याम इति । देवान् नमस्यामः नमस्कुर्मः, किन्तु तेऽपि देवाः हतविधेः दुर्दैवस्य वशगाः ननु वशवर्त्तिन एव, अतस्तेषां नमस्कारणं निरर्थकमिति भावः । विधिः दैवं वन्द्यः नमस्कार्य्यः किन्तु सोऽपि विधिरपि प्रतिनियतं प्रत्यवधारितं यत् कर्म सुकृतं

दौर्मन्त्र्यान्नृपतिर्विनश्यति यतिः सङ्गात् सुतो लालनात्
विप्रोऽनध्ययनात् कुलं कुतनयाच्छीलं खलोपासनात्।
ह्रीर्मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रयात्
मैत्री चाप्रणयात्समृद्धिरनयात् त्यागात् प्रमादाद्धनम्॥२०॥
रक्तत्वं कमलानां सुपुरुषाणां परोपकारित्वम्।
असताञ्च निर्दयत्वं स्वभावसिद्धं त्रिषु त्रितयम्॥२१॥
जाड्यं ह्रीमति गण्यते व्रतरुचौ दम्भः शुचौ कैतवं
शूरे निर्घृणता ऋजौ विमतिता दैन्यं प्रियालापिनि।

दुष्कृतं वा तस्य एकं केवलं फलं ददातीति तयोक्तः अतस्तद्वन्दनं निरर्थकमिति भावः। यदि फलं कर्मायत्तं कर्माधीनं ततः अमरगणैः देवगणैः नमस्कृतैरिति भावः किम्? विधिना वन्दितेन किम्? न किमपि प्रयोजनमित्यर्थः। तत् तस्मात् कर्मभ्यः नमः, येभ्यः कर्मभ्यः विधिरपि दैवमपि न प्रभवति। कर्मापेक्षया विधेर्न प्राबल्यमिति कर्मैव शुभाशुभसाधने समर्थतया कर्त्तव्यमिति भावः। शिखरिणीवृत्तम्॥ १६॥

दौर्मन्त्र्यादिति। नृपतिः राजा दौर्मन्त्र्यात् दुष्टमन्त्रणात्, यतिः सन्न्यासी सङ्गात् पुत्रकलत्रादीनामिति भावः, सुतः पुत्रः लालनात् आदरात्, विप्रः ब्राह्मणः अनध्ययनात् पठनाभावात्, कुलं वंशः कुतनयात् कुपुत्रात्, शीलं चरितं खलस्य दुर्जनस्य उपासनात् सेवनात् संसर्गादिति यावत्, ह्रीर्लज्जा मद्यात् सुरापानात्, कृषिः क्षेत्रकर्म अनवेक्षणात् अदर्शनात्, स्नेहः वात्सल्यं प्रवासाश्रयात् भिन्नदेशावस्थानात्, मैत्री बन्धुता अप्रणयात् अमद्भावात्, समृद्धिः सम्पद् अनयात् दुर्नयात् दुश्चेष्टितादिति यावत्, धनं त्यागात् अपरिमितव्ययात् प्रमादात् अनवधानाच्च विनश्यति नाशं गच्छति। शार्दूलविक्रीडितं वृत्तम्॥ २०॥

रक्तत्वमिति। कमलानां पङ्कजानां रक्तत्वं लोकरञ्जनत्वं

तेजस्विन्यवलिप्तता मुखरता वक्तर्यशक्तिः स्थिरे
तत् को नाम गुणो भवेत् सुगुणिनां यो दुर्जनैर्नाङ्कितः२२
जातिर्यातु रसातलं गुणगणस्तस्याप्यधो गच्छतु
शीलं शैलतटात्पतत्वभिजनः सन्दह्यतां वह्निना ।
शौर्यं वैरिणि वज्रनिरस्त्वमस्तु च तथाप्यर्थस्तु नः केवलं
येनैकेन विना गुणास्तृणलवप्रायाः समस्ता इमे ॥२३॥

सुपुरुषाणां साधूनां परोपकारित्वम् खलतां दुर्जनानां निर्दयत्वञ्च एतत् त्रिषु एतेष्विति शेषः स्वभावसिद्धं स्वाभाविकम् ॥ २१ ॥

जाड्यमिति । ह्रीमति लज्जाशीले जाड्यम् अस्य स्वभावो जड़ इति, व्रतरुचौ चान्द्रायणादिव्रताभिलाषिणि दम्भः प्रतारणपरत्वं, शुचौ पूततयावस्थायिनीति यावत् कैतवं कपटं, शूरे वीरे निर्घृणता निर्दयता, ऋजौ सरले विमतिता बुद्धिहीनता, प्रियालापिनि प्रियभाषिणि दैन्यं कातरता, तेजस्विनि तेजःप्रकाशिनि अवलिप्तता गर्विता, वक्तरि वावदूके मुखरता वाचालता, स्थिरे तूष्णीं स्थिते अशक्तिः असामर्थ्यं गण्यते लोकैरिति शेषः, तत् तस्मात् सुगुणिनां शोभनगुणवतां को नाम गुणः भवेत् अस्तीत्यर्थः यः गुणः दुर्जनैः न अङ्कितः न कलङ्कितः न दूषित इत्यर्थः गुणवतां सर्व एव गुणा दुर्जनैर्दूष्यन्ते इति निष्कर्षः। शार्दूलविक्रीड़ितं वृत्तम् ॥ २२ ॥

जातिरिति । जातिः सत्कुले प्रसूतिरित्यर्थः रसातलं पातालं यातु गच्छतु, गुणगणः दयादाक्षिण्यादिः तस्यापि रसातलस्यापि अधः गच्छतु, शीलं सुचरितं शैलतटात् पततु चूर्णीभवत्वित्यर्थः, अभिजनः वंशः वह्निना सन्दह्यतां सम्यक् भस्मीक्रियतां, शौर्य्यं बलं वज्रेण कुलिशेन निरस्तं हतम् अस्तु च तथापि नः अस्माकम् अर्थस्तु केवलम् अस्त्विति शेषः येन एकेन केवलेन अर्थेन विना समस्ता इमे गुणाः जात्यादयः तृणलवप्रायाः तृणबिन्दुतुल्याः भवन्तीति शेषः न गण्यन्ते इति भावः। शार्दूलविक्रीड़ितं वृत्तम् ॥ २३ ॥

भग्नाशस्य करण्डपीडिततनोर्म्लानेन्द्रियस्य क्षुधा
कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ।
तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा
स्वस्थास्तिष्ठत दैवमेव हि नृणां वृद्धौ क्षये कारणम् ॥ २४

पतितोऽपि कराघातैरुत्पतत्येव कन्दुकः ।
प्रायेण साधुवृत्तीनामस्थायिन्यो विपत्तयः ॥ २५ ॥

प्रायः कन्दुकपातेन पतत्यार्यः पतन्नपि ।

भग्नाशस्येति । आखुर्मूषिकः स्वयं विवरं गर्त्तं कृत्वा भग्ना आशा जीवनस्येति भावः यस्य तादृशस्य करण्डेन समुद्गकेन पीडिता क्लिष्टा तनुः शरीरं यस्य तथाभूतस्य क्षुधा म्लानेन्द्रियस्य असमर्थाङ्गस्येत्यर्थः भोगिनः भुजङ्गस्य मुखे नक्तं रात्रौ निपतितः । असौ भोगी सत्वरं शीघ्रं तस्य आखोः मूषिकस्य पिशितेन मांसेन तृप्तः परितृप्तिं गतः सन् तेनैव पथा आखुकृतेनेति भावः यातः गतः । अतः स्वस्थाः निश्चिन्ताः तिष्ठत यूयमिति शेषः दैवमेव नृणां प्राणिनां वृद्धौ अभ्युदये क्षये च कारणं हेतुः । शार्दूलविक्रीड़ितं वृत्तम् ॥ २४ ॥

पतित इति । पतितोऽपि कन्दुकः गेन्दुकः कराघातैः हस्तप्रहारैः उत्पतत्येव । अतः साधुवृत्तानां सच्चरितानां शुभगोलाकृतीनाञ्चेति ध्वनिः कन्दुकस्य गोलाकृतित्वादिति भावः । विपत्तयः आपदः अस्थायिन्यः न चिरं तिष्ठन्तीति यावत् । अनुष्टुब्वृत्तम् । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । तदुक्तं दर्पणे । सामान्यं वा विशेषेण विशेषस्तेन वा यदि । कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते । साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः इति ॥ २५ ॥

प्राय इति । आर्य्यः साधुः पतन्नपि अधो गच्छन्नपि प्रायः

तथा त्वनार्यः पतति मृत्पिण्डपतनं यथा ॥ २६ ॥

प्रीणाति यः सुचरितैः पितरं स पुत्रो
यद्भर्तुरेव हितमिच्छति तत् कलत्रम् ।
तन्मित्रमापदि सुखे च समं प्रयाति
एतत्त्रयं जगति पुण्यकृतो लभन्ते ॥ २७ ॥

सम्पत्सु महतां चित्तम्भवेदुत्पलकोमलम् ।
आपत्सु च महाशैलशिलासंघातकर्कशम् ॥ २८ ॥

दुर्जनः परिहर्तव्यो विद्ययापि समन्वितः ।
मणिनालङ्कृतः सर्पः किमसौ न भयङ्करः ॥ २९ ॥

बाहुल्येन कन्दुकपातेन कन्दुकपतनन्यायेन उत्पतति उन्नतिं गच्छतीत्यर्थः । तु किन्तु अनार्यः दुर्जनः मृत्पिण्डपतनं यथा मृत्पिण्डः यथा पतति न पुनरुन्नतिं लभते इत्यर्थः तथा पतति न पुनरुन्नतिं प्राप्नोतीत्यर्थः । उपमालङ्कारः । अनुष्टुब्वृत्तम् ॥ २६ ॥

प्रीणातीति । यः सुचरितैः पितरं प्रीणाति आनन्दयति, स पुत्रः, यत् भर्तुरेव स्वामिन एव नत्वपरपुरुषस्येति भावः हितं श्रेयमित्यर्थः इच्छति तत् कलत्रं पत्नी, यत् आपदि दुःखे सुखे च समं प्रयाति गच्छति समभावेन तिष्ठतीति भावः तत् मित्रम् । जगति पुण्यकृतः पुण्यवन्तः एतत्त्रयं पुत्रादित्रयं लभन्ते प्राप्नुवन्ति । वसन्ततिलकं वृत्तम् ॥ २७ ॥

सम्पत्स्विति । सम्पत्सु महतां चित्तम् उत्पलवत् कुमुदमिव कोमलं मृदुलं भवेत् परोपकारकत्वादिति भावः । आपत्सु च महाशैलस्य शिलासङ्घातवत् प्रस्तरनिचय इव कर्कशं कठिनम् अचलमिति यावत् । आपन्निवारणार्थं धैर्य्यस्यावश्यकत्वादिति भावः । अनुष्टुब्वृत्तम् ॥ २८ ॥

दुर्जन इति । विद्ययापि समन्वितः युक्तः विद्यालङ्कृतोऽपि

क्षीरेणात्मगतोदकाय हि गुणा दत्ताः पुरा तेऽखिलाः
क्षीरे तापमवेक्ष्य तेन पयसा ह्यात्मा कृशानौ हुतः ।
गन्तुं पावकमुन्मनो यदभवद् दृष्ट्वा तु मित्रापदं
युक्तं तत्तु तदेव सम्प्रति सतां मैत्री पुनस्तादृशी ॥३०॥

या साधून् हि खलान् करोति विदुषो मूर्खान् हितान् द्वेषिणः
प्रत्यक्षं कुरुते परोक्षममृतं हालाहलं तत्क्षणात् ।
तामाराधय शङ्करीं भगवतीं दात्रीं फलं वाञ्छितं
हे साधो ! त्वमतो गुणेषु विफलेष्वास्थां वृथा मा कृथाः ॥३१

वर्ज्जितः इति पाठान्तरम् । दुर्जनः परिहर्त्तव्यः त्यक्तव्यः । मणिना रत्नेन अलङ्कृतः भूषित इति पाठान्तरम् असौ सर्पः किं भयङ्करो न ? अपि तु भयङ्कर एवेत्यर्थः । दृष्टान्तालङ्कारः । अनुष्टुप्वृत्तम् ॥ २९ ॥

क्षीरेणेति । क्षीरेण दुग्धेन आत्मगतोदकाय आत्मनिष्ठसलिलाय पुरा ते अखिलाः गुणाः समस्ताः श्वैत्यादयः दत्ता हि दत्ता एव । ते दत्वत स्वे इति पाठो युक्तः । तेन पयसा जलेन क्षीरे तापं अवेक्ष्य दृष्ट्वा कृशानौ अग्नौ आत्मा हुतः हि हुत एव । तत् क्षीरं मित्रस्य सुहृदः जलस्य आपदं दृष्ट्वा सम्प्रति पावकं गन्तुम् उन्मनः उत्सुकं यत् तु अभवत् तत् तु युक्तम् एव उचितमेव, सतां साधूनां पुनः मैत्री तादृशी भवतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ ३० ॥

येति । हे साधो ! त्वं या साधून् खलान् वा खलान् साधून् विदुषः पण्डितान् मूर्खान् वा मूर्खान् विदुषः, हितान् बन्धून् द्वेषिणः वा द्वेषिणः शत्रून् हितान्, प्रत्यक्षं चक्षुर्गोचरं परोक्षं दृष्टिपथातीतं वा परोक्षं प्रत्यक्षम् अमृतं हालाहलं विषं वा हालाहलम् अमृतं तत्क्षणात् क्षणमात्रेण करोति हि करोत्येव, तां वाञ्छितं फलं दात्रीं दानशीलां भगवतीं शङ्करीम् आराधय, अतः अस्मात् शङ्कर्याः आराधनात् अन्येष्वपि शेषः विफलेषु निरर्थकेषु गुणेषु वृथ-

कृमिकुलचितं लालाक्लिन्नं विगन्धि जुगुप्सितं
निरुपमरसप्रीत्या खादन् नरास्थि निरामिषम् ।
सुरपतिमपि श्वा पार्श्वस्थं विलोक्य विशङ्कते
न हि गणयति क्षुद्रो जन्तुः परिग्रहफल्गुताम् ॥२२॥
स्वल्पं स्नायुवसावशेषमलिनं निर्मांसमप्यस्थिकं
श्वा लब्ध्वा परितोषमेति न च तत्तस्य क्षुधाशान्तये ।
सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं
सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं फलम् २३

क्रियासु आस्थां यत्नं वृथा मा कृथाः न कुरु । शार्दूलविक्रीडितं वृत्तम् ॥ २१ ॥

कृमीति । श्वा कुक्कुरः कृमिकुलैः चितं व्याप्तं लालाक्लिन्नं विगन्धि दुर्गन्धं जुगुप्सितं दूषितं निरामिषं निर्मांसं नरास्थि नर-कङ्कालं निरुपमप्रीत्या परमोपादेयत्वेनेति भावः खादन् भक्षयन् पार्श्वस्थं सुरपतिमिन्द्रमपि विलोक्य विशङ्कते मदीयमेतदपहरतीति धियेति भावः । हि तथाहि क्षुद्रो जन्तुः परिग्रहस्य परधनग्रह-णस्य फल्गुताम् असारत्वं हेयत्वमिति भावः न गणयति न विचा-रयति । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । हरिणीवृत्तम् । नसमरजा षड् वेदैर्हयैर्हरिणी मतेति तल्लक्षणात् ॥ २२ ॥

स्वल्पमिति । श्वा कुक्कुरः स्वल्पं यत्किञ्चिदित्यर्थः स्नायवः शिराः वसा मेदांसि अवशेषो यस्य तथोक्तञ्च तत् मलिनं मलपूर्ण-ञ्चेति तथोक्तं निर्मांसं मांसशून्यम् अपि अस्थिकं कङ्कालखण्डं लब्ध्वा प्राप्य परितोषम् एति प्राप्नोति, किन्तु तत् तस्य क्षुधाशान्तये क्षुन्नि-वृत्तये न च नैव भवतीत्यर्थः । सिंहः अङ्कं क्रोडम् आगतमपि जम्बुकं शृगालं त्यक्त्वा द्विपं हस्तिनं निहन्ति नाशयति । तथाहि सर्वो जनः कृच्छ्रगतोऽपि कष्टावस्था प्राप्तोऽपि सत्त्वानुरूपं स्वबलानु-

पापान्निवारयति योजयते हिताय
गुह्यानि गूहति गुणान् प्रकटीकरोति ।
आपद्गतञ्च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ॥ २४ ॥

मृगमीनसज्जनानां तृणजलसन्तोषविहितवृत्तीनाम् ।
लुब्धकधीवरपिशुना निष्कारणवैरिणो जगति ॥ २५ ॥

सन्तप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते
मुक्ताकारतया तदेव नलिनीपत्रे स्थितं राजते ।

रूपं फलं वाञ्छति अभिलषति । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । शार्दूलविक्रीडितं वृत्तम् ॥ २३ ॥

पापादिति । यत् पापात् निवारयति, हिताय योजयते घटयति, गुह्यानि रहस्यानि गूहति गोपायति, गुणान् प्रकटीकरोति प्रकाशयति, आपद्गतं विपन्नं न जहाति न त्यजति, काले दुःसमये ददाति अर्थेन उपकरोतीत्यर्थः, सन्तः साधवः इदं सन्मित्रस्य लक्षणं चिह्नं प्रवदन्ति । वसन्ततिलकं वृत्तम् ॥ २४ ॥

मृगेति । लुब्धकाः व्याधाः धीवराः मत्स्यजीविनः पिशुनाः खलाः जगति संसारे तृणजलसन्तोषविहितवृत्तीनां तृणजीविनां जलजीविनां सन्तोषवृत्तीनां यथाक्रमं मृगाणां मीनानां मत्स्यानां सज्जनानाञ्च निष्कारणवैरिणः अकारणशत्रवः भवन्तीति शेषः । यथासङ्ख्यमलङ्कारः । तदुक्तं दर्पणे । यथासंख्यमनूद्देश उद्दिष्टानां क्रमेण यदिति । आर्य्यावृत्तम । यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि अष्टादश द्वितीये पञ्चदश चतुर्थके सार्य्येति तल्लक्षणात् । २५ ॥

सन्तप्तेति । सन्तप्तम् अयः लौहः तस्मिन् संस्थितस्य पयसः जलस्य नामापि न ज्ञायते पतनमात्र एव शुष्कत्वादिति भावः तदेव

स्वात्यां सागरशुक्तिमध्यपतितं मुक्ताफलं जायते
प्रायेणाधममध्यमोत्तमगुणः संसर्गतो जायते ॥ ३६ ॥
ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे ।
रुद्रो येन कपालपाणिपुटके भिक्षाटनङ्कारितः
सूर्य्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्म्मणे ॥३७॥
कुसुमस्तवकस्येव द्वे वृत्ती तु मनस्विनः ।
सर्व्वलोकस्य वा मूर्द्ध्नि विशीर्य्येत वनेऽथवा ॥ ३८ ॥

पयः नलिनीपत्रे स्थितं मुक्ताकारतया राजते शोभते। स्वात्यां स्वातिनक्षत्रे सागरस्य शुक्तिमध्ये पतितं सत् मुक्ताफलं जायते । अतः संसर्गतः प्रायेण अधममध्यमोत्तमगुणः अधमसङ्गात् अधमगुणः, मध्यमसङ्गात् मध्यमगुणः उत्तमसङ्गात् उत्तमगुण इत्यर्थः जायते । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । शार्द्दूलविक्रीडितं वृत्तम् ॥ ३६ ॥

ब्रह्मेति । येन ब्रह्मा कुलालवत् कुम्भकार इव ब्रह्माण्डभाण्डोदरे ब्रह्माण्डरूपभाजनाभ्यन्तरे नियमितः नियोजितः । येन विष्णुः महासङ्कटे अतिक्लेशकरे इत्यर्थः दशावतारगहने मीनादिदशावतारकानने क्षिप्तः व्यापारितः । येन रुद्रः हरः कपालं नरशिरः पाणिपुटके अञ्जलौ यस्य तथाभूतः भिक्षाटनं भिक्षार्थं भ्रमणं कारितः । येन च व्यापारित इति शेषः सूर्य्यः नित्यमेव गगने भ्राम्यति । तस्मै कर्म्मणे सुकृतदुष्कृतरूपाय नमः । शार्द्दूलविक्रीडितं वृत्तम ॥ ३७ ॥

कुसुमेति । मनस्विनः मानिनः कुसुमस्तवकस्येव पुष्पगुच्छस्येव द्वे वृत्ती गती इत्यर्थः सर्व्वलोकस्य मूर्द्ध्नि शिरसि, अथवा वने विशी-

मौनान्मूकः प्रवचनपटुर्वातुलो जल्पको वा
क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः।
धृष्टः पार्श्वे स भवति जनो दूरतश्चाप्रगल्भः
सेवाधर्मः परमगहनो योगिनामप्यगम्यः॥ ३९॥

नम्रत्वेनोन्नमन्तः परगुणनुतिभिः स्वान् गुणान् ख्यापयन्तः
स्वार्थान् सम्पादयन्तो विनतपृथुतरारम्भयन्तः परार्थे।
क्षान्त्यैवाक्षेपरूक्षाक्षरमुखरमुखान्दुर्मुखान्दूषयन्तः
सन्तः साश्चर्यचर्या जगति बहुमता कस्य नाभ्यर्थनीयाः॥४०

र्थेन स्थीयेत एताभ्यामिति शेषः। अनुष्टुब्वृत्तम्। उपमालङ्कारः
॥ ३८॥

मौनादिति। मौनात् तूष्णीम्भावात् मूकः वर्णानुच्चारकः, प्रवचने प्रकृष्टालापे पटुः समर्थः वातुलः वायुग्रस्तः जल्पकः वाचालो वा, क्षान्त्या क्षमागुणेन भीरुः कातरः, यदि न सहते न क्षमते तदा प्रायशः बाहुल्येन न अभिजातः न सद्वंशीयः : पार्श्वे भवति वसति चेदिति शेषः धृष्टः प्रगल्भः असभ्य इति यावत्, दूरतश्च दूरे वसति चेदिति भावः अप्रगल्भः अचतुरः। सर्वत्र भृत्य इति शेषः। अतः सेवाधर्मः भृत्यतव्यवहारः परमगहनः अतिदुर्बोधः योगिनामपि अगम्यः दुर्बोधः। मन्दाक्रान्तावृत्तम्। मन्दाक्रान्ताम्बुधि रसनगौ मो भनौ तौ गयुग्ममिति तल्लक्षणात्। काव्यलिङ्गमलङ्कारः। तदुक्तं दर्पणे। हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते इति॥ ३९॥

नम्रत्वेनेति। नम्रत्वेन विनयेन उन्नमन्तः उन्नतिं लभमानाः, परेषां गुणस्तुतिभिः गुणस्तवनैः स्वान् निजान् गुणान् ख्यापयन्तः प्रकाशयन्तः परार्थे परकार्ये विनतः विनयसम्पन्नः पृथुतरः विस्तृततरः यः आरम्भः उद्योगः तद्वन्तः सन्तः स्वार्थान् स्वानि कार्याणि-

लोभश्चास्ति गुणेन किं ? पिशुनता यद्यस्ति किम्पातकैः ?
सत्यञ्चेत्तपसा च किं ? शुचिमनो यद्यस्ति तीर्थेन किं ?
सौजन्यं यदि किन्निजैः ? समहिमा यद्यस्ति किम्मण्डनैः
सद्विद्या यदि किं ? धनैरपयशो यद्यस्ति किं मृत्युना ॥४१

त्वर्थः तस्मादयन्तः समादधतः चान्त्ये व चमागुणेनेव व्याक्षेपेण कटू-क्तया रूक्षाणि यानि अक्षराणि वचांसि तैः मुखराणि वाचालानि मुखानि येषां तान् दुर्मुखान् दुर्जनान् दूषयन्तः कलङ्कयन्तः अतएव साश्चर्या अद्भुता चर्या आचरणं येषां तादृशाः सन्तः साधवः जगति कस्य जनस्य बहुमता बह्वादरणीयाः अभ्यर्थनीयाः स्पृहणीयाश्च न भवन्तीति शेषः अपितु सर्वेषामेवेत्यर्थः । स्रग्धरावृत्तम् । म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति तल्लक्षणात् । काव्यलिङ्गमलङ्कारः ॥ ४० ॥

लोभ इति । लोभश्च अस्ति तदा परेण गुणेन स्थितेनेति शेषः किम् ? न किमपि प्रयोजनमित्यर्थः लोभस्यैव परमगुणत्वा- दिति भावः । यदि पिशुनता दौर्जन्यम् अस्ति, तदा पातकैः पापाचरणैः किम् ? पिशुनतैव यथेष्टं पातकमिति भावः । सत्यं सत्यवचनं चेत् यदि अस्तीति शेषः तदा तपसा चान्द्रायणादिना किम् ? न किमपि प्रयोजनमित्यर्थः सत्यस्यैव तपस्त्वादिति भावः । यदि मनः शुचि विशुद्धं अस्ति, तदा तीर्थेन पुण्यक्षेत्रगमनादिना किम् ? न किमपि प्रयोजनमित्यर्थः । तीर्थयात्रायाः मनः शुद्धि- हेतुत्वमात्रं प्रयोजनं तच्च सिद्धमेवेति कथं तत्र प्रयास इति भावः । यदि सौजन्यं सज्जनत्वम् अस्तीति शेषः तदा निजैः आत्मीयैः बन्धुभिरित्यर्थः किम् ? न किमपि प्रयोजनमित्यर्थः सौजन्यात् परं बन्धुर्नास्तीति भावः । यदि सुष्ठु महिमा औदार्य्यं दातृत्वं वा अस्ति, तदा मण्डनैः भूषणैः किम् ? न किमपि प्रयोजनमित्यर्थः । महिमैव पुरुषं भूषयतीति भावः । यदि सद्विद्या उत्तमा विद्या

अम्भोजिनीवननिवासविलासहेतुं
हंसस्य हन्तुमपरामपि तां विधाता ।
नो तस्य दुग्धजलभेदविधौ प्रशस्तां
वैदग्ध्यकीर्त्तिमपहन्तुमसौ समर्थः ॥ ४२ ॥

खल्वाटो दिवसेश्वरस्य किरणैः सन्तापिते मस्तके
वाञ्छन्देशमनातपं विधिवशाद्बिल्वस्य मूलङ्गतः ।
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः
प्रायो गच्छति यत्र भाग्यरहितस्तत्रैव यान्त्यापदः ॥४३॥

अस्ति तदा धनैः किम् ? न प्रयोजनमित्यर्थः सद्विद्यायशा एव परम-धनत्वादिति भावः । यदि अपयशः अकीर्त्तिः अस्ति तदा मृत्युना किम् ? न किमपि प्रयोजनमित्यर्थः अपयशस एव मृत्युत्वादिति भावः । लोभश्चास्ति गुणेन किमिति प्रमादपाठः । शार्दूलविक्री-डितं वृत्तम् ॥ ४१ ॥

अम्भोजिनीति । विधाता हंसस्य अम्भोजिनीवनेषु पद्मिनी-विपिनेषु निवासे यो विलासः विक्रीडनं स एव हेतुः कारणं यस्याः तथोक्तां पद्मिनीवनविहारनिबन्धनामिति यावत् अपरां तां कीर्त्तिं हन्तुं नाशयितुं समर्थः, स्वेच्छया तद्वनविलोपे तदभावप्रसङ्गादिति भावः । किन्तु असौ विधाता तस्य हंसस्य दुग्धजलयोर्भेदविधौ पृथक्करणे प्रशस्तां वैदग्ध्यकीर्त्तिं चातुर्यख्यातिम् अपहन्तुं नाश-यितुं नो समर्थ इति पूर्वेणान्वयः । अत्र कस्यचित् विदुषः आश्रय-भङ्गो वैरिणा साध्यः किन्तु तदीयविद्यावत्तया ख्यातिभङ्गो नेति प्रतीतेरप्रस्तुतप्रशंसालङ्कारः । वसन्ततिलकं वृत्तम् ॥ ४२ ॥

खल्वाट इति । खल्वाटः टेको इति प्रसिद्धो जनः दिवसेश्वरस्य सूर्यस्य किरणैः मस्तके सन्तापिते सति अनातपम् आतपरहितं देशं वाञ्छन् विधिवशात् दैवात् बिल्वस्य मूलं वनं गतः । तत्रापि कूले

नवाकृतिः फलति नैव कुलं न शीलं
विद्यापि नैव न च यत्नकृतापि सेवा ।
भाग्यानि पूर्वतपसा किल सञ्चितानि
काले फलन्ति पुरुषस्य यथैव वृक्षाः ॥ ४४ ॥

ऐश्वर्यस्य विभूषणं सुजनता शौर्यस्य वाक्संयमो
ज्ञानस्योपशमः शमस्य विनयो वित्तस्य पात्रे व्ययः ।
अक्रोधस्तपसः क्षमा प्रभवितुर्धर्मस्य निर्व्याजता
सर्वेषामपि सर्वकालनियतं शीलम्परं भूषणम् ॥ ४५ ॥

सतता सह्याफलेन बिल्वफलेन अस्य शिरः सशब्दं यथा तथा भग्नम् । अतः भाग्यरहितः अभाग्यः यत्र गच्छति, प्रायः तत्रैव आपदः यान्ति गच्छन्ति । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ४३ ॥

नेति । आकृतिः सुन्दरावयव इत्यर्थः न वा नैव, कुलं सद्वंशः नैव, शीलं सुचरित न, विद्यापि नैव, यत्नकृता यत्नेन निष्पादिता सेवा शुश्रूषा प्रभोरिति शेषः न च फलति न फलं जनयतीत्यर्थः । पूर्वतपसा प्रागनुष्ठितेन तपसा सञ्चितानि साधितानि पुरुषस्य भाग्यानि किल अदृष्टान्येव वृक्षाः यथैव तरव इव काले फलन्ति फलं जनयन्ति । उपमालङ्कारः । वसन्ततिलकं वृत्तम् ॥ ४४ ॥

ऐश्वर्येति । सुजनता साधुता ऐश्वर्यस्य, वाक्संयमः प्रियवादित्वमिति भावः शौर्यस्य वीर्यस्य, उपशमः शान्तिः ज्ञानस्य, विनयः नम्रता शमस्य शान्तेः, पात्रे योग्ये इति शेषः व्ययः दानं वित्तस्य धनस्य, अक्रोधः क्रोधराहित्यं तपसः, क्षमा परदोषसहिष्णुता प्रभवितुः प्रभोः, निर्व्याजता अकापट्यं धर्मस्य विभूषणम् अलङ्कारः । किन्तु सर्वेषामपि सर्वकालेषु नियतं शीलं सुचरितं परं भूषणं परमोऽलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ४५ ॥

ते ते सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये।
तेऽमी मानुषराक्षसाः परहितं स्वार्थाय विघ्नन्ति ये
ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे॥ ४६॥

जाड्यं धियो हरति सिञ्चति वाचि सत्यं
मानोन्नतिं दिशति पापमपाकरोति।
चेतः प्रसादयति दिक्षु तनोति कीर्त्तिं
सत्सङ्गतिः कथय किं न करोति पुंसाम्॥ ४७॥

वाञ्छा सज्जनसङ्गमे गुणिगणे प्रीतिर्गुरौ नम्रता
विद्यायां व्यसनं स्वयोषिति रतिर्लोकापवादाद्भयम्।

ते इति। ये जनाः स्वार्थं परित्यज्य परार्थघटकाः परकार्य्य-साधकाः, ते ते सत्पुरुषाः श्रेष्ठाः पुमांसः। ये स्वार्थाविरोधेन स्वकार्य्याबाधकत्वेनेत्यर्थः परार्थं परकार्य्यार्थम् उद्यमभृतः यत्नवन्तः, ते सामान्यास्तु साधारणा एवेत्यर्थः मध्यमा इति यावत्। ये स्वार्थाय स्वकार्य्यार्थं परेषां हितं विघ्नन्ति नाशयन्ति, ते अमी मानुषेषु राक्षसाः नरराक्षसा इत्यर्थः। ये तु निरर्थकं स्वपरार्थं विनेति भावः परेषां हितं घ्नन्ति नाशयन्ति, ते के, न जानीमहे। शार्दूल-विक्रीड़ितं वृत्तम्॥ ४६॥

जाड्यमिति। पुंसां नराणां सत्सङ्गतिः सज्जनसङ्गः किं न करोति? कथय, सर्व्वमेव करोतीत्यर्थः। तथाहि धियः बुद्धेः जाड्यं जड़तां मान्द्यमित्यर्थः हरति नाशयति, वाचि सत्यं सिञ्चति निदधाति, मानोन्नतिं मानवृद्धिं दिशति जनयति, पापं दुष्कृतम् अपाकरोति निरस्यति, चेतः मनः प्रसादयति विकाशयति, दिक्षु कीर्त्तिं यशः तनोति विस्तारयति। वसन्ततिलकं वृत्तम्॥ ४७॥

वाञ्छेति। सज्जनैः साधुभिः सङ्गमे संसर्गे वाञ्छा अभिलाषः,

भक्तिः शूलिनि शक्तिरात्मदमने संसर्गमुक्तिः खले
एते यत्र वसन्ति निर्मलगुणास्तेभ्यो नरेभ्यो नमः ॥ ४८ ॥
अग्राह्यं हृदयं तथैव वदनं यद् दर्पणान्तर्गतं
भावः पर्वतसूक्ष्ममार्गविषमः स्त्रीणां न विज्ञायते ।
चित्तं पुष्करपत्रतोयतरलं विद्वद्भिराशंसितं
नारी नाम विषाङ्कुरैरिव लता दोषैः समं वर्द्धिता ॥४९॥
तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः
सत्यं ब्रूह्यनुयाहि साधुपदवीं सेवस्व विद्वज्जनान् ।

गुणिजनगणे प्रीतिः प्रणयः, गुरौ गुरुजने नम्रता, विद्यायां व्यसनम् आसक्तिः, स्वयोषिति निजकलत्रे रतिः अनुरागः, लोकापवादात् लोकनिन्दातः भयं, शूलिनि हरे भक्तिः, आत्मनः मनसः दमने वशीकरणे शक्तिः सामर्थ्यं, खले दुर्जने संसर्गमुक्तिः संसर्गत्यागः, एते निर्मलगुणाः विशुद्धगुणाः यत्र येषु वसन्ति, तेभ्यः नरेभ्यः नमः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४८ ॥

अग्राह्यमिति । दर्पणान्तर्गतम् आदर्शमध्यप्रतिविम्बितं वदनं मुखं, यत् यथा अग्राह्यं स्त्रीणां हृदयं तथैव अग्राह्यमिति शेषः । पर्वतस्य सूक्ष्ममार्गवत् विषमः दुर्गेय इति यावत् भावः आशयः न विज्ञायते, स्त्रियाश्चरित्रं पुरुषस्य भाग्यं देवा न जानन्ति कुतो मनुष्या इति कविसम्प्रदायः । चित्तं मनः पुष्करपत्रे स्थितमिति भावः तोयमिव जलमिव तरलं चञ्चलं विद्वद्भिः विज्ञैः जनैः आशंसितं कथितं निर्णीतमिति यावत् । अतः नारी लता विषाङ्कुरैरिव दोषैः समं वर्द्धिता वृद्धिं नीता, निर्मितेति पाठान्तरम् । नाम सम्भावनायाम् एतत् सम्भावयामीत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥४९॥

तृष्णामिति । तृष्णां लोभमित्यर्थः छिन्धि नाशय, क्षमां भज सेवस्व, मदं मत्तताम् औद्धत्यमित्यर्थः जहि नाशय, पापे दुष्कृता-

मान्यान् मानय विद्विषोऽप्यनुनय प्रच्छादय स्वान् गुणान्
कीर्त्तिं पालय दुःखिते कुरु दयामेतत् सतां चेष्टितम् ॥५०॥

गुणवदगुणवद् वा कुर्वता कार्य्यजातं
परिणतिरवधार्य्या यत्नतः पण्डितेन ।
अतिरभसकृतानां कर्मणामाविपत्तेः
भवति हृदयदाही शल्यतुल्यो विपाकः ॥ ५१ ॥

एको देवः केशवो वा शिवो वा
एकं मित्रं भूपतिर्वा यतिर्वा ।

चरणे रतिम् अनुरागं मा कृथाः न कुरु, सत्यं ब्रूहि वद, साधूनां पदवीं मार्गम् अनुयाहि अनुसर, विद्वज्जनान् पण्डितान् सेवस्व, मान्यान् गुरुजनान् इत्यर्थः मानय, विद्विषोऽपि शत्रूनपि अनुनय सन्तोषय, स्वान् गुणान् प्रच्छादय गोपनं कुरु कीर्त्तिं यशः पालय रक्ष, दुःखिते जने दयां कुरु, एतत् सर्वं सतां साधूनां चेष्टितं कार्य्यमित्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ५० ॥

गुणवदिति । गुणवत् सगुणम् उत्कृष्टमित्यर्थः अगुणवत् सदोषं वा कार्य्यजातं कार्य्यसमूहं कुर्वता पण्डितेन विदुषा यत्नतः यत्नेन परिणतिः परिणामः तत्तत्कार्य्यस्येति शेषः अवधार्य्या निर्णेया भाविनीति शेषः । अतिरभसेन सहसेत्यर्थः परिणतिमनालोच्येति भावः कृतानां कर्मणाम् आ विपत्तेः विपत्तिपर्य्यन्तं मरणपर्य्यन्तमिति यावत् हृदयदाही शल्यतुल्यः शल्यवद्दुःसहः विपाकः परिणामः भवति । कार्य्येण कारणसमर्थनरूपोऽर्थान्तरन्यासः । मालिनीवृत्तं, ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ॥ ५१ ॥

एक इति । केशवो वा शिवो वा एकः एकमात्रः अद्वितीय इत्यर्थः देवः आराध्य इति भावः । भूपतिः राजा वा यतिः सन्न्यासी

एको वासः पत्तने वा वने वा
एका भार्य्या सुन्दरी वा दरी वा ॥ ५२ ॥

वने रणे शत्रुजलाग्निमध्ये
महार्णवे पर्वतमस्तके वा ।
सुप्तं प्रमत्तं विषमस्थितं वा
रक्षन्ति पुण्यानि पुरा कृतानि ॥ ५३ ॥

भीमं वनं भवति तस्य पुरं प्रधानं
सर्वो जनः सुजनतामुपयाति तस्य ।
कृत्स्ना च भूर्भवति सन्निधिरत्नपूर्णा
यस्यास्ति पूर्वसुकृतं विपुलं नरस्य ॥ ५४ ॥

वा एकम् अद्वितीयं मिलनम् कर्त्तव्यमिति शेषः । पत्तने नगरे वा वने वा एकः अद्वितीयस्थानस्य इति भावः वासः कर्त्तव्य इति शेषः । सुन्दरी वा दरी पर्वतगुहा वा एका अद्वितीया भार्य्या आश्रयणीयेति शेषः ॥ ५२ ॥

वने इति । पुरा कृतानि प्राक्तनानि पुण्यानि वने रणे शत्रुजलाग्निमध्ये शत्रुमध्ये जलमध्ये अग्निमध्ये च महार्णवे महासमुद्रे पर्वतमस्तके शैलशृङ्गे वा स्थितमिति शेषः सुप्तं निद्रितं मत्तं विषमस्थितम् अनवधानवर्त्तिनमित्यर्थः जनमिति शेषः रक्षन्ति । उपजातिवृत्तं, स्यादिन्द्रवज्रा यदि तौ जगौ ग इति, उपेन्द्रवज्रा प्रथमाक्षरे लघाविति, अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता इति ॥ ५३ ॥

भीममिति । यस्य नरस्य विपुलं महत् पूर्वसुकृतं प्राक्तनं पुण्यम् अस्ति, तस्य भीमं भयावहं वनं प्रधानं श्रेष्ठं पुरं नगरं भवति, तस्य सर्वो जनः सुजनतां सौजन्यम् उपयाति गच्छति, किं बहुना तस्य

यन्नागा मद्भिन्नकण्ठकरटास्तिष्ठन्ति निद्रालसा
द्वारे हेमविभूषणाश्च तुरगा वल्गन्ति यद्दर्पिताः ।
वीणावेणुमृदङ्गशङ्खपटहैः सुप्तस्तु यद्बोध्यते
तत्सर्वं सुरलोकदेवसदृशं धर्मस्य विस्फूर्जितम् ॥ ५५ ॥

मज्जत्वम्भसि यातु मेरुशिखरं शत्रुञ्जयत्वाहवे
वाणिज्यं कृषिसेवनादिसकला विद्याकलाः शिक्षतु ।
आकाशं विपुलं प्रयातु खगवत् कृत्वा प्रयत्नं परं
नाभाव्यं भवतीह कर्मवशतो भाव्यस्य नाशः कुतः ॥ ५६ ॥

कृत्स्ना समग्रा भूः पृथिवी चतुर्भिः निधिभिः रत्नैश्च पूर्णा भवति । वसन्ततिलकं वृत्तम् ॥ ५४ ॥

यदिति । मदेन भिन्नौ क्लिन्नावित्यर्थः कण्ठकरटौ गलकपोलौ येषां तथोक्ताः मदोद्धता इत्यर्थः नागाः हस्तिनः निद्रया मदजनित-तया इति भावः अलसाः मन्थराः सन्तः द्वारे तिष्ठन्तीति यत्, हेम्नः विभूषणम् अलङ्कारः यत्र तादृशम् आस्यं मुखं येषां तथाभूताः स्वर्णभूषिता इति भावः तुरगाः अश्वाः दर्पिताः सन्तः द्वारे वल्गन्ति चपलाः तिष्ठन्तीत्यर्थः इति यत् सुप्तः निद्रितः वीणावेणुमृदङ्गशङ्ख-पटहैः वादित्रैरिति शेषः बोध्यते जागर्य्यते इति यत्, सुरलोके स्वर्गे देवानां सदृशं तत् सर्वं धर्मस्य सुकृतस्य विस्फूर्जितं विलसितम् । पुण्यपरिपाकोऽयमिति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ५५ ॥

मज्जत्विति । अम्भसि जले मज्जतु प्रविशतु, मेरुशिखरं सुमेरु-शृङ्गं यातु, आहवे युद्धे शत्रुं जयतु, वाणिज्य कृषिसेवनादिसकलाः विद्याकलाः विद्याविभागान् शिक्षतु अभ्यस्यतु, खगवत् पक्षिवत् परं महत् प्रयत्नं कृत्वा विपुलं विस्तृतम् आकाशं प्रयातु गच्छतु जन इति शेषः, किन्तु इह जगति कर्मवशतः सुकृतदुष्कृतवशात् अभाव्यम्

वरं पक्षच्छेदः समदमघवन्मुक्तकुलिश-
प्रहारैरुद्गच्छद्बहुलदहनोद्गारगुरुभिः ।
तुषाराद्रेः सूनोरहह पितरि क्लेशविवशे
न चासौ सम्पातः पयसि पयसां पत्युरुचितः ॥ ५७ ॥

नेता यस्य बृहस्पतिः प्रहरणं वज्रं सुराः सैनिकाः
स्वर्गो दुर्गमनुग्रहः खलु हरेरैरावतो वाहनम् ।
इत्यैश्वर्य्यसमन्वितोऽपि बलभिद्भग्नः परैः सङ्गरे
तद्युक्तं ननु दैवमेव शरणं धिग् धिग् वृथा पौरुषम् ॥५८॥

अभावनीयं न भवति, भाव्यस्य अवश्यम्भाविनस्य कुतः नाशः ? नैव कदाचित् नाशो भवतीत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ५६ ॥

वरमिति । उद्गच्छतः बहुलस्य महतः दहनस्य अग्नेः उद्गारेण उदयेन गुरुभिः महद्भिः समदः साहङ्कारः यः मघवान् इन्द्रः तेन मुक्तस्य निक्षिप्तस्य कुलिशस्य वज्रस्य प्रहारैः पक्षयोः छेदः घातनं वर मनाक् प्रियं, अहह खेदे, पितरि हिमवति क्लेशविवशे सत्यु कुलपक्षच्छेदेन पुत्रविरहेण च क्लेशमनुभवति सति तुषाराद्रेः हिमवतः सूनोः मैनाकस्य पयसां पत्युः समुद्रस्य पयसि असौ सम्पातः निमज्जनं पितरं त्यक्त्वा आत्मरक्षार्थमिति भावः न च उचितः । शिखरिणीवृत्तम । अत्राप्रस्तुतमैनाकवर्णनेन कस्यचित् प्रस्तुतस्य पितृत्यागेनात्मरक्षिणः प्रतीतेरप्रस्तुतप्रशंसालङ्कारः ॥ ५७ ॥

नेतेति । यस्य बृहस्पतिः देवगुरुः नेता मन्त्री, वज्रं कुलिशं प्रहरणम् अस्त्रं, सुराः देवाः सैनिकाः योद्धृपुरुषाः, स्वर्गः दुर्गं शत्रु-दुर्गमस्थानमित्यर्थः, हरेर्विष्णोः अनुग्रहः साहाय्यं खलु साहाय्यमस्त्येवेति यावत्, ऐरावतः वाहनं यानम् । इतीत्थम् ऐश्वर्य्यसमन्वितोऽपि बलभित् इन्द्रः सङ्गरे युद्धे परैः शत्रुभिर्दैत्यदानवैरिति शेषः भग्नः निर्जितः, तस्मात् दैवमेव शरणं सहायः युक्तं ननु युक्तमेव, वृथा

कर्मायत्तं फलं पुंसां बुद्धिः कर्मानुसारिणी।
तथापि सुधिया भाव्यं सुविचार्य्यैव कुर्वता॥ ५९॥
आलस्यं हि मनुष्याणां शरीरस्थो महारिपुः।
नास्त्युद्यमसमो बन्धुः कृत्वा यं नावसीदति॥ ६०॥
वरं गहनदुर्गेषु भ्रान्तं वनचरैः सह।
न मूर्खजनसंसर्गः सुरेन्द्रभवनेष्वपि॥ ६१॥
दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति॥६२॥

निरर्थकं पौरुषं पुरुषकारं धिक् धिक् पुनः पुनर्निन्दामीत्यर्थः। धिङ्निर्भर्त्सननिन्दयोरित्यमरः। कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः। शार्दूलविक्रीडितं वृत्तम्॥ ५८॥

कर्मेति। पुंसां फलम् अर्थसिद्धिः कर्मायत्तं कर्मजन्यादृष्टाधीनमित्यर्थः, बुद्धिः कर्मानुसारिणी तत्तत्सुकृतदुष्कृतजनितादृष्टानुसारेण प्रवर्त्तते इत्यर्थः। तथापि कर्मणः अनुल्लङ्घनीयत्वेऽपीत्यर्थः सुधिया विदुषा सुविचार्य्यैव सुविविच्यैव कुर्वता कार्य्यमिति शेषः भाव्यम्। अनुष्टुब्वृत्तम्॥ ५९॥

आलस्यमिति। आलस्यं मनुष्याणां शरीरस्थः महारिपुर्हि महान् शत्रुरेव। उद्यमेन उद्योगेन समः बन्धुः नास्ति, यम् उद्यमं कृत्वा न अवसीदति न क्षीयते जन इति शेषः। अनुष्टुब्वृत्तम्॥६०॥

वरमिति। गहनदुर्गेषु दुर्गमेषु वनेषु वनचरैः व्याधैः सह भ्रान्तं भ्रमणं वरं मनाक्प्रियं, सुरेन्द्रभवनेषु अमरावतीषु अपि मूर्खजनैः संसर्गः न वर इति शेषः। अनुष्टुब्वृत्तम्॥ ६१॥

दानमिति। वित्तस्य धनस्य दानं भोगः नाशः त्रयः एताः तिस्रः गतयः भवन्ति, यः जनः न ददाति, न च भुङ्क्ते, तस्य तृतीया गतिः धनस्य नाश एवेत्यर्थः भवति। आर्य्यावृत्तम्॥६२॥

यस्यास्ति वित्तं स नरः कुलीनः
स एव वक्ता स च दर्शनीयः ।
स पण्डितः स श्रुतवान् गुणज्ञः
सर्वे गुणाः काञ्चनमाश्रयन्ति ॥ ६३ ॥

रत्नैर्महार्हैस्तुतुषुर्न देवाः
न भेजिरे भीमविषेण भीतिम् ।
सुधां विना न प्रययुर्विरामं
विनिश्चितार्थाद्विरमन्ति धीराः ॥ ६४ ॥

सन्त्यन्येऽपि वृहस्पतिप्रभृतयः सम्भाविताः पञ्चषा-
स्तान् प्रत्येष विशेषविक्रमरुची राहुर्न वैरायते ।

यस्येति । यस्य नरस्य वित्तं धनम् अस्ति, स नरः कुलीनः महावंशप्रसूत इत्यर्थः धनेन कुलमिति वैयाकरणाः, स एव नरः वक्ता मिष्टभाषी, स च दर्शनीयः सुश्रीरित्यर्थः, स पण्डितः विद्वान्, स श्रुतवान् वेदवित्, गुणज्ञश्च । तथाहि सर्वे गुणाः कौलीन्यादयः काञ्चनं धनमिति यावत् आश्रयन्ति । कारणेन कार्य्यसमर्थनरूपो-ऽर्थान्तरन्यासः । उपजातिवृत्तम् ॥ ६३ ॥

रत्नैरिति । देवाः महार्हैः महामूल्यैः रत्नैः समुद्रदत्तैरिति भावः न तुतुषुः न सन्तोषं प्रापुः । भीमविषेण भयङ्करहलाहलेन समुद्रोत्थितेनेति भावः भीतिं भयं न भेजिरे न प्रापुः । सुधाम् अमृतं विना विरामं निवृत्तिं न प्रययुः न प्रापुः । तथाहि धीराः सन्तः विनिश्चितार्थात् विशेषेण सिद्धार्थात्, यत्यर्थे पञ्चमी । सिद्धं कार्य्यं प्राप्येत्यर्थः विरमन्ति निवर्त्तन्ते । उपजातिवृत्तम् । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः ॥ ६४ ॥

सन्तीति । हे भ्रातः ! अन्येऽपि वृहस्पतिप्रभृतयः सम्भाविताः प्रशस्ताः पञ्च षट् ग्रहा इति शेषः सन्ति, एषः विशेषविक्रमे रुचिरभि-

द्वाविव ग्रसते दिनेश्वरनिशाप्राणेश्वरौ भास्वरौ
भ्रातः! पर्वणि पश्य दानवपतिः शीर्षावशेषीकृतः ॥६५॥

इयत्येतस्मिन् वा निरवधिचमत्कृत्यतिशये
वराहो वा राहुः प्रभवति चमत्कारविषयः।
महीमेको मग्नां यदयमवहद्दन्तमुकुलैः
शिरःशेषः शत्रुर्निगिलति परं सन्त्यजति च ॥ ६६ ॥

श्रोत्रं श्रुतेनैव न कुण्डलेन
दानेन पाणिर्न च कङ्कणेन।
आभाति कायः करुणापराणां
परोपकारेण न चन्दनेन ॥ ६७ ॥

शेषो यस्य तादृशः राहुः तान् सुरान् प्रति न वैरायते न विद्वेष्टि। भास्वरौ दीप्यमानौ दिनेश्वरनिशाप्राणेश्वरौ सूर्य्याचन्द्रमसौ द्वावेव शीर्षावशेषीकृतः शिरोमात्रावशिष्टः दानवपतिः राहुः पर्व्वणि पौर्ण-मास्याम् अमावास्यायाञ्च यथाक्रमं ग्रसते कवलयति। पश्य अवलो-कय। शार्दूलविक्रीडितं वृत्तम् ॥ ६५ ॥

इयतीति। इयति एतत्परिमाणे एतस्मिन् वा निरवधि-चमत्कृत्यतिशये अशेषाश्चर्य्यातिशये जगतीति शेषः वराहो वा राहुर्वा चमत्कारस्य आश्चर्य्यस्य विषयः अतीवपात्रमिति भावः प्रभवति सर्व्वोत्कर्षेण वर्त्तते इत्यर्थः। यत् यतः अयम् एकः वराह इत्यर्थः मग्नां प्रलयपयोधाविति भावः दन्तमुकुलैः अवहत्, अपरः शिरःशेषः शीर्षविशिष्टः शत्रुः राहुरिति भावः परं शत्रुं सूर्य्यं चन्द्रं वा निगिलति ग्रसति सन्त्यजति च उद्गिरति च। शिखरि-णीवृत्तम् ॥ ६६ ॥

श्रोत्रमिति। श्रोत्रं कर्णविवरं श्रुतेन वेदवाक्येन कुण्डलेन न, पाणिः भुजः दानेन न कङ्कणेन, करुणापराणां दयार्द्राणां कायः

जयन्ति ते सुकृतिनो रसवैद्याः कवीश्वराः।
नास्ति येषां यशःकाये जरामरणजन्मभीः॥ ६८॥

यद्धात्रा निजभालपट्टलिखितं स्तोकं महद्वा फलं
तत् प्राप्नोति मरुस्थलेऽपि नियतं मेरौ च नातोऽधिकम्।
तद्धीरो भव वित्तवत्सु कृपणां वृत्तिं वृथा मा कृथाः
कूपे पश्य पयोनिधावपि घटा गृह्णन्ति तुल्यञ्जलम्॥६९॥

लाङ्गूलचालनमधश्चरणावपातं
भूमौ निपत्य वदनोदरदर्शनञ्च।

शरीरं परोपकारेण न चन्दनेन, आभाति शोभते। उपजातिवृत्तम्॥ ६७॥

जयन्तीति। ते सुकृतिनः पुण्यवन्तः रसवैद्याः रसिकाः कवीश्वराः श्रेष्ठाः कवयः जयन्ति सर्वोत्कर्षेण वर्त्तन्ते। येषां कवीश्वराणां यशःकाये यशःशरीरे काव्यरूपे इति भावः जरा वार्द्धकं मरणं जन्म तेभ्यः भीः भयं नास्ति। तत् शरीरं जरादीनां वशंवदं न भवतीति भावः। अनुष्टुब्वृत्तम्॥ ६८॥

यदिति। धात्रा विधात्रा निजभालपट्टे स्वकीयललाटपट्टे लिखितं यत् स्तोकम् अल्पं वा महत् फलं, तत् मरुस्थलेऽपि मरुभूमावपि मेरौ सुमेरुपर्वते च प्राप्नोति जन इति शेषः, अतः अस्मात् विधातृलिखितात् अधिकम् अल्पं वेति शेषः न प्राप्नोतीति शेषः। तत् तस्मात् धीरो भव सुस्थिरो भव, वित्तवत्सु धनिषु वृथा निष्फलां कृपणां दीनां वृत्तिं याच्ञामित्यर्थः मा कृथाः न कुरु। पश्य अवलोकय कूपे पयोनिधावपि घटाः कलसाः तुल्यं जलं गृह्णन्ति लभन्ते। शार्दूलविक्रीड़ितं वृत्तम्॥ ६९॥

लाङ्गूलेति। श्वा कुक्कुरः लाङ्गूलचालनं पुच्छकम्पनं पिण्ड-दस्य अन्नदातुः अधः चरणयोः अवपातं पतनं भूमौ निपत्य वदनो-

श्वा पिण्डदस्य कुरुते गजपुङ्गवस्तु
धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥ ७० ॥

राजन् ! दुधुक्षसि यदि क्षितिधेनुमेतां
तेनाद्य वत्समिव लोकमिमं पुषाण ।
तस्मिंश्च सम्यगनिशम्परिपोष्यमाणे
नानाफलैः फलति कल्पलतेव भूमिः ॥ ७१ ॥

सत्यानृता च परुषा प्रियवादिनी च
हिंस्रा दयालुरपि चार्थपरा वदान्या ।
नित्यव्यया प्रचुरनित्यधनागमा च
वाराङ्गनेव नृपनीतिरनेकरूपा ॥ ७२ ॥

दरयोः मुखजठरयोः दर्शनं प्रदर्शनं कुरुते । तु किन्तु गजपुङ्गवः गजराजः धीरं गम्भीरं यथा तथा विलोकयति, चाटुशतैः बहुयत्नैरिति भावः भुङ्क्ते भक्षयति च । यथायोग्यमाचरति लोक इति भावः । वसन्ततिलकं वृत्तम् ॥ ७० ॥

राजन्निति । हे राजन् ! यदि एतां क्षितिधेनुं पृथिवीरूपां गां दुधुक्षसि दोग्धुमिच्छसि, तेन तदेत्यर्थः अद्य इदानीं वत्समिव इमं लोकं पुषाण पालय, यथा प्रथमं वत्सः स्वमातुर्धेनोः स्तन्यं पिबति ततस्तत्पालकस्य दुग्धप्राप्तिः तथा अग्रतः भूपस्त्वेन प्रजां रक्षित्वा पश्चात् भूस्वामिनः करग्रहणं कर्त्तव्यमिति भावः । तस्मिंश्च लोके नानाफलैः अनिशं सततं सम्यक् परिपोष्यमाणे पाल्यमाने सति भूमिः कल्पलतेव फलति अभीष्टम् उत्पादयति । उपमालङ्कारः । वसन्ततिलकं वृत्तम् ॥ ७१ ॥

सत्यानृतेति । नृपनीतिः राजनीतिः वाराङ्गनेव वेश्येव सत्या सत्यवादवती अनृता मिथ्यावती च, परुषा निष्ठुरा प्रियवादिनी च, हिंस्रा हिंसाशीला दयालुरपि, अर्थपरा धनलोलुपा वदान्या दान-

न कश्चिच्चण्डकोपानामात्मीयो नाम भूभुजाम् ।
होतारमपि जुह्वन्तं स्पृष्टो दहति पावकः ॥ ७३ ॥

विपदि महतां धैर्यध्वंसं यदीक्षितुमीहसे
विरम विरमायासादस्माद् दुरध्यवसायतः ।
अपि जलनिधेः कल्पापाये व्यपेतनिजक्रमात्
कुलशिखरिणः क्षुद्रा नैते न चापि जडाशयाः ॥ ७४ ॥

शीला च, नित्यं सततं व्ययः यस्यां यस्या वा तथोक्ता तथा प्रचुरः प्रभूतः नित्यं धनागमः यस्यां यस्या वा तथाविधा अत एव अनेकरूपा बहुविधा । उपमालङ्कारः । वसन्ततिलकं वृत्तम् ॥ ७२ ॥

नेति । कश्चित् कोऽपि जनः चण्डकोपानां प्रचण्डक्रोधानां भूभुजाम् आत्मीयः न अस्तीति शेषः नाम सम्भावनायाम् एतत् सम्भावयामीत्यर्थः । तथाहि पावकः अग्निः स्पृष्टः सन् पदादिनेति भावः जुह्वन्तम् आत्मनि हव्यं प्रक्षिपन्तं होतारमपि दहति भस्मीकरोति । प्रचण्डानां स्वपरविवेको नास्तीति भावः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः । अनुष्टुब्वृत्तम् ॥ ७३ ॥

विपदीति । यदि चेत् विपदि महतां धैर्यध्वंसम् ईक्षितुं द्रष्टुम् ईहसे चेष्टसे इच्छसीति यावत् तदा दुरध्यवसायतः दुष्टात् अध्यवसायात् दुश्चेष्टितात् अस्मात् आयासात् क्लेशात् विरम विरम अत्यर्थं निवर्त्तस्व । कल्पापाये प्रलये जलनिधेः समुद्रात् डलयोरैक्यात् जडनिधेः निर्विवेकात् समुद्रात् अपि एषः धैर्य्यध्वंसः सम्भवति व्यपेतः विगतः निजक्रमः स्वीया स्थितिर्यस्य तस्मात् कुलशिखरिणः कुलपर्वतात् च एषः धैर्य्यध्वंसः सम्भवति । परन्तु एते महान्तः कुलपर्वता इव क्षुद्राः न चापि समुद्रा इव जडाशयाः । प्रलये पर्वतानां सागराणाञ्च यथावत् स्थितिभङ्गो यदि स्यात् तथापि महतां कदापि धैर्यध्वंसो न स्यादिति निष्कर्षः । शिखरिणीवृत्तम् ॥ ७४ ॥

अकरुणत्वमकारणविग्रहः परधनाय रतिः परयोषिति।
सुजनबन्धुजनेष्वसहिष्णुता प्रकृतिसिद्धमिदं हि दुरात्मनाम्॥७४

कान्ताकटाक्षविशिखा न खनन्ति यस्य
चित्तं न निर्दहति कोपकृशानुतापः।
कर्षन्ति भूरिविषयाश्च न लोभपाशा
लोकत्रयं जयति कृत्स्नमिदं स वीरः॥ ७६॥

आरम्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती च पश्चात्।
दिनस्य पूर्वार्द्धपरार्द्धभिन्ना छायेव मैत्री खलसज्जनानाम्।७७

अकरुणत्वमिति। अकरुणत्वं निर्दयत्वम्, अकारणविग्रहः निष्कारणकलहः, परधनाय परयोषिति परकलत्रे च रतिः लोभः, सुजनेषु बन्धुजनेषु च असहिष्णुता, इदं सर्वं दुरात्मनां प्रकृतिसिद्धं स्वभावनियतम्। द्रुतविलम्बितं वृत्तम्॥ ७४॥

कान्तेति। कान्तायाः कटाक्षविशिखाः कटाक्षशराः यस्य चित्तं न खनन्ति न विध्यन्ति, कोपकृशानुतापः कोपाग्निसन्तापः यस्य चित्तं न निर्दहति, भूरिविषयाः बहुविषयाः लोभपाशाश्च लोभरज्जवश्च यस्य चित्तं न कर्षन्ति, स वीरः कृत्स्नं समग्रम् इदं लोकत्रयं जयति। रूपकमलङ्कारः। वसन्ततिलकं वृत्तम्॥ ७५॥

आरम्भेति। खलसज्जनानां खलानां दुर्जनानां साधूनां मैत्री आरम्भे उपक्रमे गुर्वी महती, क्रमेण क्षयिणी अस्थायिनी, पुरा प्राक् आरम्भे इत्यर्थः लघ्वी अल्पमात्रा, पश्चात् वृद्धिमती च, अतः दिनस्य पूर्वार्द्धपरार्द्धयोः भिन्ना पृथग्रूपा दिनस्य पूर्वार्द्धे आरम्भगुर्वी ततः क्रमेण क्षयिणी, परार्द्धे आरम्भलघ्वी पश्चात् वृद्धिमतीति भावः छायेव भवतीति शेषः। उपजातिवृत्तम्॥ ७६॥

प्रदानमिति। प्रच्छन्नं गूढ़म् अप्रकाशमित्यर्थः प्रदानं, गृहम् उपगते गृहागते जने इति शेषः सम्भ्रमविधिः सम्मानम्, प्रियं

प्रदानं प्रच्छन्नं गृहमुपगते सम्भ्रमविधिः
प्रियं कृत्वा मौनं सदसि कथनञ्चाप्युपकृतेः।
अनुत्सेको लक्ष्म्या निरभिभवसाराः परकथाः
सतां केनोद्दिष्टं विषममसिधाराव्रतमिदम् ॥७८॥

छिन्नोऽपि रोहति तरुः क्षीणोऽप्युपचीयते पुनश्चन्द्रः।
इति विमृशन्तः सन्तः सन्तप्यन्ते न ते विपदा ॥७९॥

भवन्ति नम्रास्तरवः फलोद्गमैः
नवाम्बुभिर्दूरविलम्बिनो घनाः।
अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ॥ ८० ॥

कृत्वा लोकस्येति शेषः मौनं तूष्णीम्भावः श्लाघाराहित्यमित्यर्थः, सदसि सभायाम् उपकृतेः परकृतायाः इति शेषः कथनं प्रकटनं, लक्ष्म्या सम्पदा अनुत्सेकः अगर्वः, निरभिभवसाराः निरवमानाः परकथाः परेषां कथासु अवमाननाराहित्यमिति भावः सतां साधूनाम् इदं विषमं दुष्करमित्यर्थः असिधाराव्रतम् असिधारायां स्थितावपि असिना न शरीरकर्त्तनं स्यादित्येवं व्रतं केन उद्दिष्टम् उपदिष्टम्। सर्वथा दुष्करं साधुव्रतमिति भावः। शिखरिणीवृत्तम् ॥ ७७ ॥

छिन्न इति। तरुः वृक्षः छिन्नोऽपि रोहति पुनर्वर्द्धते, चन्द्रः क्षीणोऽपि कलामात्रावशेषोऽपि पुनरुपचीयते पुनर्वर्द्धते। इति विमृशन्तः विचारयन्तः पश्यन्त इति यावत् ते प्रसिद्धाः सन्तः साधवः विपदा न सन्तप्यन्ते पुनरुन्नतिवाञ्छयेति भावः। आर्य्यावृत्तम् ॥७८॥

भवन्तीति। तरवः फलानाम् उद्गमैः उदयैः नम्राः विनताः भवन्ति। घनाः मेघाः नवाम्बुभिः नवजलैः दूरात् विलम्बिनः अवनमन्तीत्यर्थः। सत्पुरुषाः साधवः समृद्धिभिः अनुद्धताः न औद्धत्यं गताः प्रत्युत विनता एवेति भावः। परोपकारिणाम् एषः ईदृशः

कदर्थितस्यापि हि धैर्य्यवृत्ते:
बुद्धेर्विनाशो न हि शङ्कनीय: ।
अध:कृतस्यापि तनूनपातो
नाध: शिखा याति कदाचिदेव ॥ ८१ ॥

अप्रियवचनदरिद्रै: प्रियवचनाढ्यै: स्वदारपरितुष्टै: ।
परपरिवादनिवृत्तै: क्वचित् क्वचिन्मण्डिता वसुधा ॥८२॥

पद्माकरन्दिनकरो विकचीकरोति
चन्द्रो विकासयति कैरवचक्रवालम् ।

स्वभाव एव । सामान्येन विशेषसमर्थनरूपोऽयमर्थान्तरन्यासः । वंशस्थविलं वृत्तं, वदन्ति वंशस्थविलं जतौ जराविति लक्षणात् ॥ ८० ॥

कदर्थितस्येति । कदर्थितस्य क्लेशितस्यापि धैर्य्यवृत्ते: धीरस्य बुद्धेर्विनाश: विपर्य्यय इति यावत् धैर्य्यच्युतिरिति भाव: न शङ्कनीय: सम्भावनीय: । अध:कृतस्यापि अधस्तले स्थापितस्यापीत्यर्थ: न्यक्कृतस्यापीति भाव: तनूनपात: अग्ने: शिखा कदाचिदेव न अध: याति ऊर्द्ध्वमेव उत्तिष्ठतीति यावत्, प्रसिद्धमूर्द्ध्वज्वलनं हविर्भुज इति भाव: । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यास: उपजातिवृत्तम् ॥ ८१ ॥

अप्रियेति । अप्रियवचनेषु दरिद्रै: अप्रियकथनविमुखैरित्यर्थ: प्रियवचनेन आढ्यै: युक्तै: प्रियवादिभिरित्यर्थ: स्वदारेषु निजपत्न्यां सन्तुष्टै: परस्त्रीविमुखैरिति भाव: परपरिवादनिवृत्तै: लोकानां निन्दात: निरतैरित्यर्थ: साधुभिरिति शेष: क्वचित् क्वचित् न तु सर्वत्रेति भाव: वसुधा पृथ्वी मण्डिता अलङ्कृता । क्वचित् क्वचित् प्रदेशे साधव: सन्ति न तु सर्वत्रेति भाव: । आर्य्यावृत्तम् ॥ ८२ ॥

पद्माकरमिति । दिनकर: सूर्य्य: पद्माकरं सरोजनिचयं सरो-

नाभ्यर्थितोऽपि जलदः सलिलन्ददाति
सन्तः स्वयं परहितेषु कृताभियोगाः ॥८३॥

एकेनापि हि शूरेण पादाक्रान्तं चमातलम् ।
क्रियते भास्करेणेव स्फारं स्फुरिततेजसा ॥ ८४ ॥

वरं तुङ्गाच्छृङ्गाद् गुरुशिखरिणः क्वापि पुलिने
पतित्वायङ्कायः कठिनदृषदन्तर्विदलितः ।
वरं न्यस्तो हस्तः फणिपतिमुखे तीव्रदशने
वरं वह्नौ पातस्तदपि न कृतः शीलविलयः ॥ ८५ ॥

वरं वा विकचीकरोति विकाशयति । चन्द्रः कैरवचक्रवालं कुमुदवृन्दं विकाशयति । जलदः मेघः नाभ्यर्थितः अपि अयाचितोऽपि सलिलं ददाति । सन्तः साधवः परेषां हितेषु स्वयं कृताभियोगाः कृत-प्रयत्नाः भवन्तीति शेषः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । वसन्ततिलकं वृत्तम् ॥ ८३ ॥

एकेनेति । एकेनापि शूरेण वीरेण स्फुरिततेजसा दीप्ततेजसा भास्करेणेव स्फारं विस्तृतं चमातलं पृथिवीतलं पादाक्रान्तं मयूखाभि-भूतं चरणाक्रान्तमिति ध्वनिः क्रियते हि क्रियत एव । अत्राप्रस्तुतेन भास्करेण कस्यचित् प्रस्तुतस्य वीरपुरुषस्य प्रतीतेरप्रस्तुतप्रशंसालङ्कारः । अनुष्टुब्वृत्तम् ॥ ८४ ॥

वरमिति । गुरुशिखरिणः महाद्रेः तुङ्गात् उन्नतात् शृङ्गात् क्वापि पुलिने सैकतदेशे पतित्वा अयं कायः शरीरं कठिनदृषदां दृढ-शिलानाम् अन्तर्मध्ये विदलितः चूर्णितः वरं मनाक्प्रियः, तीव्रदशने तीक्ष्णदन्ते फणिपतिमुखे भुजङ्गवदने हस्तः न्यस्तः अर्पितः वरं मनाक् प्रियः, वह्नौ अग्नौ पातः पतनं वरं मनाक् प्रियः, तदपि तथापि शीलविलयः सुचरितध्वंसः न कृतः सहतेति शेषः । महान्तः मरणेऽपि शीलं न त्यजन्तीति भावः । शिखरिणीवृत्तम् ॥ ८५ ॥

वह्निस्तस्य जलायते जलनिधिः कूपायते तत्क्षणात्
मेरुः स्वल्पशिलायते मृगपतिः सद्यः कुरङ्गायते ।
व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते
यस्याङ्गेऽखिललोकवल्लभतमं शीलं समुन्मीलति ॥८६॥
यदचेतनोऽपि पादैः स्पृष्टः प्रज्वलति सवितूरविकान्तः ।
तत्तेजस्वी पुरुषः परकृतनिकृतं कथं सहते ॥ ८७ ॥
आज्ञा कीर्त्तिः पालनं ब्राह्मणानां
दानम्भोगो मित्रसंरक्षणञ्च ।

वह्निरिति । यस्य जनस्य अङ्गे शरीरे अखिललोकानां सर्वजनानां वल्लभतमम् अतिप्रियं शीलं सुचरितं समुन्मीलति सम्यक् प्रकाशते, तस्य वह्निः जलायते जलवत् शीतलो भवतीत्यर्थः, जलनिधिः समुद्रः तत्क्षणात् तद्दर्शनमात्रेणेत्यर्थः कूपायते कूपवदाचरति, मेरुः सुमेरुगिरिः स्वल्पशिलायते क्षुद्रशिलावत् आचरति, मृगपतिः सिंहः सद्यः तत्क्षणं कुरङ्गायते मृगवदाचरति, व्यालः सर्पः माल्यगुणायते हाररज्जुरिवाचरति, विषरसः विषास्वादः पीयूषवर्षायते अमृतास्वाद इव आचरति । शीलवतः सर्वत्रैव सुखं न क्वचिदपि दुःखं स्यादिति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ८६ ॥

यदिति । अचेतनोऽपि रविकान्तः सूर्य्यकान्तमणिरित्यर्थः सवितुः सूर्य्यस्य पादैः किरणैः चरणैरिति ध्वनिः । स्पृष्टः आक्रान्तः आहत इति ध्वनिः, यत् यदेत्यर्थः प्रज्वलति प्रकर्षेण दीप्यते तेजः प्रकाशयतीत्यर्थः, तत् तदा तेजस्वी पुरुषः परकृतनिकृतम् अन्यकृतमवमानं कथं सहते ? नैव सहते इत्यर्थः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः आर्य्यावृत्तम् ॥ ८७ ॥

आज्ञेति । आज्ञा आदेशः कीर्त्तिः यशः सुख्यातिरित्यर्थः ब्राह्मणानां पालनं दानं भोगः मित्राणां संरक्षणञ्च सम्यक् पालनञ्च

येषामिते षड्गुणा न प्रवृत्ताः
कोऽर्थस्तेषां पार्थिवोपाश्रयेण ॥ ८८ ॥

व्यालम्बालमृणालतन्तुभिरसौ रोद्धुं समुज्जृम्भते
भेत्तुं वज्रमणिं शिरीषकुसुमप्रान्तेन सन्नह्यति ।
माधुर्य्यं मधुबिन्दुना रचयितुं क्षाराम्बुधेरीहते
नेतुं वाञ्छति यः सतां पथि खलान् सूक्तैः सुधास्यन्दिभिः ८९

स्वायत्तमेकान्तहितं विधात्रा
विनिर्मितं छादनमज्ञतायाः ।

एते षट् गुणाः येषां न प्रवृत्ताः न चलिताः, तेषां पार्थिवोपाश्रयेण राजाश्रयेण कोऽर्थः ? किं प्रयोजनं ? न किमपीत्यर्थः । राजसेविनो यदि उक्तं गुणषट्कं न लभन्ते तदा तेषां तत्सेवनं न कार्य्यमिति भावः शालिनीवृत्तम् ॥ ८८ ॥

व्यालमिति । यः सुधास्यन्दिभिः अमृतवर्षिभिः सूक्तैः शोभनवचनैः खलान् दुर्जनान् सतां साधूनां पथि नेतुं वाञ्छति चेष्टते इत्यर्थः, असौ बालमृणालतन्तुभिः अभिनवबिसस्रूत्रैः व्यालं सर्पं रोद्धुं बन्धुं समुज्जृम्भते सम्यक् प्रयतते, शिरीषकुसुमप्रान्तेन शिरीषपुष्पाग्रेण वज्रमणिं हीरकं भेत्तुं वेद्धुं सन्नह्यति उद्युङ्क्ते, तथा मधुबिन्दुना क्षाराम्बुधेः लवणसागरस्य माधुर्य्यं मिष्टतां रचयितुं कर्त्तुम् ईहते चेष्टते । खलानां सत्पथे नयनमसम्भवमिति भावः । असाध्यस्य धर्मं कथमन्यो वहत्विति खलानां सत्पथे नयनस्य मृणालतन्तुना व्यालबन्धनस्य शिरीषकुसुमप्रान्तेन वज्रभेदनस्य मधुबिन्दुना लवणोदधेर्माधुर्य्यसम्पादनस्य च बिम्बप्रतिबिम्बभावप्रतीतेर्निदर्शनालङ्कारः । तदुक्तं दर्पणे, सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् । यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शनेति । शार्दूलविक्रीडितं वृत्तम् ॥ ८९ ॥

स्वायत्तमिति । स्वायत्तं स्वाधीनम् एकान्तहितम् अतिशय-

विशेषतः सर्वविदां समाजे
विभूषणं मौनमपण्डितानाम् ॥ ८० ॥

उद्भासिताखिलखलस्य विशृङ्खलस्य
प्राग्जातविस्मृतनिजाधमकर्मवृत्तेः।
दैवादवाप्तविभवस्य गुणद्विषोऽस्य
नीचस्य गोचरगतैः सुखमास्यते कैः ॥८१॥

विद्या नाम नरस्य रूपमधिकं प्रच्छन्नगुप्तन्धनं
विद्या भोगकरी यशःसुखकरी विद्या गुरूणां गुरुः।

जनकं विधात्रा विधिना विनिर्मितं कृतं दैवकृतमित्यर्थः स्वत्तमायाः स्वत्तमतायाः इति यावत् छादनं गोपकमित्यर्थः स्वत्तमोऽयं वक्तुमिति लोकानामवज्ञायाः आवरकमिति भावः अपण्डितानाम् अविदुषां मौनं तूष्णीम्भावः सर्वविदां सर्वज्ञानां विचक्षणानामिति भावः समाजे विशेषतः विभूषणम् अलङ्कारः। विज्ञसंसदि अपण्डितैर्मौनमाश्रयणीयं तथा सति केऽपि तं नितरां मूर्खं नावबुध्यन्ते इति भावः। उपजातिवृत्तम् ॥ ८० ॥

उद्भासितेति। उद्भासिताः उत्तेजिताः अखिलाः समस्ताः खलाः दुर्जनाः येन तथोक्तस्य दुर्जनान् खड्यत इति यावत् विशृङ्खलस्य अव्यवस्थितस्येत्यर्थः प्राग्जातेन पूर्वभूतेन प्राक्कृतेनेति भावः विस्मृतेन निजेन स्वकीयेन अधमेन नीचेन कर्मणा वृत्तिः जीविका यस्य तथाविधस्य पूर्वमतिनीचकर्मणा जीविका कृतेति विस्मरत इत्यर्थः दैवात् अप्राप्तविभवस्य प्राप्तसम्पदः गुणद्विषः गुणविरोधिनः नीचस्य अधमस्य जनस्य गोचरगतैः दृष्टिपथवर्त्तिभिः कैः साधुभिरिति शेषः सुखम् आस्यते ? सुखं स्थीयते ? न कैरपीत्यर्थः। दुर्जनगोचराः केऽपि न सुखिनो भवन्तीति भावः। वसन्ततिलकं वृत्तम् ॥ ८१ ॥

विद्येति। विद्या नाम नरस्य मानवस्य अधिकम् अत्यसौन्दर्या-

विद्या बन्धुजनो विदेशगमने विद्या परन्दैवतं
विद्या राजसु पूजिता शुचि धनं विद्याविहीनः पशुः ॥८२॥
दाक्षिण्यं स्वजने दया परिजने शाठ्यं सदा दुर्जने
प्रीतिः साधुजने क्षमा गुरुजने नारीजने धूर्त्तता ।
शौर्य्यं शत्रुजने क्षमः खलजने विद्वज्जने चार्जवं
ये त्वेवं पुरुषाः कलासु कुशलास्तेष्वेव लोकः स्थितः ॥८३॥
करे श्लाघ्यस्त्यागः शिरसि गुरुपादप्रणयिता
मुखे सत्या वाणी विजयभुजयोर्वीर्य्यमतुलम् ।

इतिरिक्तं रूपं सौन्दर्य्यं, प्रच्छन्नगुप्तं निभृतगूढं धनं यत् केनापि हर्त्तुं न शक्यते इति भावः । विद्या भोगकरी सुखसम्भोगसाधनी यशसा कीर्त्तिसञ्चारेण सुखकरी आनन्दविधायिनी, विद्या गुरूणां गुरुः पूज्येति भावः । विद्या विदेशगमने बन्धुजनः विदेशे बन्धुहितस्य कारणत्वादिति भावः । विद्या परं महत् दैवतम् आराध्यमिति भावः । विद्या राजसु न्टपतिषु पूजिता राजानो विद्वांसं पूजयन्तीति भावः विद्या शुचि पवित्रं निर्दोषं चार्य्यत्वादिदोषरहितमिति भावः धनं, तस्मात् विद्याविहीनो जनः पशुः पशुवत् गण्यते इति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ८२ ॥

दाक्षिण्यमिति । सदा स्वजने बन्धुजने दाक्षिण्यम् आनुकूल्यं परिजने परिवारे भृत्यवर्गे इत्यर्थः दया, दुर्जने शाठ्यं शठता, साधुजने प्रीतिः प्रणयः, गुरुजने क्षमा दोषापहृवः, नारीजने धूर्त्तता चातुर्य्यं, शत्रुजने शौर्य्यं विक्रमः, खलजने क्षमः उपहासः गर्व्वो वा, विद्वज्जने च आर्जवं सारल्यं, ये तु पुरुषाः एवम् इत्थं कलासु व्यवहारेष्वित्यर्थः कुशलाः निपुणाः, तेषु पुरुषेषु एव लोकः संसारः स्थितः । ईदृशा एवं संसारं सुखेन नयन्तीति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ८३ ॥

करे इति । करे हस्ते श्लाघ्यः प्रशंसनीयः त्यागः सत्पात्रे

हृदि स्वेच्छावृत्तिः श्रुतमधिगतञ्च श्रवणयोः
विनाप्यैश्वर्य्येण प्रकृतिमहतां मण्डनमिदम् ॥ ८४ ॥

वहति भुवनश्रेणीं फणी फणाफलकस्थितां
कमठपतिना मध्ये पृष्ठं सदा स च धार्य्यते ।
तमपि कुरुते क्रीड़ाधानं पयोनिधिरनादरात्
अहह महतां निःसीमानश्चरित्रविभूतयः ॥ ८५ ॥

स्पृहयति भुजयोरन्तरमायतकरबालकरवहृदीर्णम् ।
विजयश्रीर्वीराणां मत्तप्रौढ़वनितेव सदा ॥ ८६ ॥

दानमिति भावः, शिरसि गुरुपादप्रणयिता गुरुजनचरणेषु अवनति-रिति भावः, मुखे सत्या वाणी वाक्, विजयभुजयोः विजयार्थं शत्रू-णामिति शेषः भुजयोः बाह्वोः अतुलं वीर्य्यं, हृदि मनसि स्वेच्छया निजेच्छया वृत्तिः व्यवहारः, श्रवणयोः कर्णयोः श्रुतं शास्त्रम् अधि-गतञ्च, इदं सर्वं प्रकृतिमहतां प्रकृत्या स्वभावेन महान्तः तेषाम् ऐश्वर्य्येण सम्पदा विनापि प्रभूतसम्पत्तिराहित्येऽपीति भावः मण्डनं भूषणम्। शिखरिणीवृत्तम् ॥ ८४ ॥

वहतीति। फणी नागराजः फणाफलकस्थितां फणमण्डल-वर्त्तिनीं भुवनश्रेणीं भुवनसमूहं वहति। कमठपतिना कूर्मराजेन मध्ये पृष्ठं पृष्ठमध्ये स च फणी सदा निरन्तरं धार्य्यते। पयोधिः समुद्रः तमपि कमठपतिम् अनादरात् क्रीड़ाधानं क्रीड़नकं द्रव्यमिति भावः कुरुते। अहह आश्चर्य्यम् महतां चरित्रविभूतयः सुचरितसम्पदः निःसीमानः सीमारहिताः अनन्ता इत्यर्थः। सामान्येन विशेष-समर्थनरूपोऽर्थान्तरन्यासः। हरिणीवृत्तम्। नसमरसलागः षड्-वेदैर्हयैर्हरिणी मतेति तल्लक्षणात् ॥ ८५ ॥

स्पृहयतीति। विजयश्रीः जयलक्ष्मीः मत्ता प्रौढ़ा प्रगल्भा वनितेव नारीव सदा वीराणाम् आयतेन करबालरूपेण कररुहेण

स जातो येन जातेन याति वंशः समुन्नतिम् ।
परिवर्त्तिनि संसारे मृतः को वा न जायते ॥९७॥

लज्जां गुणौघजननीं जननीमिव स्वां
अत्यन्तशुद्धहृदयामनुवर्त्तमानाः ।
तेजस्विनः सुखमसूनपि सन्त्यजन्ति
सत्यव्रतव्यसनिनो न पुनः प्रतिज्ञाम् ॥९८॥

सिंहः शिशुरपि निपतति मदमलिनकपोलभित्तिषु ।
प्रकृतिरियं सत्ववतां न खलु वयस्तेजसो हेतुः ॥९९॥

नखरेण दीर्घं विदीर्णं भुजयोरन्तरं वक्षःस्थलं स्पृहयति कामयते । उपमालङ्कारः ॥ ९६ ॥

स इति । येन जातेन उत्पन्नेन पुत्रेणेति शेषः वंशः समुन्नतिम् अभ्युदयं याति प्राप्नोति स जातः, तस्यैव जननं सार्थकमिति भावः । परिवर्त्तिनि परिवृत्तिशीले संसारे मृतः सन् को वा जनः न जायते, सर्व एव जनः मृत्वा मृत्वा पुनः पुनर्जायते इत्यर्थः । अनुष्टुब्वृत्तम् ॥ ९७ ॥

लज्जामिति । सत्यव्रते व्यसनिनः समासक्ता इत्यर्थः तेजस्विनः प्रतापवन्तः स्वां जननीमिव मातरमिव गुणौघजननीं गुणराशिवर्द्धिनीमित्यर्थः अत्यन्तं शुद्धं पवित्रं हृदयं यस्याः तादृशीं लज्जाम् अनुवर्त्तमानाः प्रतिज्ञात्यागे लज्जावन्त इति भावः असून् प्राणानपि सन्त्यजन्ति, प्रतिज्ञां न पुनः नैव सन्त्यजन्तीत्यर्थः । उपमालङ्कारः । वसन्ततिलकं वृत्तम् ॥ ९८ ॥

सिंह इति । सिंहः शिशुरपि मदेन मलिना कपोलभित्तिः गण्डदेशः येषां तेषु मदमत्तेष्विति यावत् गजेन्द्रेष्विति शेषः निपतति आक्रामतीत्यर्थः । सत्ववतां बलीयसां बलवताम् इयं प्रकृतिः स्वभावः, वयः तेजसः प्रतापस्य हेतुः कारणं न खलु नैव । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः आर्य्यावृत्तम् ॥ ९९ ॥

किं कूर्म्मस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येष यत्
किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः ।
किन्त्वङ्गीकृतमुत्सृजन् मनसा श्लाघ्यो जनो लज्जते
निर्वाहः प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥१००॥

दूरादर्थं घटयति नवन्दूरतश्चापशब्दं
त्यक्त्वा भूयो भवति नियतं सत्सभारञ्जनेषु ।
मन्दम्मन्दं रचयति पदं लोकचित्तानुवृत्त्या
कामं मन्त्री कविरिव सदा खेदभारैरमुक्तः ॥ १०१ ॥

किमिति । कूर्मस्य कमठपतेः वपुषि शरीरे भरव्यथा भारवहनजक्लेशः किं न स्यात् इति शेषः अपितु स्यादेवेत्यर्थः, यत् एषः कूर्मः क्ष्मां पृथिवीं न क्षिपति शिरसः न पातयतीत्यर्थः । दिनपतेः सूर्यस्य परिश्रमः किं न अस्ति न विद्यते ? अपितु अस्त्येवेत्यर्थः, यत् निश्चलः स्थिरः न आस्ते न तिष्ठति सततं भ्रमतीत्यर्थः । किन्तु श्लाघ्यो महान् जनः अङ्गीकृतं प्रतिज्ञातम् उत्सृजन् त्यजन् मनसा न लज्जते अपितु लज्जत एव, हि यतः प्रतिपन्नवस्तुषु प्रतिज्ञातविषयेषु निर्वाहः सम्पादनं सतां गोत्रव्रतं कुलनियमः एतत् । अङ्गीकृतं सुकृतिनः परिपालयन्तीति कविसम्प्रदायः । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । शार्दूलविक्रीडितं वृत्तम् ॥ १०० ॥

दूरादिति । मन्त्री सचिवः कविरिव सदा खेदभारैः आयासातिशयैः अमुक्तः अत्यक्तः आयासशील इत्यर्थः सन् कामं सम्यक् दूरात् दूरदेशात् यवर्थे पञ्चमी दूरदेशमाश्रित्येत्यर्थः नवं नूतनम् अर्थं कार्य्यजातं सन्धिविग्रहादिरूपमिति भावः पक्षे दूरात् लक्षणाव्यञ्जनादिवृत्तिमाश्रित्येति भावः, नवं नूतनम् अन्येन अनुद्भावितमिति यावत् अर्थं शब्दानामिति शेषः घटयति निष्पादयति पक्षे आविष्करोति दूरतः कार्यस्त्रेनेति भावः अपशब्दम् अपभ्रंशवाचं पक्षे असंस्कृ-

दैवेन प्रभुणा स्वयञ्जगति यद्यस्य प्रमाणीकृतं
तत्तस्योपनयेन्मनागपि महानैवाश्रयः कारणम् ।
सर्वाशापरिपूरके जलधरे वर्षत्यपि प्रत्यहं
सूक्ष्मा एव पतन्ति चातकमुखे द्वित्राः पयोविन्दवः ॥१०२॥
अभिमुखनिहतस्य सतस्तिष्ठतु तावज्जयोऽथवा स्वर्गः ।
उभयबलसाधुवादः श्रवणसुखस्यैव तात्पर्य्यम् ॥ १०३ ॥

वाचं त्यक्त्वा नियतं सततं सतां साधूनां सभारङ्गनेषु भूयः प्रामुख्यं च भवति यत्नवानिति शेषः तथा लोकचित्तानुवृत्त्या कस्य कीदृशं चित्तं कः केन यथा वशति इत्थं लोकव्यवहारदर्शनेनेति यावत् तद्दर्शनार्थमिति भावः, पक्षे लोकानाम् आशयानुसरणेन मन्दं मन्दं शनैः शनैः पक्षे मृदु मृदु पदं चरणनिक्षेपं पक्षे सुप्तिङन्तरूपं शब्दं रचयति करोति पक्षे विन्यस्यति । उपमालङ्कारः । मन्दाक्रान्तं, मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्ममिति तल्लक्षणात् ॥ १०१ ॥

दैवेनेति । प्रभुणा सर्वशक्तिमता दैवेन विधिना स्वयं जगति यस्य यत् प्रमाणीकृतं लभ्यत्वेन सिद्धान्तितं, तस्य तत् उपनयेत् लभ्यं भवेदित्यर्थः, महान् आश्रयः मनागपि अल्पमपि कारणं नैव भवतीति शेषः । दृष्टवृत्तस्वभावः कार्य्यान्तं चोदीयानपि गच्छतीति कविवचनमलीकमिति भावः । तथाहि सर्वाशायाः सर्वकामस्य परिपूरके जलधरे प्रत्यहं वर्षति अपि चातकस्य मुखे सूक्ष्माः द्वित्रा एव पयोविन्दवः जलकणाः पतन्ति न ततोऽधिकमिति शेषः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः । शार्दूलविक्रीडितं वृत्तम् ॥१०२॥

अभिमुखेति अभिमुखे निहतस्य समरं युध्यमानस्येति भावः सतः जयः अथवा स्वर्गः तिष्ठतु तावत्, हतो वा प्राप्स्यसि स्वर्गं जित्वा वा प्राप्स्यसे महीमिति भगवद्गीता । उभयबलयोः साधुवादः साधु साधु सम्यक् युध्यसे इति धन्यवादः श्रवणसुखस्यैव तात्पर्

कौ न याति वशं लोके मुखे पिण्डेन पूरितः ।
मृदङ्गो मुखलेपेन करोति मधुरध्वनिम् ॥ १०४ ॥

केयूरा न विभूषयन्ति पुरुषं हारा न चन्द्रोज्ज्वला
न स्नानं न विलेपनं न कुसुमं नालङ्कृता मूर्द्धजाः ।
वाण्येका समलङ्करोति कृतिनं या संस्कृता धार्य्यते
क्षीयन्ते खलु भूषणानि सततं वाग्भूषणं भूषणम् ॥ १०५ ॥

यदि नाम दैवगत्या जगदसरोजं कदाचिदपि जातम् ।

र्थम् अभिलाषः । योधाः जयपराजययोर्निरुत्सुकाः साधुवादप्राप्त्या-शयैव युध्यन्ते इति भावः । आर्य्यावृत्तम् ॥ १०३ ॥

क इति । को जनः मुखे पिण्डेन अन्नेन पूरितः अन्नदानेन संवर्द्धित इति भावः लोके जगति वशं न याति न गच्छति ? सर्व एव वशं गच्छतीत्यर्थः । तथाहि मृदङ्गः अचेतनोऽपीति भावः मुख-लेपेन मुखे लेपनविशेषेण मधुरध्वनिं करोति, का कथान्येषामिति भावः । विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः । अनुष्टुव्वृत्तम् ॥ १०४ ॥

केयूरा इति । केयूराः अङ्गदाख्यालङ्कारविशेषाः न, चन्द्रो-ज्ज्वलाः चन्द्रवत् स्वच्छाः हाराः मौक्तिकस्रजः न, स्नानं न, विलेपनम् अङ्गरागः न, कुसुमं पुष्पं न, अलङ्कृताः सुसज्जिताः मूर्द्धजाः केशाः न, सुकुसुमेनालङ्कृता मूर्द्धजा इति पाठान्तरम् । विभूषयन्ति शोभयन्ति । या संस्कृता संस्कारपूता धार्य्यते ध्रियते, सा एका केवला वाणी सुसंस्कृता वागित्यर्थः कृतिनं विद्वांसं पुरुषं समलङ्करोति सम्यक् भूषयति, भूषणानि अन्यानीति शेषः सततं क्षीयन्ते क्षयं गच्छन्ति, वागेव भूषणं भूषणम् अन्यभूषणेभ्यो विलक्षणं भूषणमित्यर्थः । अत्रार्थान्तरसंक्रमितवाच्यो ध्वनिः । शार्दूलविक्रीडितं वृत्तम् ॥१०५॥

यदीति । यदि नाम कदाचित् जगत् दैवगत्या असरोजं कमल-

अवकरनिकरं विकिरति तत्किं कृकवाकुरिव हंसः ॥१०६॥
परिचरितव्याः सन्तो यद्यपि कथयन्ति न च सदुपदेशम्।
यास्तेषां स्वैरं ताः कथा एव भवन्ति शास्त्राणि ॥ १०७ ॥
कमठकुलाचलदिग्गजफणिपतिविधृतापि चलति वसुधेयम्।
प्रतिपन्नममलमनसां न टलति पुंसां युगान्तेऽपि ॥ १०८ ॥

इति श्रीभर्तृहरिविरचितं नीतिशतकं समाप्तम्।

---

रहितं जातं स्यादिति शेषः, तत् तदा हंसः कृकवाकुरिव ताम्रचूड़ इव अवकरनिकरं मलपुञ्जं विकिरति विक्षिपति किम्? नैव विकिरतीत्यर्थः। महान् कदापि दूषितं कार्य्यं न करोतीति भावः। अत्राप्रस्तुतेन हंसेन महतः प्रतीतेरप्रस्तुतप्रशंसालङ्कारः। आर्य्यावृत्तम् ॥ १०६ ॥

परिचरितव्या इति। सन्तः साधवः यद्यपि सदुपदेशं न कथयन्ति तथापि परिचरितव्याः सेव्याः। एषां सतां यास्तु स्वैरं कथाः स्वाभाविकालापाः, ता एव शास्त्राणि भवन्ति। आर्य्यावृत्तम् ॥१०७॥

कमठेति। इयं वसुधा पृथिवी कमठेन कूर्मराजेन कुलाचलैः कुलपर्वतैः महेन्द्रादिभिः, महेन्द्रो मलयः सह्यः शुक्तिमान् ऋक्षपर्वतः। विन्ध्यश्च पारिपात्रश्च सप्तैते कुलपर्वताः॥ इति पुराणम्। दिग्गजैरैरावतादिभिः फणिपतिना नागराजेन अनन्तेन विधृतापि विशेषेणावलम्बितापि चलति कम्पते। किन्तु अमलमनसां निर्मलमतीनां पुंसां प्रतिपन्नम् अङ्गीकृतं युगान्तेऽपि न टलति न विचलते। अङ्गीकृतं सुकृतिनः सर्व्वथैव पालयन्तीति भावः॥ १०८ ॥ अस्य ग्रन्थस्य नीतिशतकाख्या पञ्चाननवादिनि बोध्यम्।

इति बि, ए उपाधिधारिणा पण्डितकुलपतिना श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता नीतिशतकव्याख्या समाप्ता।

# वैराग्यशतकम्।

---

चूडोत्तंसितचारुचन्द्रकलिकाचञ्चच्छिखाभासुरो
लीलादग्धविलोलकामशलभः श्रेयोदशाग्रे स्फुरन्।
अन्तस्फूर्जदपारमोहतिमिरप्राग्भारमुच्चाटयन्
चेतःसद्मनि योगिनां विजयते ज्ञानप्रदीपो हरः॥ १॥

तृष्णादूषणम्।

बोद्धारो मत्सरग्रस्ताः प्रभवः स्मयदूषिताः।
अबोधोपहताश्चान्ये जीर्णमङ्गे सुभाषितम्॥ २॥

चूडेति। चूडायाम् उत्तंसिता भूषणीकृता चारुर्मनोहारिणी या चन्द्रकलिका चन्द्रकला तया चञ्चन्त्या स्फुरन्त्या शिखया भासुरः दीप्यमानः, लीलया अवहेलया दग्धः भस्मीकृतः काम एव शलभः क्षुद्रकीटविशेषः येन तथाभूतः, श्रेयोदशायाः मङ्गलरूपायाः दशायाः वर्त्तेः अवस्थायाश्च अग्रे स्फुरन् ज्वलन् अन्तः मानवानामन्तःकरणे इत्यर्थः स्फूर्जतः प्रसरतः अपारस्य अशेषस्य मोहरूपस्य तिमिरस्य तमसः प्राग्भारम् अतिशयम् उच्चाटयन् खण्डयन् ज्ञानप्रदीपः हरः शम्भुः योगिनां चेतःसद्मनि मनोमन्दिरे विजयते सर्वोत्कर्षेण वर्त्तते। रूपकमलङ्कारः। तदुक्तं दर्पणे। रूपकं रूपितारोपाद् विषये निरपह्नवे इति। शार्दूलविक्रीडितं वृत्तम्। सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति तल्लक्षणात्॥ १॥

बोद्धार इति। बोद्धारः बोधकुशलाः मत्सरग्रस्ताः विद्वेषपरायणाः, प्रभवः महान्तः स्मयेन गर्वेण दूषिताः अहङ्कृता इति यावत् अन्ये जनाः अबोधेन अज्ञानेन उपहताः बोद्धुमसमर्था इत्यर्थः। तस्मात् सुभाषितं ममेति शेषः अङ्गे जीर्णं विलयं गतमित्यर्थः।

न संसारोत्पन्नं विषयमनुपश्यामि कुशलं
विपाकः पुण्यानां जनयति भयं मे विमृशतः ।
महद्भिः पुण्यौघैश्चिरमपि गृहीताश्च विषया
महान्तो जायन्ते व्यसनमिव दातुं विषयिणाम् ॥ ३ ॥
भ्रान्त्वा देशमनेकदुर्गविषमं प्राप्तं न किञ्चित् फलं
त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला ।
भुक्तं मानविवर्जितं परगृहेष्वाशङ्कया काकवत्
तृष्णे ! जृम्भसि पापकर्मपिशुने ! नाद्यापि सन्तुष्यसि ॥४॥

मद्रचितमिदं बोद्धारः मत्सरेण दूषयन्ति, प्रभवः किमेतत् बाल-करचितं पश्याम इति अहङ्कारेणैव न गणयन्ति, अन्येषां बोध-शक्तिः नास्तीति ममैव अङ्गेन सह नष्टमिति निष्कर्षः । अनुष्टुब्-वृत्तम् ॥ २ ॥

नेति । संसारे उत्पन्ने जाते द्रव्ये कुशलं शुभं विषयं न पश्यामि, पुण्यानां विपाकः परिणामः विमृशतः इत्थं विचारयतः मे मम भयं जनयति । महद्भिः पुण्यौघैः पुण्यचयैः चिरं गृहीताः लब्धाः महान्तः विषया, भोग्यवस्तूनि विषयिणां भोगिनां व्यसनमिव विपदमिव, व्यसनं विपदि भ्रंशे दोषे कामजकोपजे इत्यमरः । दातुं जायन्ते । संसारे-ऽस्मिन् किमपि शुभं नास्ति, सम्पत्तिस्तु केवलं महतां विपद्धेतुरिति भावः । शिखरिणीवृत्तं, रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणीति तल्लक्षणात् ॥ ३ ॥

भ्रान्त्वेति । पापकर्मपिशुने पापकार्य्यप्रबोधिनि तृष्णे ! अनेकदुर्गविषमं विविधदुर्गदारुणं देशं भ्रान्त्वा पर्य्यटित्वा किञ्चिदपि फलं धनमिति यावत् न प्राप्तम्, उचितं जातिकुलाभिमानं त्यक्त्वा निष्फला सेवा कृता प्रभोरिति शेषः, परगृहेषु आशङ्कया भयेन काकवत् मानविवर्जितं हतमानं यथा तथा भुक्तं, तथापि त्वं जृम्भसि

उत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो
निस्तीर्णः सरिताम्पतिर्नृपतयो यत्नेन सन्तोषिताः।
मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः
प्राप्तः काणवराटकोऽपि न मया तृष्णेऽधुना मुञ्च माम्॥५॥

खलोल्लापाः सोढ़ाः कथमपि तदाराधनपरैः
निगृह्यान्तर्बाष्पं हसितमपि शून्येन मनसा।
कृतश्चित्तस्तम्भः प्रतिहतधियामञ्जलिरपि
त्वमाशे! मोघाशे! किमु परमतो नर्त्तयसि माम्॥६॥

स्फुरसि, अद्यापि इदानीमपि न मन्तुष्यसि न विरमसीत्यर्थः। शार्दूलविक्रीड़ितं वृत्तम्॥ ४॥

उत्खातमिति। हे तृष्णे! निधिशङ्कया अत्र निधिरस्तीति भ्रमेण क्षितितलं भूतलम् उत्खातं खनित्रेण विदारितमित्यर्थः, गिरेः पर्वतस्य धातवः गैरिकादयः ध्माताश्चिन्तिताः आनयनार्थं यतिता इति भावः, सरिताम्पतिः समुद्रः निस्तीर्णः, नृपतयः राजानः यत्नेन सन्तोषिताः। मन्त्रेण आराधनं देवताया इति भावः तत्र तत्परेण रतेन मनसा श्मशाने निशाः नीताः अतिवाहिताः मयेति शेषः, किन्तु मया काणवराटकोऽपि न प्राप्तः, अतः अधुना मां मुञ्च त्यज। शार्दूलविक्रीड़ितं वृत्तम्॥ ५॥

खलोल्लापा इति। तेषां खलानाम् आराधनपरैः सेवापरायणैः सद्भिः कथमपि खलानाम् उल्लापाः वाक्यानि सोढ़ाः, अन्तर्मनसि बाष्पम् अश्रुजलं निरुध्य शून्येन मनसा हसितमपि हास्यञ्च कृतमित्यर्थः, चित्तस्य मनसः स्तम्भः स्थैर्य्यं कृतः, प्रतिहता विघ्निता धीर्य्येषां तेषां मम बुद्धिप्रतिघातिनामित्यर्थः अञ्जलिरपि कृत इति शेषः। अपराधो मे जातः क्षम्यतामिति बद्धाञ्जलिना भूतमिति भावः। हे मोघाशे विफलाशे आशे तृष्णे! अतःपरम् एतादृश-

अमीषां प्राणानां तुलितविसिनीपत्रपयसां
कृते किन्नास्माभिर्विगलितविवेकैर्व्यवसितम् ।
यदाढ्यानामग्रे द्रविणमदनिःसंज्ञमनसां
कृतं वीतव्रीडैर्निजगुणकथापातकमपि ॥ ७ ॥

भोगा न भुक्ता वयमेव भुक्तास्तपो न तप्तं वयमेव तप्ताः ।
कालो न यातो वयमेव यातास्तृष्णा न जीर्णा वयमेव जीर्णाः ८

न्यक्करणात् परमपीत्यर्थः किन्तु कथं मां नर्त्तयसि ? शिखरिणीवृत्तम् ॥ ६ ॥

अमीषामिति । तुलितं समीकृतं विसनीपत्रस्य पयः जलं यैः तथाभूतानां चणस्थायिनामित्यर्थः अमीषां प्राणानां कृते निमित्तं विगलितः विनष्टः विवेको येषां तथाभूतैः अस्माभिः किं न व्यवसितम् उद्युक्तं कृतमिति यावत् सर्वमेव नीचकार्य्यं कृतमित्यर्थः । यत् यतः द्रविणमदेन धनमदेन निःसंज्ञं संज्ञारहितं निर्विवेकमित्यर्थः मनो येषां तादृशानाम् आढ्यानां धनिनाम् अग्रे समीपे वीतव्रीडैः निर्लज्जैः अस्माभिः निजगुणकथा स्वगुणकीर्त्तनमेव अहं विविधविद्यापारदर्शी नास्ति मत्समो विद्वान् कार्य्यदक्षश्चेत्यादिरूपं पातकं तत् कृतम् । शिखरिणीवृत्तम् ॥ ७ ॥

भोगा इति । भुज्यन्ते इति भोगाः विषयाः स्रक्चन्दनवनितादयः न भुक्ताः नास्वादिताः अस्माभिरिति शेषः, वयमेव भुक्ताः कालेनेति शेषः, तपः चान्द्रायणादिकं न तप्तं न चरितं, वयमेव तप्ताः सन्तापं गताः, कालः न यातः सदैव तिष्ठतीत्यर्थः, वयमेव याताः गताः जीवनान्तमिति शेषः, तृष्णा वासना न जीर्णा न चीणा समा एव तिष्ठतीत्यर्थः, वयमेव जीर्णाः जरां प्राप्ताः । उपजातिवृत्तं, स्यादिन्द्रवज्रा यदि तौ जगौ ग इति, उपेन्द्रवज्रा प्रथमे लघौ सेति, अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता इति तल्लक्षणात् ॥ ८ ॥

बलिभिर्मुखमाक्रान्तं पलितैरङ्कितं शिरः ।
गात्राणि शिथिलायन्ते तृष्णैका तरुणायते ॥ ९ ॥
निवृत्ता भोगेच्छा पुरुषबहुमानोऽपि गलितः
समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः ।
शनैर्यष्ट्युत्थानं घनतिमिररुद्धे च नयने
अहो दुष्टः कायस्तदपि मरणोपायचकितः ॥ १० ॥
आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला
रागग्राहवती वितर्कविहगा धर्मद्रुमध्वंसिनी ।

बलिभिरिति । बलिभिः मांससङ्कोचजनितरेखाभिः मुखम् आक्रान्तं व्याप्तं, पलितैः जराजनितशौक्ल्यैः शिरः अङ्कितं चिह्नितं कलङ्कितमित्यर्थः, गात्राणि शिथिलायन्ते शिथिलानीवाचरन्ति, एका केवला तृष्णा तरुणायते युववदाचरति तृष्णैव मे प्रबला वर्त्तते इत्यर्थः । उपमालङ्कारः । अनुष्टुब्वृत्तम् ॥ ९ ॥

निवृत्तेति । भोगेच्छा विषयभोगवासना निवृत्ता विनष्टा, पुरुषेषु बहुमानोऽपि गलितः नष्टः इदानीं पुरुषं मां न कोऽपि गणयतीति भावः । जीवितसमाः प्राणतुल्याः समानाः समवयस इत्यर्थः सुहृदः बन्धवः सपदि झटिति स्वर्याताः मृता इति यावत्, शनैः मन्दं मन्दं यष्ट्या दण्डावलम्बनेनेति भावः उत्थानं स्वतो नास्तीति भावः, नयने घनैः सान्द्रैः दुरपनेयैरिति भावः तिमिरैः अन्धकारैः रुद्धे आवृते अन्धोऽस्मीति भावः । अहो आश्चर्यं दुष्टः कायः देहः तदपि तथापि एवमवस्थायामपीत्यर्थः मरणोपायात् मृत्युसाधनात् रोगादेरिति भावः चकितः शङ्कितः ? इदानीमपि जीवितुमिच्छामि इति भावः । शिखरिणीवृत्तम् ॥ १० ॥

आशेति । मनोरथः अभिलाष एव जलं यस्याः तथोक्ता, तृष्णा

मोहावर्त्तसुदुस्तरातिगहना प्रोत्तुङ्गचिन्तातटी
तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः॥ ११॥

विषयपरित्यागविडम्बना ।

अवश्यं यातारश्चिरतरमुषित्वापि विषया
वियोगे को भेदस्त्यजति न जनो यत् स्वयममून् ।
व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः
स्वयन्त्यक्तास्त्वेते शमसुखमनन्तं विदधति ॥ १२ ॥

एव तरङ्गाः तैः आकुला व्याकीर्णा; रागः विषयानुराग एव ग्राहः जलजन्तुविशेषः, तद्वती वितर्काः विविधतर्का एव विहगाः हंसबकादि-जलचरपक्षिणः यस्यां तादृशी, धर्म एव द्रुमः वृक्षः तस्य ध्वंसिनी उत्पाटिनी, मोहः अज्ञानमेव आवर्त्तः भ्रमिविशेषः तेन सुदुस्तरा तर्त्तुमशक्या, अतिगहना अतिगभीरा, प्रोत्तुङ्गा अत्युन्नता चिन्ता एव तटी यस्याः तथाभूता आशा नाम नदी अस्तीति शेषः, तस्याः आशा-नद्याः पारगताः विशुद्धमनसः पूतचित्ताः योगीश्वराः श्रेष्ठा योगिनः नन्दन्ति सुखेन कालं नयन्तीत्यर्थः। रूपकमलङ्कारः। शार्दूलविक्री-ड़ितं वृत्तम् ॥ ११ ॥

अवश्यमिति। विषयाः भोग्यवस्तूनि स्रक्चन्दनवनितादयः चिरतरं दीर्घकालम् उषित्वापि स्थित्वापि अवश्यं यातारः विनशि-ष्यन्तीत्यर्थः। वियोगे विच्छेदे भेदः विशेषः कः ? न कोऽपीत्यर्थः, यत् जनः स्वयम् अमून् विषयान् न त्यजन्ति विषयाणां स्वतो गमनात् वियोगः स्वयं परित्यागे च वियोगः ततश्च वियोगदुःखमनुभ-वतः समानमिति भावः। किन्तु स्वातन्त्र्यात् स्वत इत्यर्थः व्रजन्तः गच्छन्तः विनश्यन्त इति यावत् मनसः चित्तस्य अतुलपरितापाय अतीवसन्तापाय भवन्तीति शेषः। स्वयं निजेच्छया त्यक्ता, एते अनन्तं शमसुखं शान्तिजनितमानन्दं विदधति जनयन्तीत्यर्थः। तस्मात् विषयाः सर्वथा परित्यक्तव्या इति भावः। शिखरिणीवृत्तम् ॥१२॥

ब्रह्मज्ञानविवेकनिर्मलधियः कुर्वन्त्यहो दुष्करं
यन्मुञ्चन्त्युपभोगभाञ्ज्यपि धनान्येकान्ततो निःस्पृहाः ।
न प्राप्तानि पुरा न सम्प्रति न च प्राप्तौ दृढप्रत्यया
वाञ्छामात्रपरिग्रहाण्यपि परित्यक्तुं न शक्ता वयम् ॥१३॥
धन्यानां गिरिकन्दरेषु वसतां ज्योतिः परं ध्यायताम्
आनन्दाश्रुकणान् पिबन्ति शकुना निःशङ्कमङ्केशयाः ।
अस्माकन्तु मनोरथोपरचितप्रासादवापीतट-
क्रीड़ाकाननकेलिकौतुकजुषामायुः परं क्षीयते ॥ १४ ॥

ब्रह्मेति । ब्रह्मज्ञानेन यो विवेकः वैराग्यं तेन निर्मला धीर्येषां तथोक्ताः अतएव एकान्ततः नितरां निःस्पृहाः सन्तः उपभोगभाञ्जि उपभोग्यानि धनान्यपि यत् मुञ्चन्ति त्यजन्ति तदहो आश्चर्यं दुष्करम् अन्यैः कर्त्तुमशक्यं कुर्वन्ति । अस्माभिस्तु पुरा पूर्वं न प्राप्तानि, सम्प्रति इदानीं वर्त्तमाने इति भावः न प्राप्यन्ते इति शेषः प्राप्तौ च भाविन्यामिति शेषः न च दृढ़प्रत्ययाः सम्पूर्णविश्वासाः सन्तीति शेषः । वाञ्छामात्रेण आशामात्रेण परिग्रहो येषां तानि अपि धनानीति शेषः परित्यक्तुं वयं न शक्ताः न समर्थाः । शार्दूलविक्रीड़ितं वृत्तम् ॥ १२ ॥

धन्यानामिति । शकुनाः पक्षिणः धन्यानां पुण्यवतां गिरिकन्दरेषु पर्वतगुहासु वसतां परं ज्योतिः परमात्मानमित्यर्थः ध्यायतां योगिनामिति शेषः अङ्कशयाः क्रोड़वर्त्तिनः सन्तः निःशङ्कं यथा तथा आनन्दाश्रुकणान् पिबन्ति । अस्माकन्तु मनोरथेन उपरचितानि कल्पितानि प्रासादाः राजभवनानि वापीतटानि क्रीड़ाकाननानि उद्यानानि तेषु केलिकौतुकं क्रीड़ानन्दं जुषन्ति सेवन्ते इति तथोक्तानां सतां परं केवलम् आयुः क्षीयते क्षयं गच्छति । शार्दूल-विक्रीड़ितं वृत्तम् ॥ १४ ॥

स्तनौ मांसग्रन्थी कनककलशावित्युपमितौ
मुखं श्लेष्मागारं तदपि च शशाङ्केन तुलितम् ।
स्रवन्मूत्रक्लिन्नं करिवरकरस्पर्द्धि जघनं
मुहुर्निन्द्यं रूपं कविवरविशेषैर्गुरु कृतम् ॥ १५ ॥

भिक्षाशनं तदपि नीरसमेकवारं
शय्या च भूः परिजनो निजदेहमात्रम् ।
वस्त्रं च जीर्णशतखण्डमलीनकन्था
हाहा ! तथापि विषयान्न परित्यजन्ति ॥ १६ ॥

स्तनाविति । मांसग्रन्थी मांसपिण्डौ स्तनौ कनककलशौ इति उपमितौ तुलितौ, मुखं श्लेष्मागारं श्लेष्मपूर्णमिति यावत् तदपि शशाङ्केन चन्द्रेण तुलितं समीकृतम् । स्रवता क्षरता मूत्रेण क्लिन्नं क्लेदयुक्तं जघनं कटिपुरोभागः करिवरस्य गजेन्द्रस्य करस्पर्द्धि शुण्डादण्डनिभम् इत्थं मुहुः पुनः पुनः निन्द्यं कुत्सनीयं रूपं कविवरविशेषैः श्रेष्ठकविभिः गुरु महत् कृतम् । शिखरिणीवृत्तम् ॥ १५ ॥

भिक्षाशनमिति । भिक्षया अशनं भोजनं तदपि अशनं नीरसं विस्वादम् अनुत्तमत्वादिति भावः, एकवारञ्च न तु पुनरिच्छया प्राप्यते स्वल्पत्वादिति भावः । भूः पृथिवी शय्या पातनीयखट्टादेरभावादिति भावः । परिजनः परिवारः निजदेहमात्रं न तु पुत्रकलत्रादिकमिति भावः । जीर्णा शतखण्डा यत्र तत् एवंभूतं वस्त्रं तथा मलीना छिन्ना कन्था, वा जीर्णा अतएव शतखण्डा, मलीना कृष्णवर्णा कन्थैव वस्त्रम् । हा हा खेदे तथापि विषयान् भोगान् आशास्थान् न तु स्थितानिति भावः न परित्यजन्ति जना इति शेषः । वसन्ततिलकं वृत्तम् । अत्र त्यागहेतौ सत्यपि न त्यागः । भोगहेतुं विनापि भोगाभिलाषश्चेति विभावनाविशेषोक्त्योः सङ्करः । तदुक्तं दर्पणे । सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधेति, विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते इति च ॥ १६ ॥

अजानन्माहात्म्यं पतति शलभस्तीव्रदहने
स मीनोऽप्यज्ञानाद्बडिशयुतमश्नाति पिशितम् ।
विजानन्तो ह्येते वयमिह विपज्जालजटिलान्
न मुञ्चामः कामानहह गहनो मोहमहिमा ॥ ८० ॥

तुङ्गं वेश्म सुताः सतामभिमताः संख्यातिगाः सम्पदः
कल्याणी दयिता वयश्च नवमित्यज्ञानमूढो जनः ।
मत्वा विश्वमनश्वरं निविशते संसारकारागृहे
संदृश्य क्षणभङ्गुरं तदखिलं धन्यस्तु सन्न्यस्यति ॥ ८१ ॥

अजानन्निति । शलभः पतङ्गः माहात्म्यं दाहकतामिति भावः तीव्रदहनस्येति शेषः अजानन् तीव्रदहने ज्वलदनले पतति, स मीनोऽपि मत्स्योऽपि अज्ञानात् बडिशयुतं पिशितम् आमिषम् अश्नाति भुङ्क्ते । किन्तु एते वयम् इह संसारे विपज्जालेन जटिलान् युतान् काम्यन्ते इति कामान् विषयान् विजानन्तः विशेषेण जानन्तः अपि न मुञ्चामः न त्यजामः, अहह आश्चर्यं मोहस्य महिमा माहात्म्यं गहनः निविडः दुर्बोध इति यावत् । अत्र त्यागकारणज्ञानेऽपि न त्याग इति विशेषोक्तिः काव्यार्थहेतुकं काव्यलिङ्गञ्चेत्यनयोः संसृष्टिः । तदुक्तं दर्पणे । मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते इति । शिखरिणी वृत्तम् ॥ ८० ॥

तुङ्गमिति । तुङ्गम् उन्नतं वेश्म गृहं, सुताः पुत्राः, सतां साधूनाम् अभिमताः प्रिया इति भावः सम्पदः धनानि संख्यातिगाः असंख्या बह्व्य इति यावत्, दयिता कान्ता कल्याणी शुभङ्करी, वयश्च नवं यौवनमिति अज्ञानेन मूढो निर्विवेको जनः विश्वं जगत् अनश्वरं स्थिरं मत्वा बुद्ध्वा संसारकारागृहे निविशते समासजति । धन्यस्तु पुण्यवांस्तु तत् अखिलं गृहादिकं क्षणभङ्गुरं संदृश्य सन्न्यस्यति प्रव्रजति । शार्दूलविक्रीडितं वृत्तम् ॥ ८१ ॥

याञ्चादैन्यदूषणम्।

दीनादीनमुखैः स्वकीयशिशुकैराकृष्टजीर्णाम्बरां
क्रोशद्भिः क्षुधितैर्निरन्नजठरां पश्येन्न चेद्गेहिनीम्।
याञ्चाभङ्गभयेन गद्गदगलोद्गच्छद्विलीनाक्षरं
को देहीति वदेत् स्वदग्धजठरस्यार्थे मनस्वी पुमान्॥१९॥
अभिमतमहामानग्रन्थिप्रभेदपटीयसी
गुरुतरगुणग्रामाम्भोजस्फुटोज्ज्वलचन्द्रिका।
विपुलविलसल्लज्जावल्लीविदारकुठारिका
जठरपिठरी दुष्पूरेयं करोति विडम्बनाम्॥२०॥

दीनेति। दीनादीनमुखैः विषण्णमुखैः अविषण्णमुखैश्च क्रोशद्भिः चीत्कुर्वद्भिः क्षुधितैः स्वकीयशिशुकैः स्वकीयबालकैः आकृष्टं जीर्णम् अम्बरं वसनं यस्याः तथाभूता निरन्नजठराम् अन्नशून्योदरां गेहिनीं चेत् यदि न पश्येत् तदा कः मनस्वी पुमान् याच्ञाभङ्गभयेन गद्गदं यथा तथा गलात् कण्ठात् उद्गच्छत् उच्चरत् विलीनं विशीर्णम् अक्षरं यस्मिन् तत् यथा तथा स्वदग्धजठरस्य अर्थे निमित्तं देहीति वदेत् न कोऽपीत्यर्थः। केवलं तादृशपुत्रकलत्रभरणार्थमेव जना भिक्षया जीवन्ति न तु स्वदेहपोषणार्थमिति निष्कर्षः। शार्दूलविक्रीडितं वृत्तम्॥१९॥

अभिमतेति। अभिमतः अभीष्टः यः महामानः महान् सम्भ्रमः तस्य ग्रन्थेः प्रभेदे प्रकर्षेण भेदे विध्वंसने इति यावत् पटीयसी अतिनिपुणा, गुरुतराः अतिमहान्तः ये गुणग्रामाः गुणराशयः ते एव अम्भोजानि पद्मानि तेषु स्फुटा स्पष्टा मेघादिभिरनावृता इति भावः अतएव उज्ज्वला चन्द्रिका ज्योत्स्ना चन्द्रिकायां पद्मानि सङ्कुचन्तीति प्रसिद्धिः। विपुला महती विलसन्ती या लज्जावल्ली तस्याः विदारे छेदने कुठारिका अस्त्रविशेषः इयं दुष्पूरा केनापि

पुण्यग्रामे वने वा महति सितपटच्छेदपालीं कपाली-
मादाय न्यायगर्भद्विजहुतहुतभुग्धूमधूम्रोपकण्ठम्।
द्वारं द्वारं प्रविष्टो वरमुदरदरीपूरणाय क्षुधार्तो
मानी प्राणी धनार्थी न पुनरनुदिनं तुल्यकुल्येषु दीनः॥२१॥

गङ्गातरङ्गकणशीकरशीतलानि
विद्याधराध्युषितचारुशिलातलानि।

पूरयितुमशक्येति यावत् जठरपिठरी उदरस्थाली विडम्बनां वञ्चनां करोति। माननाशिन्या गुणविरोधिन्या लज्जाध्वंसिन्या जठरस्थाल्या कृते लोकः केवलं विप्रलभ्यते इति निष्कर्षः। हरिणीवृत्तम्। नसमरसला गः षड्वेदैर्हयैर्हरिणी मतेति तल्लक्षणात्॥ २० ॥

पुण्यग्रामे इति। मानी प्राणी जीवः क्षुधार्त्तः क्षुत्पीड़ितः सन् उदरदरी जठरगुहा तस्याः पूरणाय महति पुण्यग्रामे पवित्रे नगरे वने वा सितपटच्छेदस्य शुभ्रवसनखण्डस्य पालीं प्रान्तम् अञ्चलमिति यावत् कपालीं कर्परं भिक्षापात्रविशेषमिति यावत् वा आदाय न्यायगर्भाः न्यायपथवर्त्तिनः सदाचारपरायणा इति यावत् ये द्विजाः ब्राह्मणाः तैः हुतः हव्येन अर्चितः यो हुतभुक् अग्निः तस्य धूमेन धूम्रं श्यामलम् उपकण्ठं, सान्निध्यं यस्य तादृशं द्वारं द्वारं प्रविष्टः वरं मनाक्प्रियः, धनार्थी धनयाच्ञार्थी तुल्यकुल्येषु समकक्षेषु जनेष्विति शेषः ज्ञातिष्विति भावः अनुदिनं प्रत्यहं दीनः कातरः याच्ञयेति भावः न पुनः वरमिति शेषः। स्रग्धरावृत्तम्। म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति तल्लक्षणात्॥ २१ ॥

गङ्गेति। गङ्गायाः तरङ्गकणानाम् ऊर्मिनिवहानां शीकरैः लवकणैः, शीकरोऽम्बुकणः स्मृत इत्यमरः। शीतलानि तापहराणीति

स्थानानि किं हिमवतः प्रलयं गतानि ?
यत्सावमानपरपिण्डरता मनुष्याः ॥ २२ ॥

किं कन्दाः कन्दरेभ्यः प्रलयमुपगता ? निर्झरा वा गिरिभ्यः ?
प्रध्वस्ताः किं महीजाः सरसफलभृतो वल्कलिन्यश्च शाखाः ? ।
वीक्ष्यन्ते किं मुखानि प्रसभमुपगतप्रश्रयाणां खलानां ?
दुःखोपात्ताल्पवित्तस्मयपवनवशान्नर्त्तितभ्रूलतानि ॥२३॥

भावः, विद्याधरैः देवयोनिविशेषैः अध्युषितानि अधिष्ठितानि चारूणि मनोहराणि शिलातलानि येषां तानि, हिमवतः हिमाद्रेः स्थानानि प्रदेशाः प्रलयं विध्वंसं गतानि किम् ? न सन्ति किमित्यर्थः, यत् यतः मनुष्याः सावमाने अवज्ञादत्ते इत्यर्थः परपिण्डे रताः भवन्तीति शेषः । यदि तादृशं हृदयविनोदनं स्थानं न स्यात् तदा तादृशः क्लेशः सह्यते, सति तादृशे स्थाने कथं मनुष्यैरीदृक् निकारः सह्यते इति भावः । वसन्ततिलकं वृत्तम् । उक्तं वसन्ततिलकं तभजा जगौ ग इति तल्लक्षणात् ॥ २२ ॥

किमिति । कन्दरेभ्यः पर्वतगुहाभ्यः कन्दाः मूलविशेषाः वा गिरिभ्यः पर्वतेभ्यः निर्झराः किं प्रलयं प्रध्वंसम् उपगताः ? पर्वतगुहासु पर्वतेषु भक्षणीयमूलविशेषपानीयनिर्झरवारिणोरभावः किं जात इति भावः । सरसानि स्वादूनि फलानि बिभ्रतीति तथोक्ताः महीजाः वृक्षाः वल्कलिन्यः शाखाश्च याभिर्वसनाच्छादनानि सम्पद्यन्ते इति भावः किं प्रध्वस्ताः प्रक्षीणाः, न सन्ति किमित्यर्थः ? नन्वेवेत्यर्थः । तर्हि प्रसभं सहसा उपगतः उपस्थितः प्रश्रयः स्पर्द्धा येषाम् अतिशयेन स्पर्द्धावतामित्यर्थः खलानां दुर्जनानां दुःखेन उपात्तम् उपार्जितम् यत् अल्पं यत्किञ्चिदित्यर्थः वित्तं धनं तेन यः स्मयः गर्व एव पवनः वायुः तद्वशात् नर्त्तिता कम्पिता भ्रूलता येषु तादृशानि मुखानि किं वीक्ष्यन्ते ? भिक्षार्थं तादृशजना कथम् उपास्यन्ते इति भावः । स्रग्धरावृत्तम् ॥ २३ ॥

पुण्यैर्मूलफलैः प्रियैश्च सलिलैर्वृत्तिं कुरुष्वाधुना
भूशय्यां नवपल्लवैर्वितनुतामुत्तिष्ठ यामो वनम्।
क्षुद्राणामविवेकमूढमनसां तत्रेश्वराणां सदा
वित्तव्याधिविकारविह्वलगिरां नामापि न श्रूयते॥ २४॥

फलं स्वेच्छालभ्यं प्रतिवनमखेदं क्षितिरुहां
पयः स्थाने स्थाने शिशिरमधुरं पुण्यसरिताम्।
मृदुस्पर्शा शय्या सुललितलतापल्लवमयी
सहन्ते सन्तापं तदपि धनिनां द्वारि कृपणाः॥ २५॥

पुण्यैरिति। अधुना पुण्यैः पवित्रैः मूलफलैः प्रियैः सुरसैरित्यर्थः सलिलैर्निर्झरवारिभिरिति यावत् वृत्तिं जीवनयात्रां कुरुष्व, नवपल्लवैः भुवि शय्या वितनुता भवानिति शेषः, उत्तिष्ठ, वनं यामः गच्छामः। तत्र वने अविवेकेन मूढं मनो येषां तादृशानां वित्तव्याधिना धनरोगेण यो विकारः तेन विह्वला विकृता गिरो वाचः येषां तथाभूतानां क्षुद्राणां नीचाशयानाम् ईश्वराणां धनिनां नामापि न श्रूयते। शार्दूलविक्रीडितं वृत्तम्॥ २४॥

फलमिति। प्रतिवनं वने वने क्षितिरुहां वृक्षाणां फलम् अखेदं विना आयासमित्यर्थः स्वेच्छया लभ्यं प्राप्यम्। स्थाने स्थाने पुण्यसरितां पवित्रनदीनां शिशिरमधुरं शीतलसुरसं पयः जलं स्वेच्छालभ्यमित्यनेनान्वयः। सुललितलतायाः पल्लवमयी अतएव मृदुः कोमलः स्पर्शो यस्याः तथाभूता शय्या स्वेच्छालभ्येति लिङ्गव्यत्ययेनान्वयः। तदपि तथापि कृपणाः दीना जनाः धनिनां द्वारि सन्तापं याच्ञादुःखं सहन्ते? अत्र सन्तापहेतोरभावेऽपि हेतौ तद्भावः, सति सन्तापकारणेऽपि तत्परित्यागाभावरूपकार्य्योत्पत्तिरिति च विशेषोक्तिविभावनयोः सङ्करः। शिखरिणीवृत्तम्॥२५॥

ये वर्द्धन्ते धनपतिपुरः प्रार्थनादुःखभाजो
ये चाल्पत्वं दधति विषयाक्षेपपर्य्यस्तबुद्धेः ।
तेषामन्तःस्फुरितहसितं वासराणां स्मरेयं
ध्यानच्छेदे शिखरिकुहरग्रावशय्यानिषण्णः ॥ २६ ॥
भिक्षाहारमदैन्यमप्रतिहतं भीतिच्छिदं सर्वदा
दुर्मात्सर्य्यमदाभिमानमथनं दुःखौघविध्वंसनम् ।
सर्वत्रान्वहमप्रयत्नसुलभं साधुप्रियं पावनं
शम्भोः सत्रमवार्य्यमक्षयनिधिं शंसन्ति योगीश्वराः ॥ २७ ॥

ये इति । ये वासराः धनपतीनां धनिनां पुरः अग्रतः प्रार्थनादुःखं याच्ञादुःखं भजन्ते इति तथोक्ताः सन्तः वर्द्धन्ते वृद्धिं गच्छन्ति, ये च वासराः विषयाणाम् आक्षेपेण आकर्षणेन पर्य्यस्ता विक्षिप्ता बुद्धिर्यस्य तादृशस्य जनस्य अल्पत्वं दधति च शीघ्रं गच्छन्तीति भावः, अहं ध्यानच्छेदे ईश्वरध्यानविरामे सति शिखरिणः पर्वतस्य कुहरे गुहायां ग्रावशय्यायां शिलाशयने निषण्णः सन् तेषां वासराणां दिवसानाम् अन्तः स्फुरितं हसितं यत्र तत् यथा तथा स्मरेयं दैन्यकष्टेन दिनं दीर्घमिव, विषयभोगेन च स्वल्पमिव प्रतीयते इति स्मरामीति निष्कर्षः। मन्दाक्रान्तावृत्तम् । मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्ममिति तल्लक्षणात् ॥ २६ ॥

भिक्षेति । योगीश्वराः योगिप्रवराः भिक्षया आहारो यत्र तथोक्तम् अदैन्यं दीनतारहितम् अप्रतिहतं निर्विघ्नं भीतिच्छिदं संसारभयहरं दुर्मात्सर्य्यस्य मदस्य अभिमानस्य च मथनं नाशनं दुःखौघानां तापसमूहानां विध्वंसनं सर्वत्र सर्वस्मिन् प्रदेशे अन्वहं प्रतिदिनम् अप्रयत्नेन अनायासेन सुलभं सुप्रापं सुसाध्यमित्यर्थः साधूनां प्रियं प्रीतिकरं पावनम् आत्मशुद्धिजनकम् अवार्य्यम् अनिवारणीयं केनापीति शेषः शम्भोः सत्रं यज्ञं शिवार्चनमिति यावत्

भोगे रोगभयं कुले च्युतिभयं वित्ते नृपालाद्भयं
माने दैन्यभयं बले रिपुभयं रूपे तरुण्या भयम्।
शास्त्रे वादिभयं गुणे खलभयं काये कृतान्ताद्भयं
सर्वं वस्तु भयान्वितं भुवि नृणां वैराग्यमेवाभयम्॥ २८॥
आक्रान्तं मरणेन जन्म जरसा यात्युत्तमं यौवनं
सन्तोषो धनलिप्सया शमसुखं प्रौढाङ्गनाविभ्रमैः।

कृत्यर्थिनिधिं नश्वरांश्चितं धनं सर्वदा शंसन्ति कथयन्ति। शार्दूलवि-क्रीडितं वृत्तम्॥ २७॥

भोगे इति। भोगे विषयाणामिति शेषः रोगभयं समधिक-विषयसम्भोगात् रोगोत्पत्तिरिति भावः। कुले च्युतिभयं ध्वंस-भयं कुक्रियादिनेति भावः। वित्ते धने नृपालात् राज्ञः भयं वित्तलोभेन राजोपद्रवसम्भवादिति भावः। माने सम्भ्रमे दैन्यात् दारिद्र्यात् भयं दरिद्रतायां तस्य क्षयः स्यादिति भावः। बले शौर्ये रिपोः शत्रोः भयं बलिनं प्रति शत्रोर्विद्वेषः स्यादिति भावः। रूपे सौन्दर्ये तरुण्याः युवत्याः भयं युवत्यः रूपवन्तमाकर्षन्तीति भावः। शास्त्रे शास्त्रज्ञाने वादिनः प्रतिपक्षात् भयं पराजयशङ्कयेति भावः। गुणे दयादाक्षिण्यादौ खलात् दुर्जनात् भयं दुर्जना गुणिनं विद्विष-न्तीति भावः। काये शरीरे कृतान्तात् यमात् भयं मृत्युभयमिति यावत् कदा कृतान्तो मां नेष्यतीति धियेति भावः। अतः सर्वं वस्तु भयान्वितं सभयं, भुवि पृथिव्यां नृणां मानवानां वैराग्यमेव संसारेषु वीतस्पृहत्वमेव अभयम्। काव्यलिङ्गमलङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥ २८॥

आक्रान्तमिति। जन्म मरणेन आक्रान्तं कवलितं जातस्य च ध्रुवो मृत्युरिति भगवद्गीता। उत्तमं यौवनं जरसा वार्द्धकेन याति क्षीयते। धनलिप्सया धनलोभेन सन्तोषः, प्रौढानां प्रगल्-

लोकैर्मत्सरिभिर्गुणा वनभुवो व्यालैर्नृपा दुर्जनैः
अस्थैर्येण विभूतयोऽप्युपहता ग्रस्तं न किञ्चिन वा ॥२९॥
आधिव्याधिशतैर्जनस्य विविधैरारोग्यमुन्मूल्यते
लक्ष्मीर्यत्र पतन्ति तत्र विवृतद्वारा इव ह्यापदः।
आयुर्यातमवश्यमाशु विवशं मृत्युः करोत्यात्मसात्
तत् किं केन निरङ्कुशेन विधिना यन्निर्मितं सुस्थिरम्? ॥३०॥
भोगास्तुङ्गतरङ्गतुल्यचपलाः प्राणाः क्षणध्वंसिनः
स्तोकान्येव दिनानि यौवनसुखं स्फूर्त्तिः क्रियासु स्थिता।

भानाम् अङ्गनानां नारीणां विभ्रमैः विलासैः शमसुखं यातीत्यनेनान्वयः। मत्सरिभिः विद्वेषकैः लोकैः गुणाः, व्यालैः हिंस्रजन्तुभिः श्वापदादिभिः वनभुवः काननभूमयः, दुर्जनैः नृपाः राजानः, अस्थैर्येण अव्यवस्थित्या विभूतयः सम्पदः अपि उपहृताः क्षयं नीताः, अतः केन वस्तुना किं वस्तु न ग्रस्तं न कवलितम्? सर्वमेव जगति विघ्नैर्दूष्यते इति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ २९ ॥

आधीति। जनस्य लोकस्य विविधैर्नानाप्रकारैः आधीनां मनस्तापानां व्याधीनां रोगाणाञ्च शतैः आरोग्यं स्वास्थ्यम् उन्मूल्यते विनश्यते। यत्र लक्ष्मीः विद्यते इति शेषः तत्र आपदः विवृतद्वारा इव प्रकटितद्वारा इव पतन्ति हि पतन्त्येव। आयुः जीवनकालः अवश्यं यातं गतं, मृत्युरन्तकः विवशम् आधिव्याधिविह्वलमिति यावत् आत्मसात् करोति ग्रसति। तस्मात् तेन निरङ्कुशेन निर्बाधेन विधिना यत् निर्मितं सृष्टं तत् वस्तु किं सुस्थिरं सुखेन तिष्ठति? नैवेत्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ ३० ॥

भोगा इति। भुज्यन्ते इति भोगाः विषयाः तुङ्गैरुन्नतैस्तरङ्गैस्तुल्याः चपलाश्चञ्चला अस्थायिन इत्यर्थः, तुङ्गतरङ्गेति पाठान्तरम्। प्राणाः क्षणध्वंसिनः क्षणविनश्वराः, स्तोकान्येव अल्पानि, व्याप्त्यै

तत्संसारमसारमेव निखिलं बुद्ध्वा बुधा ! बोधका !
लोकानुग्रहपेशलेन मनसा यत्नः समाधीयताम् ॥ ३१ ॥

भोगा मेघवितानमध्यविलसत्सौदामिनीचञ्चला
आयुर्वायुविघट्टिताभ्रपटलीलीनाम्बुवद्भङ्गुरम् ।
लीला यौवनलालसास्तनुभृतामित्याकलय्य द्रुतं
योगे धैर्यसमाधिसिद्धिसुलभे बुद्धिं विदध्वं बुधाः ! ॥ ३२ ॥

आयुः कल्लोललोलं कतिपयदिवसस्थायिनी यौवनश्रीः
अर्थाः सङ्कल्पकल्पा घनसमयतडिद्विभ्रमा भोगपूगाः ।

द्वितीया । यौवनसुखं तथा क्रियासु भोग्यवस्तुविषयविषयोत्थिति भावः स्फूर्त्तिः उत्साहः स्थिता तिष्ठतीत्यर्थः । हे बोधकाः ! बुद्धिमन्तः बुधाः ! तत् तस्मात् निखिलं संसारम् असारमेव बुद्ध्वा लोकानां प्राणिनाम् अनुग्रहे अनुकम्पायां पेशलेन कोमलेन मनसा यत्नः प्रयासः संसारेषु चेष्टितमिति भावः समाधीयतां क्रियतामित्यर्थः । वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते इति दर्पणः । शार्दूलविक्रीडितं वृत्तम् ॥ ३१ ॥

भोगा इति । तनुभृतां देहिनां भोगाः विषयाः मेघवितानानां जलदवृन्दानां मध्ये विलसन्ती या सौदामिनी विद्युत् तद्वत् चञ्चलाः अस्थिराः, आयुः जीवनकालः वायुविघट्टितेन पवनचालितेन अभ्रपटलेन मेघवृन्देन उच्छिन्नं वृष्टमिति यावत् यत् अम्बु जलं तद्वत् भङ्गुरं क्षणिकमित्यर्थः । यौवनलालसाः तारुण्यकामाः लोलाश्चञ्चलाः हे बुधाः विद्वांसः ! इति आकलय्य विचार्य धैर्यसमाधिना धैर्यावलम्बनेन या सिद्धिः तया सुलभे सुप्रापे योगे बुद्धिं मतिं द्रुतं शीघ्रं विदध्वं कुरुत । काव्यलिङ्गमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ३२ ॥

आयुरिति । आयुर्जीवनं कल्लोललोलं तरङ्गचपलं, यौवनश्रीः

कण्ठाश्लेषोपगूढं तदपि च न चिरं यत् प्रियाभिः प्रणीतं
ब्रह्मण्यासक्तचित्ता भवत भवभयाम्भोधिपारं तरन्तः ॥२३॥
कृच्छ्रेणामेध्यमध्ये नियमिततनुभिः स्थीयते गर्भवासे
कान्ताविश्लेषदुःखव्यतिकरविषमे यौवने चोपभोगः ।
वामाक्षीणामवज्ञाविहसितवसतिर्वृद्धभावोऽप्यसाधुः
संसारे रे मनुष्या वदत यदि सुखं स्वल्पमप्यस्ति किञ्चित् ॥२४॥

कतिपयदिवसस्थायिनो, अर्थाः धनानि सङ्कल्पमात्राः मनोरथभूता इत्यर्थः न वास्तवा इति भावः, भोगपूगाः भोग्यवस्तूनि घनसमये मेघागमे या तडित् विद्युत् तस्या इव विभ्रमः स्फुरणं येषां तथाभूताः अतीव चञ्चला इति यावत्, प्रियाभिः कान्ताभिः प्रणीतं कृतं यत् कण्ठाश्लेषेण उपगूढम् आलिङ्गनं तदपि अतिसुखकरमपीति भावः न चिरं न दीर्घकालस्थायीत्यर्थः स्वल्पं क्षणं तत्सुखमिति भावः । तस्मात् भवभयाम्भोधिपारं संसारभीतिरूपसमुद्रपारं तरन्तः गच्छन्तः सन्तः ब्रह्मणि परमात्मनि आसक्तचित्ताः समाहितमनसः भवत यूयमिति शेषः । काव्यलिङ्गमलङ्कारः । स्रग्धरावृत्तम् ॥२३॥

कृच्छ्रेणेति । अमेध्यम् अपवित्रं मूत्रपुरीषादि मध्ये यस्य तादृशे गर्भवासे मातुः कुक्षिरूपवासस्थाने नियमिततनुभिः सङ्कुचितशरीरैः सङ्कीर्णत्वादिति भावः कृच्छ्रेण अतिक्लेशेन स्थीयते प्राणिभिरिति शेषः । कान्तायाः प्रियायाः विश्लेषेण विच्छेदेन यो दुःखव्यतिकरः सन्तापनिचयः तेन विषमे दारुणे यौवने च उपभोगः । वामाक्षीणां वामनयनानाम् अवज्ञया अयमस्माकमित्युपहासेन यत् विहसितं विशिष्टो हासः तस्य वसतिः आश्रयः वृद्धभावोऽपि असाधुः अरमणीयः । अतः रे मनुष्याः ! संसारे यदि स्वल्पमपि किञ्चित् सुखम् अस्ति, तत् वदत कथयत । स्रग्धरावृत्तम् । काव्यलिङ्गमलङ्कारः ॥२४॥

व्याघ्रीव तिष्ठति जरा परितर्जयन्ती
रोगाश्च शत्रव इव प्रहरन्ति देहे ।
आयुः परिस्रवति भिन्नघटादिवाम्भो
लोकस्तथाप्यहितमाचरतीति चित्रम् ॥ ३५ ॥

भोगा भङ्गुरवृत्तयो बहुविधास्तैरेव चायं भवः
तत्कस्येह कृते परिभ्रमत हे लोकाः ! कृतं चेष्टितम् ।
आशापाशशतोपशान्तिविशदं चेतः समाधीयतां
काम्योत्पत्तिवशे स्वधामनि यदि श्रद्धेयमस्मद्वचः ॥३६॥

ब्रह्मेन्द्रादिमरुद्गणांस्तृणगणान् यत्र स्थितो मन्यते

व्याघ्रीति । जरा वार्द्धकं व्याघ्रीव परितर्जयन्ती भीषयन्ती तिष्ठति देहे इति शेषः, रोगाश्च शत्रव इव देहे प्रहरन्ति ताड़यन्ति, भिन्नघटात् छिद्रितकलशात् अम्भ इव आयुः परिस्रवति सततं क्षरति, तथापि लोकः अहितम् आचरतीति चित्रम् आश्चर्यम् । उपमालङ्कारः । वसन्ततिलकं वृत्तम् ॥ ३५ ॥

भोगा इति । बहुविधा विविधाः भङ्गुरवृत्तयः क्षणिकस्वभावाः भोगाः तैः भोगैरेव च अयं भवः संसारः पूर्ण इति शेषः । तत् तस्मात् हे लोकाः ! कस्य कृते किं निमित्तम् इह भवे परिभ्रमत पर्यटत ? चेष्टितं कृतम् अत्र संसारे नानाचेष्टा कृतेत्यर्थः अथवा चेष्टितं कृतम् अलम् व्यर्थमित्यर्थः । यदि अस्माकं वचः श्रद्धेयं विश्वसनीयं युष्माकमिति शेषः तदा आशा एव पाशशतानि रज्जुशतानि तेषाम् उपशान्त्या निराशयेति भावः विशदं स्वच्छं निर्मलमित्यर्थः चेतः काम्यानां भोगानाम् उत्पत्तिः आसक्तिः वशोऽधीनो यस्य तादृशे निस्पृहे इत्यर्थः स्वधामनि निर्जननिकेतने आत्मनीति भावः समाधीयतां संलग्नताम् । शार्दूलविक्रीडितं वृत्तम् ॥ ३६ ॥

यच्छापाद्विरसा भवन्ति विविधास्त्रैलोक्यराज्यादयः ।
बोधः कोऽपि स एक एव परमो नित्योदितो जृम्भते
भोः साधो! चणभङ्गुरे तदितरे भोगे रतिं मा कृथाः ॥३७॥
सा रम्या नगरी महान् स नृपतिः सामन्तचक्रञ्च तत्
पार्श्वे तस्य च सा विदग्धपरिषत्ताश्चन्द्रबिम्बाननाः ।
उन्मत्तः स च राजपुत्रनिवहस्ते वन्दिनस्ताः कथाः
सर्वं यस्य वशादगात् स्मृतिपथं कालाय तस्मै नमः ॥३८॥
यत्रानेकः क्वचिदपि गृहे तत्र तिष्ठत्यथैको
यत्राप्येकस्तदनु बहवस्तत्र नैकोऽपि चान्ते ।

ब्रह्मेति । हे साधो! यत्र स्थितः ब्रह्मेन्द्रादिमरुद्गणान् ब्रह्मादिदेवानित्यर्थः तृणगणान् तृणचयान् मन्यते गणयति जन इति शेषः, यस्य शापात् विद्वेषादिति भावः विविधाः त्रैलोक्यराज्यादयः विरसाः निःस्वादाः हेया इति भावः भवन्ति, स एक एव कोऽपि परमो बोधः परमार्थज्ञानं नित्योदितः सततोद्रिक्तः सन् जृम्भते स्फुरति, तत् तस्मात् चणभङ्गुरे इतरे नीचे भोगे रतिम् अनुरागं मा कृथाः न कुरु । काव्यलिङ्गमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ३७ ॥

सेति । सा प्रसिद्धा रम्या मनोहरा नगरी, स महान् नृपतिः तच्च सामन्तचक्रम् अधीश्वरमण्डलं, तस्य पार्श्वे समीपे इत्यर्थः सा विदग्धपरिषत् विद्वत्सभा, ताः चन्द्रबिम्बाननाः चन्द्रमुख्यः कान्ताः, स च उन्मत्तः मदमत्तः राजपुत्रनिवहः राजपुत्रसङ्घः, ते वन्दिनः वैतालिकाः, ताः कथाः आलापाः सरसा इति भावः, एतत् सर्वं यस्य वशात् स्मृतिपथम् अगात् तस्मै कालाय नमः सर्वं वस्तु कालेन कवलीयते इति असारमेवेति भावः । शार्दूलविक्रीडितं वृत्तम् ॥३८॥

यत्रेति । यत्र क्वचिदपि गृहे अनेकः परिजनः आसीदिति

इत्थञ्चेमौ रजनिदिवसौ दोलयन् द्वाविवाक्षौ
कालः काल्या भुवनफलके क्रीड़ति प्राणिसारैः ॥ ३९ ॥
आदित्यस्य गतागतैरहरहः सङ्क्षीयते जीवनं
व्यापारैर्बहुकार्य्यभारगुरुभिः कालो न विज्ञायते।
दृष्ट्वा जन्मजराविपत्तिमरणं त्रासश्च नोत्पद्यते
पीत्वा मोहमयीं प्रमादमदिरामुन्मत्तभूतञ्जगत् ॥ ४० ॥
रात्रिः सैव पुनः स एव दिवसो मत्वा मुधा जन्तवो
धावन्त्युद्यमिनस्तथैव निभृतं प्रारब्धतत्तत्क्रियाः।

शेषः अथ कियद्दिनानन्तरं तत्र एकः तिष्ठति अन्ये मृता इति भावः। यत्रापि गृहे एकः आसीदिति शेषः तत्र बहवः सन्ति विद्यन्ते इति शेषः, किन्तु अन्ते चरमे एको न स्थास्यतीति शेषः। इत्थम् अनेन प्रकारेण कालः काल्या प्रकृत्या सह द्वौ अक्षाविव पाशाविव इमौ रजनिदिवसौ दोलयन् कम्पयन् चालयन्निति शेषः भुवनं जगत् फलकमिव क्रीड़ाधार इव तस्मिन् प्राणिनः जीवाः सारा इव गुटिका इव तैः क्रीड़ति विहरति। उपमालङ्कारः। मन्दाक्रान्ता-वृत्तम् ॥ ३९ ॥

आदित्यस्येति। आदित्यस्य सूर्य्यस्य गतागतैः अहरहः प्रतिदिनं जीवनं संक्षीयते संक्षयं गच्छति। बहुकार्य्यभारेण गुरुभिर्महद्भिः व्यापारैः क्रियाभिः कालः गच्छन्निति शेषः न विज्ञायते न प्रतीयते। जन्मजराविपत्तिमरणं दृष्ट्वा त्रासश्च भयञ्च न उत्पद्यते न जायते। अतः मोहमयीं प्रमादमदिराम् अनवधानसुरां पीत्वा जगत् उन्मत्तभूतं क्षिप्तं दृश्यते इति शेषः। अत्र त्रासहेतौ सत्यपि तदभावात् विशेषोक्तिः काव्यलिङ्गञ्चेत्युभयोः संसृष्टिः। शार्दूल-विक्रीड़ितं वृत्तम् ॥ ४० ॥

रात्रिरिति। सैव रात्रिः पुनरागतेति शेषः, स एव दिवसः

व्यापारैः पुनरुक्तभूतविषयैरित्थं विधेनामुना
संसारेण कदर्थिता वयमहो मोहं न जानीमहे ॥ ४१ ॥

न ध्यातं पदमीश्वरस्य विधिवत्संसारविच्छित्तये
स्वर्गद्वारकपाटपाटनपटुर्धर्मोऽपि नोपार्जितः ।
नारीपीनपयोधरोरुयुगलं स्वप्नेऽपि नालिङ्गितं
मातुः केवलमेव यौवनवनच्छेदे कुठारा वयम् ॥ ४२ ॥

नाभ्यस्ता भुवि वादिवृन्ददमनी विद्या विनीतोचिता
खड्गाग्रैः करिकुम्भपीठदमनैर्नाकं न नीतं यशः ।

पुनरागत इति मत्वा जन्तवः लोकाः क्षुधा तृषा उद्यमिनः उद्युक्ताः, तथैव पूर्ववदेव प्रारब्धाः उपक्रान्ताः तत्तत्क्रियाः यैः तथाभूताः सन्तः निभृतं नियतं स्वं स्वं गन्तव्यस्थानमिति शेषः धावन्ति गच्छन्ति । इत्थम्भूतेन एवंरूपेण अमुना संसारेण पुनरुक्तभूताः पुनःपुनर्भुक्ता इति यावत् विषयाः येषां तादृशैः व्यापारैः क्रियाभिः कदर्थिताः क्लेशिताः वयं मोहं मायां न जानीमहे अहो आश्चर्यम् । काव्यलिङ्गमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ४१ ॥

नेति । संसारविच्छित्तये संसारव्यापारस्य विघ्नो मा भूदिति धियेति भावः ईश्वरस्य पदं विधिवत् यथाविधि न ध्यातं न चिन्तितम् अस्माभिरिति शेषः । स्वर्गद्वारस्य यत् कपाटम् आवरणमिति यावत् तत्पाटनपटुः उद्घाटनक्षमः धर्मोऽपि न उपार्जितः न प्राप्तः न सेवित इति यावत् । नारीणां कान्तानां पीनपयोधरयोः ऊर्वोश्च युगलं स्वप्नेऽपि न आलिङ्गितम् अर्थसाध्यस्य स्त्रीसम्भोगस्य अर्थाभावेनाभावादिति भावः । अर्थकामधर्ममोक्षोपायाश्चत्वार एवास्माकं न सन्तीति भावः । वयं केवलमेव मातुर्यौवनवनच्छेदे कुठाराः जाता इति शेषः । रूपकालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ४२ ॥

नाभ्यस्तेति । भुवि पृथिव्यां वादिवृन्दानां विचारेण जया॰

कान्ताकोमलपल्लवाधररसः पीतो न चन्द्रोदये
तारुण्यङ्गतमेव निष्फलमहो शून्यालये दीपवत् ॥ ४३ ॥
विद्या नाधिगता कलङ्करहिता वित्तञ्च नोपार्जितं
शुश्रूषापि समाहितेन मनसा पित्रोर्न सम्पादिता ।
आलोलायतलोचना युवतयः स्वप्नेऽपि नालिङ्गिताः
कालोऽयं परपिण्डलोलुपतया काकैरिव प्रेषितः ॥ ४४ ॥
वयं येभ्यो जातास्चिरपरिगता एव खलु ते
समा येषां वृद्धाः स्मृतिविषयतां तेऽपि गमिताः ।

र्थिनामित्यर्थः दमनी शत्रौ विनीता विनयसम्पादिनी भविता खड्ग-
रूपा विद्या न अभ्यस्ता न शिक्षिता, करिकुम्भानां पीठदमनैः पीठ-
दलनैरित्यर्थः खड्गाद्यैः असिधाराभिरित्यर्थः यशः कीर्त्तिः नाकं स्वर्गं
न नीतं भवत्जयेनेति भावः, तथा चन्द्रोदये कान्तायाः कोमलः
पल्लववत् यः अधरः तस्य रसः न पीतः। अहो खेदे शून्यालये
दीपवत् तारुण्यं यौवनम् अस्माकमिति शेषः निष्फलम् निरर्थकं गत-
मेव। काव्यलिङ्गलङ्कारः। शार्दूलविक्रीड़ितं वृत्तम् ॥ ४३ ॥

विद्येति। कलङ्करहिता निर्मलेत्यर्थः विद्या नाधिगता नोपा-
र्जिता, वित्तञ्च धनञ्च नोपार्जितं, समाहितेन सम्यक् अवहितेन मनसा
चेतसा पित्रोः मातापित्रोः शुश्रूषा सेवापि न सम्पादिता न कृता,
तथा स्वप्नेऽपि आलोले चञ्चले आयते विशाले लोचने नयने यासां
ताः युवतयः न आलिङ्गिताः न भुक्ता इति यावत्। अयं कालः
परपिण्डेषु परान्नेषु लोलुपतया लुब्धतया काकैरिव अस्माभिरिति
शेषः प्रेषितः अतिवाहितः। उपमालङ्कारः। शार्दूलविक्रीड़ितं
वृत्तम् ॥ ४४ ॥

वयमिति। वयं येभ्यः मातापितृभ्य इति शेषः जाताः उत्-
पन्नाः, ते खलु चिरपरिगता एव दीर्घकालं मता एव स्मृता इति

इदानीमिते स्मः प्रतिदिवसमापन्नपतना
गता तुल्यावस्थां सिकतिलनदीतीरतरुभिः ॥ ४५ ॥
आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्द्धं गतं
तस्यार्द्धस्य परस्य चार्द्धमपरं बालत्ववृद्धत्वयोः ।
शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते
जीवे वारितरङ्गचञ्चलतरे सौख्यं कुतः प्राणिनाम् ॥ ४६ ॥
क्षणं बालो भूत्वा क्षणमपि युवा कामरसिकः
क्षणं वित्तैर्हीनः क्षणमपि च सम्पूर्णविभवः ।

यावत् । येषां समाः तुल्यवयसः वयमिति शेषः, ते अपि हृद्धाः सन्तः स्मृतिविषयतां गमिताः कालेनेति शेषः तेऽपि मृता इति भावः । इदानीम् एते वयमिति शेषः प्रतिदिवसम् आपन्नम् उपस्थितं पतनं येषां तथाविधाः सन्तः सिकतिलं सैकतपूर्णं यत् नदीतीरं तस्य तरुभिः तुल्यावस्थां गताः स्मः । शिखरिणीवृत्तम् ॥ ४५ ॥

आयुरिति । नृणाम् आयुः जीवनकालः वर्षशतं शतायुर्वै पुरुष इति श्रुतेः । परिमितं परिमाणेन निर्णीतम् । तदर्द्धं पञ्चाशद्वर्षमिति यावत् रात्रौ गतं निद्रयेति भावः, तस्य परस्य अर्द्धस्य अपरम् अर्द्धं पञ्चविंशतिवर्षमिति भावः बालत्ववृद्धत्वयोः बाल्यवार्द्धकयोः गतमिति शेषः, शेषम् अवशिष्टं पञ्चविंशतिवर्षं व्याधिः रोगः वियोगः प्रियविच्छेदः तयोर्यत् दुःखं तेन सहितं सेवादिभिः दास्यवृत्त्यादिभिः नीयते अतिवाह्यते जनैरिति शेषः । अतः वारितरङ्गवत् चञ्चलतरे अतिचपले इति यावत् जीवे जीवने प्राणिनां कुतः सौख्यं नैव सुखमस्तीत्यर्थः । अत्र वारितरङ्गचञ्चलतरे इत्युपमया अनुप्राणितं काव्यलिङ्गमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ४६ ॥

क्षणमिति । नरः क्षणं बालः शिशुः, क्षणमपि कामरसिकः भोगचतुरः युवा, क्षणं वित्तैर्धनैर्हीनः दरिद्रः, क्षणमपि सम्पूर्ण-

जराजीर्णैरङ्गैर्नट इव वलीमण्डिततनुः
नरः संसारान्ते विशति यमधानीयवनिकाम् ॥ ४७ ॥

यतिनृपतिसंवादः।

त्वं राजा वयमप्युपासितगुरुप्रज्ञाभिमानोन्नताः
ख्यातस्त्वं विभवैर्यशांसि कवयो दिक्षु प्रतन्वन्ति नः।
इत्थं मानधनातिदूरमुभयोरप्यावयोरन्तरं
यद्यस्मासु पराङ्मुखोऽसि वयमप्येकान्ततो निस्पृहाः ॥४८॥

अहौ वा हारे वा बलवति रिपौ वा सुहृदि वा
मणौ वा लोष्ठे वा कुसुमशयने वा दृषदि वा।
तृणे वा स्त्रैणे वा मम समदृशो यान्ति दिवसाः
क्वचित्पुण्येऽरण्ये शिवशिवशिवेति प्रलपतः ॥ ४९ ॥

विभवः धनसम्पद् इत्यर्थः भूत्वा जरया वार्द्धकेन जीर्णैः अङ्गैः उप-लक्षणे तृतीया, वलीभिः मांसशैथिल्यजन्यूतरेखाभिः मण्डिततनुः भूषितशरीरः सन् संसारान्ते नट इव यमधानीयवनिकां शमनसदन-तिरस्करिणीं विशति। उपमालङ्कारः। शिखरिणीवृत्तम् ॥ ४७ ॥

त्वमिति। त्वं राजा भूपतिः, वयमपि उपासिता गुरवः यैः तादृशाः शिक्षितविद्या इति अतएव प्रज्ञया प्रतिभया यत् अभिमानं गौरवं तेन उन्नताः महान्त इत्यर्थः। त्वं विभवैः सम्पद्भिः ख्यातः प्रसिद्धिं गतः, कवयः विद्वांसः दिक्षु नः अस्माकं यशांसि प्रतन्वन्ति प्रकर्षेण विस्तारयन्ति। इत्थम् एवंरूपेण उभयोरपि आवयोः अन्तरं प्रभेदः मानधनाभ्याम् अतिदूरम् अत्यन्तमित्यर्थः। एवं सतेऽपि त्वं यदि अस्मासु पराङ्मुखोऽसि विमुखः भवसि, तर्हि वय-मपि एकान्ततः सम्यक् निस्पृहाः त्वदानुकूल्यं न प्रार्थयाम इति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ ४८ ॥

एकाकी निस्पृहः शान्तः पाणिपात्रो दिगम्बरः ।
कदा शम्भो ! भविष्यामि कर्मनिर्मूलनक्षमः ॥ ५० ॥

पाणिं पात्रयतां निसर्गशुचिना भैक्ष्येण सन्तुष्यतां
यत्र क्वापि निषीदतां बहुतृणं विश्वं मुहुः पश्यताम् ।
अत्यागेऽपि तनोरखण्डपरमानन्दावबोधस्पृशां
मर्त्यः कोऽपि शिवप्रसादसुलभः सम्पत्स्यते योगिनाम् ॥ ५१ ॥

अहाविति । अहौ सर्पे वा हारे मौक्तिकमालायां वा, बलवति प्रबले रिपौ शत्रौ वा सुहृदि मित्रे वा, मणौ रत्ने वा लोष्ट्रे मृत्पिण्डे वा, कुसुमशयने पुष्पशय्यायां वा दृषदि शिलायां वा, तृणे वा स्त्रैणे स्त्रीसमूहे वा, समदृशः समदर्शिनः मम क्वचित् पुण्ये विशुद्धे अरण्ये कानने शिवशिवशिवेति प्रलपतः सतः दिवसाः यान्तु गच्छन्तु । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४९ ॥

एकाकीति । हे शम्भो ! कदाहम् एकाकी निःसङ्गः निस्पृहः वीतरागः शान्तः संयतेन्द्रियः पाणिपात्रः करमात्रभाजनः दिगम्बरः नग्न इति यावत् सन् कर्मणां सुकृतदुष्कृतानां निर्मूलने विध्वंसने क्षमः समर्थः भविष्यामि ब्रह्मज्ञानं प्राप्स्यामीति भावः । अनुष्टुब्-वृत्तम् ॥ ५० ॥

पाणिमिति । पाणिं पात्रयतां पात्रविचारवतां करपात्र-भाजनानामिति यावत् निसर्गशुचिना स्वभावशुद्धेन भैक्ष्येण भिक्षान्नेन सन्तुष्यतां यत्र क्वापि निषीदताम् अस्पृहाणामिति यावत् विश्वं जगत् बहुतृणं तृणपूर्णम् असारमिति यावत् मुहुः पुनः पुनः पश्यतां तनोः शरीरस्य अत्यागेऽपि अखण्डः सम्पूर्णः यः परमानन्दः परमात्मा तस्य अवबोधः ज्ञानं तं स्पृशन्तीति तथोक्तानां ब्रह्मज्ञान-वतामित्यर्थः योगिनां मध्ये कोऽपि मर्त्यः शिवस्य प्रसादः सुलभः सुप्रापः यस्य तथाभूतः सम्पत्स्यते भविष्यति न सर्वो जनः शिवप्रसादं प्राप्नोतीति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ५१ ॥

अर्थानामीशिषे त्वं वयमपि च गिरामीश्महे यावदर्थं
शूरस्त्वं वादिदर्पज्वरशमनविधावक्षयं पाटवं मे ।
सेवन्ते त्वां धनाढ्या मतिमलहतये मामपि श्रोतुकामा
मय्यप्यास्था न ते चेत्त्वयि मम नितरामेव राजन् गतासीत् ५२

वयमिह परितुष्टा वल्कलैस्त्वं दुकूलैः
सम इह परितोषो निर्विशेषो विशेषः ।
स तु भवतु दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान् को दरिद्रः ॥ ५३ ॥

अर्थानामिति । हे राजन् ! त्वम् अर्थानाम् ईशिषे प्रभवसि, बहुधनोऽसीति यावत्, वयमपि यावदर्थं गिरां वाचाम् ईश्महे प्रभवामः विद्यावन्तो वयमिति भावः । त्वं शूरः बलवान्, मे मम वादिनां शास्त्रवादवतां दर्पज्वरस्य शमनविधौ निराकरणव्यापारे अक्षयं सम्यगिति यावत् पाटवं नैपुण्यम् अस्तीति शेषः । धनाढ्याः धनिनः धनार्थिनो वा त्वां सेवन्ते आराधयन्ति, श्रोतुकामाः सदुपदेशस्येति शेषः जनाः मतेः बुद्धेः मलस्य दोषस्य हृतये शान्तये मामपि सेवन्ते इति शेषः । चेत् यदि ते तव मयि आस्था यत्नः श्रद्धा वा न स्यादिति शेषः तदा ममापि त्वयि आस्था नितरामेव गता आसीत् त्वामपि अहं न श्रद्दधे इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥५२॥

वयमिति । इह जगति वयं वल्कलैः तरुत्वग्भिः परितुष्टाः परितोषं गताः, त्वं दुकूलैः पट्टाम्बरैः परितुष्ट इति शेषः । इह अस्मिन् परिधानविषये इति भावः समः तुल्यः परितोषः तव मम चेति भावः विशेषः परितोषगतवैलक्षण्यमित्यर्थः निर्विशेषः अभिन्न इत्यर्थः नास्तीति भावः । यस्य तृष्णा विषयस्पृहा विशाला महती, " तु स एव दरिद्रो भवतु, मनसि परितुष्टे सति अर्थवान् धनी कः

फलमलमशनाय स्वादु पानाय तोयं
शयनमवनिपृष्ठे वाससी वल्कले च ।
धनलवमधुपानभ्रान्तसर्वेन्द्रियाणा-
मविनयमनुमन्तुं नोत्सहे दुर्जनानाम् ॥ ५४ ॥
अश्नीमहि वयं भिक्षामाशावासो वसीमहि ।
शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः ॥ ५५ ॥
न नटा न विटा न गायका न च तथ्येतरवादतत्पराः ।
नृपसंसदि नाम के वयं स्तनभारानमिता न योषितः ॥५६॥

दरिद्रस्य कः ? धनिदरिद्रयोर्विशेषो नास्तीति भावः । मालिनीवृत्तं, ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ॥ ५३ ॥

फलमिति । फलम् अशनाय भोजनाय अलं पर्याप्तम्, अलं व्यर्थसमर्थयोरित्यमरः । स्वादु सुरसं तोयं जलं पानाय स्थितमिति शेषः, अवनिपृष्ठे भूतले शयनं वल्कले वाससी वसने च स्त इति शेषः अस्माकमिति शेषः । अतः धनलवः यत्किञ्चिद्धनमेव मधु तस्य पानेन भ्रमन्तीति तथोक्तानि सर्वाणि इन्द्रियाणि येषां तथाभूतानां दुर्जनानाम् अविनयम् अत्याचारम् अनुमन्तुं सोढुमिति भावः न उत्सहे नेच्छामीत्यर्थः । मालिनीवृत्तम् ॥ ५४ ॥

अश्नीमहीति । वयं भिक्षां भिक्षालब्धमन्नमित्यर्थः अश्नीमहि भक्षयामः, आशावासः दिग्वसनं वसीमहि आच्छादयामः दिगम्बराः स्म इति भावः, महीपृष्ठे भूतले शयीमहि शयनं कुर्मः । अतः ईश्वरैः धनिभिः किं कुर्वीमहि नैव किञ्चिदित्यर्थः । काव्यलिङ्गमलङ्कारः । अनुष्टुव्वृत्तम् ॥ ५५ ॥

नेति । वयं नटाः नर्त्तकाः न, विटाः लम्पटाः न, गायकाः न, तथ्येतरस्य असत्यस्य वादे तत्पराः न मिथ्यावादिनो नेत्यर्थः, स्तनभारेण अवनमिताः योषितः कान्ताश्च न अतः नृपसदसि न

विपुलहृदयैरीशैः कैश्चिज्जगज्जनितं पुरा
विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा ।
इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते
कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः ॥ ५७ ॥

अभुक्तायां यस्यां क्षणमपि न यातं नृपशतैः
भुवस्तस्या लाभे क इह बहुमानः क्षितिभृताम् ।
तदंशस्याप्यंशे तदवयवलेशेऽपि पतयो
विषादे कर्त्तव्ये विदधति जडाः प्रत्युत मुदम् ॥ ५८ ॥

केऽपि नाम, राजसभायोग्या न वयमिति राजंस्तवास्माकं कथं प्रीतिर्भविष्यतीति भावः ॥ ५६ ॥

विपुलेति । पुरा पूर्वं विपुलहृदयैः महामनोभिः कैश्चित् ईशैः ब्रह्मादिभिरिति भावः जगत् जनितम् उत्पादितम् । अपरैः अनन्तादिभिरिति भावः विधृतं शिरसा अवलम्बितम् । अन्यैः परशुरामादिभिरिति भावः विजित्य तृणमिव अतितुच्छबोधेनेति भावः दत्तं कश्यपायेति शेषः । अन्ये धीराः सुविचक्षणाः महान्तः इन्द्रादय इति भावः इह संसारे चतुर्दश भुवनानि भुञ्जते । कतिपयपुराणां स्वाम्ये आधिपत्ये सति पुंसाम् एष मदज्वरः अहङ्कारसन्तापः कः ? हरिणीवृत्तं, नसमरसैः षड्वेदैर्हयैर्हरिणी मतेति तल्लक्षणात् ॥ ५७ ॥

अभुक्तायामिति । यस्याम् अभुक्तायां सत्यां नृपशतैः क्षणमपि न यातं नातिवाहितं क्षणमात्रमपि यस्या भोगे क्रियमाणे शतं शतं नृपा गता इति भावः तस्याः भुवः पृथिव्याः लाभे क्षितिभृतां राज्ञाम् इह संसारे बहुमानः महान् मदः कः ? नैव कर्त्तव्य इति भावः । जडाः निर्बोधा जनाः तस्याः भुवः अंशस्यापि अंशे तस्य अंशस्य अवयवलेशेऽपि पतयः स्वामित्वं लभमाना इति यावत् सन्तः विषादे कथं ममेदृशं भूस्वाम्यं जातम् एतद्दर्शने मम सुकृतं सर्वमेव विलुप्तम्

परेषां चेतांसि प्रतिदिवसमाराध्य बहुधा
प्रसादं किन्नेतुं दिशसि हृदय! क्लेशमफलम् ।
प्रसन्ने त्वय्यन्तः स्वयमुदितचिन्तामणिगुणे
विविक्तः सङ्कल्पः किमभिलषितं पुष्यति न ते ॥ ५९ ॥

परिभ्रमसि किं वृथा क्वचन चित्त विश्राम्यतां
स्वयम्भवति यद्यथा भवति नान्यथा तत्तथा ।
अतीतमपि न स्मरन्नपि च भाव्यं सङ्कल्पयन्
अतर्कितगमागमाननुभवस्व भोगानिह ॥ ६० ॥

इत्येवं चोभे कर्त्तव्ये प्रत्युत वैपरीत्येन सुदम् आनन्दं विदधति कुर्वन्ति । शिखरिणीवृत्तम् ॥ ५८ ॥

परेषामिति । हे हृदय ! प्रतिदिवसं परेषां धनिनामित्यर्थः चेतांसि मनांसि बहुधा विविधोपायेनेत्यर्थः आराध्य सेवित्वा प्रसादं नेतुं किं कथम् अफलं निरर्थकं क्लेशं दिशसि भुङ्क्षे, प्रसन्ने त्वयि अन्तः स्वयम् उदितः चिन्तामणेः परमात्मनः गुणः यस्मिन् तादृशे विविक्ते निर्गुणे सङ्कल्पे वासनायां ते तव अभिलषितं किं न पुष्यति न पोषं गच्छति ? उचितं तवात्मप्रसादनमेव कर्त्तव्यमिति भावः । शिखरिणीवृत्तम् ॥ ५९ ॥

परिभ्रमसीति । किं कथं वृथा निरर्थकं परिभ्रमसि, क्वचन कुत्रापि चित्त मनः विश्राम्यतां स्थिरीक्रियतां भवानिति शेषः, स्वयं यत् यथा भवति, तत् अन्यथा अन्येन प्रकारेण तथा न भवति, अतीतं गतं अपि वस्तु इति शेषः न स्मरन् भाव्यञ्च भविष्यञ्च सङ्कल्पयन् चिन्तयन् सन् इह संसारे अतर्कितगमागमान् सहसा गत्वरानित्यर्थः भोगान् विषयान् अनुभवस्व चिन्तय, सर्वं क्षणिकमिति भावयेत्यर्थः । हे जीवेति सम्बोधनपदमूह्यम् । शिखरिणीवृत्तम् ॥ ६० ॥

एतस्माद्विरमेन्द्रियार्थगहनादायासकादाश्रयात्
श्रेयोमार्गमशेषदुःखशमनव्यापारदक्षं क्षणात् ।
आत्मीभावमुपैहि सन्त्यज निजां कल्लोललोलां मतिं
मा भूयो भज भङ्गुराभवरतिं चेतः ! प्रसीदाधुना ॥६१

मोहं मार्जय तामुपाश्रय रतिं चन्द्रार्द्धचूडामणौ
चेतः ! स्वर्गतरङ्गिणीतटभुवि व्यासङ्गमङ्गीकुरु ।
को वा वीचिषु बुद्बुदेषु च तडिल्लेखासु च श्रीषु च
यानाग्रेषु च पन्नगेषु च सरिद्वेगेषु च प्रत्ययः ॥ ६२ ॥

चेतश्चिन्तय मा रमां सकृदिमामस्थायिनीमास्थया
भूपालभ्रुकुटीकुटीरविहरव्यापारपण्याङ्गनाम् ।

एतस्मादिति । हे चेतः ! एतस्मात् इन्द्रियार्थैः भोग्यविषयैः गहनात् निविडात् आयासकात् क्लेशकरात् आश्रयात् संसारादिति भावः विरम निवर्त्तस्व, क्षणात् क्षणमात्रेण अशेषदुःखशमनव्यापारे दक्षं निपुणं श्रेयोमार्गं शुभवर्त्म आत्मीभावं ब्रह्मभावम् उपैहि प्राप्नुहि. निजां आत्मीयां कल्लोललोलां तरङ्गचपलां मतिं सन्त्यज, भङ्गुरां क्षण-स्थायिनीं भवरतिं संसारसुखं भूयः पुनः मा भज न स्पृहाय, अधुना इदानीं प्रसीद । शार्दूलविक्रीड़ितं वृत्तम् । उपमालङ्कारः ॥ ६१ ॥

मोहमिति । हे चेतः ! मोहं मार्जय शोधय परित्यजेति यावत. चन्द्रार्द्धचूड़ामणौ हरे तां प्रसिद्धामित्यर्थः रतिम् उपाश्रय कुरु, स्वर्ग-तरङ्गिण्याः गङ्गायाः तटभुवि तीरदेशे व्यासङ्गं विशेषासक्तिं अङ्गी-कुरु, वीचिषु तरङ्गेषु, बुद्बुदेषु जलस्फोटेषु, तड़िल्लेखासु विद्युद्दामसु. श्रीषु सम्पत्सु च, यानाग्रेषु हस्त्यश्वादियानाग्रेषु, पन्नगेषु सर्पेषु च. सरिद्वेगेषु स्रोतःसमूहेषु च को वा प्रत्ययः विश्वासः ? नैव विश्वास इत्यर्थः । काव्यलिङ्गमलङ्कारः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ६२ ॥

चेत इति । हे चेतः ! अस्थायिनीं क्षणिकामित्यर्थः भूपालानां

कन्थाकञ्चुकिताः प्रविश्य भवनद्वारे च वाराणसी
रथ्यापङ्क्तिषु पाणिपात्रपतितां भिक्षामपेक्षामहे ॥६३॥

अग्रे गीतं सरसकवयः पार्श्वयोर्दाक्षिणात्याः
पश्चाल्लीलावलयरणितं चामरग्राहिणीनाम् ।
यद्यस्त्येवं कुरु भवरसास्वादने लम्पटत्वं
नोचेच्चेतः ! प्रविश सहसा निर्विकल्पे समाधौ ॥ ६४ ॥

प्राप्ताः श्रियः सकलकामदुघास्ततः किं ?
न्यस्तं पदं शिरसि विद्विषतां ततः किम् ? ।
सम्पादिताः प्रणयिनो विभवैस्ततः किं ?
कल्पं स्थितास्तनुभृतान्तनवस्ततः किम् ? ॥ ६५ ॥

राज्ञां भ्रुकुटी एव कुटीरं क्षुद्रगृहं तत्र विहारव्यापारे क्रीडाविधौ पण्याङ्गनां वारनारीम् इमां रमां लक्ष्मीम् आस्थया अनुरागेण मा चिन्तय सम्पदां चिन्तां न कुर्वित्यर्थः । वाराणसीरथ्यापङ्क्तिषु काशीमार्गश्रेणीषु कन्थाकञ्चुकिताः कन्थावृता इति यावत् सन्तः भवनद्वारे गृहस्थानामिति शेषः प्रविश्य पाणिपात्रे पतितां भिक्षाम् अपेक्षामहे आकाङ्क्षामहे इति यावत् । शार्दूलविक्रीडितं वृत्तम् ॥ ६३ ॥

अग्रे इति । हे चेतः ! अग्रे सम्मुखे गीतं सङ्गीतव्यापारः, पार्श्वयोः दाक्षिणात्याः दक्षिणदेशभवाः सरसाः कवयः, पश्चात् भागे इति शेषः चामरग्राहिणीनां चामरान्दोलनपराणामित्यर्थः वेश्यानामिति शेषः लीलया वलयक्वणितं करभूषणरणितम्, एवम् इत्थम् ऐश्वर्यमिति शेषः, यदि अस्ति तवेति शेषः तदा भवस्य संसारस्य रसास्वादने लम्पटत्वं लुब्धत्वं कुरु, नोचेत् अन्यथा सहसा अविलम्बमित्यर्थः निर्विकल्पे निःसङ्गे समाधौ ब्रह्मचिन्तने प्रविश । मन्दाक्रान्तावृत्तम् ॥६४॥

प्राप्ता इति । सकलकामदुघाः सर्वमनोरथसम्पादिन्य इति यावत् श्रियः सम्पदः प्राप्ताः अधिगताः, ततः श्रीभिरित्यर्थः किम् ? न

भक्तिर्भवे मरणजन्मभयं हृदिस्थं
स्नेहो न बन्धुषु च मन्मथजा विकाराः ।
संसर्गदोषरहिता विजना वनान्ता
वैराग्यमस्ति किमतः परमर्थनीयम् ॥ ६६ ॥

तस्मादनन्तमजरं परमं विकासि
तद्ब्रह्म चिन्तय किमेभिरसद्विकल्पैः ।
यस्यानुषङ्गिन इमे भुवनाधिपत्य-
भोगादयः कृपणलोकमता भवन्ति ॥ ६७ ॥

न किमपि प्रयोजनमित्यर्थः । विद्विषतां शत्रूणां शिरसि पदं न्यस्तम् अर्पितं शत्रवः पराजिता इति भावः ततः शत्रुजयादिति भावः किम्? न किमपि प्रयोजनमित्यर्थः । प्रणयिनः सज्जनाः विभवैः सम्मानिताः सन्तोषिताः ततः स्वजनसम्माननेन किम्? न किमपि प्रयोजनमित्यर्थः । तनुभृतां प्राणिनां तनवः शरीराणि कल्पम् आप्रलयमिति यावत् स्थिताः, ततः आप्रलयजीवनादित्यर्थः किम्? न किमपि प्रयोजनमित्यर्थः । यथा पुनर्नागमिष्यते तथा प्रवर्त्तितव्यमिति भावः । वसन्ततिलकं वृत्तम् ॥ ६५ ॥

भक्तिरिति । भवे हरे भक्तिः, हृदिस्थं मरणजन्मभयं न अस्तीति शेषः, बन्धुषु पुत्रकलत्रादिषु स्नेहः न अस्तीति शेषः, मन्मथजाः कामजनिताः विकाराश्च न सन्तीति शेषः, संसर्गदोषरहिताः असम्यक्-सङ्गदोषा इति यावत् विजनाः जनरहिताः वनान्ताः वनसीमानः आश्रया इति शेषः, अतः परम् अर्थनीयं वैराग्यं किम् अस्ति? नैव किञ्चिदर्थनीयमित्यर्थः । वसन्ततिलकं वृत्तम् ॥ ६६ ॥

तस्मादिति । तस्मात् अनुषङ्गिनः अनुषङ्गोद्भवाः आसक्तिसम्भवा इत्यर्थः, इमे भुवनाधिपत्यभोगादयः यस्य प्रकाशे कृपणलोकमताः निकृष्टलोकाभिमताः भवन्ति, तत् अनन्तम् अजरं परमं विकासि विक-

पातालमाविशसि यासि नभो विलङ्घ्य
दिङ्मण्डलं भ्रमसि मानस ! चापलेन ।
भ्रान्त्यापि जातु विमलं कथमात्मनीनं
न ब्रह्म संस्मरसि निर्वृतिमेषि केन ॥ ६८ ॥

नित्यानित्यविचारः ।

किं वेदैः स्मृतिभिः पुराणपठनैः शास्त्रैर्महाविस्तरैः
स्वर्गग्रामकुटीनिवासफलदैः कर्मक्रियाविभ्रमैः ? ।
मुक्त्वैकं भवदुःखभाररचनाविध्वंसकालानलं
स्वात्मानन्दपदप्रकाशकलनं शेषा वणिग्वृत्तयः ॥ ६९ ॥

वरं ब्रह्म चिन्तय, एभिः अतद्भिरस्थिरैः विकल्पैः प्रपञ्चैः किम् ? न किमपि प्रयोजनमित्यर्थः । वसन्ततिलकं वृत्तम् ॥ ६७ ॥

पातालमिति । हे मानस ! पातालम् आविशसि गच्छसि, नभः आकाशं विलङ्घ्य अतिक्रम्य यासि गच्छसि, चापलेन दिशां मण्डलं भ्रमसि पर्य्यटसि, भ्रान्त्यापि भ्रमेणापि जातु कदाचित् आत्मनीनम् आत्मने हितं विमलं विशुद्धं ब्रह्म न स्मरसि ? अतः केन कथं निर्वृतिं सन्तोषम् एषि प्राप्नोषि ? केनेत्यत्र येनेति पाठे येन निर्वृतिम् एषि तद् ब्रह्मेत्यन्वयः । वसन्ततिलकं वृत्तम् ॥ ६८ ॥

किमिति । वेदैः वेदपाठैः स्मृतिभिः संहितापाठैरित्यर्थः पुराणपठनैः महाविस्तरैः शास्त्रैः तथा स्वर्ग एव ग्रामः तस्य कुट्यां कुटीरे निवास एव फलं तत् ददतीति तथोक्तैः कर्मक्रियाविभ्रमैः स्वर्गसाधनयागादिव्यापारैरिति यावत् किम् ? न किञ्चित् प्रयोजनमस्तीत्यर्थः । एकं केवलं भवदुःखभारस्य सांसारिकसन्तापातिशयस्य या रचना प्रसारः तस्याः विध्वंसे विनाशने कालानलः कल्पान्ताग्निः तं स्वस्य आत्मनि परमात्मनि यः आनन्दः तस्य पदप्रकाशः मार्गविकाशः तस्य कलनं करणमित्यर्थः तत् मुक्त्वा विहाय शेषाः अवशिष्टा व्यापारा इति

गात्रं सङ्कुचितं गतिर्विगलिता भ्रष्टा च दन्तावली
दृष्टिर्नश्यति वर्द्धते वधिरता वक्त्रञ्च लालायते।
वाक्यं नाद्रियते च बान्धवजनो भार्य्या न शुश्रूषते
हा कष्टं पुरुषस्य जीर्णवयसः पुत्रोऽप्यमित्रायते ॥ ७० ॥

वर्णं सितं समववीक्ष्य शिरोरुहाणां
स्थानं जरापरिभवस्य तदेव पुंसाम्।
आरोपितास्थिशकलं परिहृत्य यान्ति
चाण्डालकूपमिव दूरतरं तरुण्यः ॥ ७१ ॥

शेषः वणिजां वृत्तयः व्यवहाराः। यथा वणिजः किञ्चित् अल्पमूल्यं वस्तु विक्रीय बहुधनमर्जयन्ति तथा वेदपाठादिव्यापारेण स्वल्पक्लेशकरेण व्यापारेण किञ्चित्कालसुखं स्वर्गमर्जयन्ति लोका इति भावः। तस्मात् अपुनरावृत्तये स्वात्मानन्दे निमज्जन्तीति निष्कर्षः। शार्दूलविक्रीडितं वृत्तम् ॥ ६८ ॥

गात्रमिति। हा कष्टं जीर्णवयसः स्थविरस्येत्यर्थः पुरुषस्य गात्रं सङ्कुचितं शिथिलतां गतं, गतिः गमनशक्तिः विगलिता नष्टा, दन्तावली दशनपङ्क्तयः भ्रष्टाः पतिताः, दृष्टिः दर्शनशक्तिः नश्यति, वधिरता श्रवणशक्तिहीनत्वं वर्द्धते वृद्धिं गच्छति, वक्त्रं वदनं लालायते लालसुद्गिरति च। बान्धवजनस्य वाक्यं न आद्रियते नादरेण शृणोतीत्यर्थः, भार्य्या न शुश्रूषते न सेवते, पुत्रोऽपि का कथान्येषामित्यपिशब्दार्थः अमित्रायते शत्रुरिवाचरतीत्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ ७० ॥

वर्णमिति। तरुण्यः युवत्यः शिरोरुहाणां केशानां सितं शुभ्रं, वर्णं समववीक्ष्य समवेक्ष्य आरोपितानि अर्पितानि अस्थिशकलानि कङ्कालखण्डाः यत्र तथाभूतं चाण्डालकूपमिव पुंसां जरापरिभवस्य

यावत् स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतो
यावच्चेन्द्रियशक्तिरप्रतिहता यावत् क्षयो नायुषः ।
आत्मश्रेयसि तावदेव विदुषा कार्य्यः प्रयत्नो महान्
सन्दीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ॥ ७२ ॥

तपस्यन्तः सन्तः किमधिनिवसामः सुरनदीं
गुणोदारान्दारानुत परिचरामः सविनयान् ।
पिबामः शास्त्रौघानुत विविधकाव्यामृतरसान्
न विद्मः किं कुर्मः कतिपयनिमेषायुषि जने ॥ ७३ ॥

तदेव स्थानं परिहृत्य परित्यज्य दूरतरं यान्ति न तादृशपुरुषसङ्गं कुर्वन्तीति भावः । उपमालङ्कारः । वसन्ततिलकं वृत्तम् ॥ ७१ ॥

यावदिति । यावत् इदं शरीरं अरुजं नीरोगम् अतएव स्वस्थं प्रकृतिस्थं, यावत् जरा वार्द्धकं दूरतः दूरे स्थितमिति शेषः जराया विलम्बोऽस्तीति भावः, यावत् इन्द्रियाणां चक्षुरादीनां शक्तिः सामर्थ्यम् अप्रतिहता अविलुप्तेत्यर्थः, यावत् आयुषः क्षयः अवसानं न, तावदेव विदुषा विज्ञेन आत्मनः श्रेयसि मङ्गले महान् प्रयत्नः कार्य्यः विधेयः । भवने गृहे सन्दीप्ते सम्यक् प्रज्वलिते सति कूपखननं कूपं खनित्वा तन्निर्वापणार्थं जलानयनमिति भावः प्रति उद्यमः उद्योगः कीदृशः ? न फलद इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ७२ ॥

तपस्यन्त इति । तपस्यन्तः तपश्चरन्तः सन्तः सुरनदीं किम् अधिनिवसामः अधितिष्ठामः ? सविनयान् सप्रश्रयः गुणोदारान् गुणसम्पन्नान् दारान् कलत्राणि उत किं परिचरामः सेवामहे ? शास्त्रौघान् वेदादिशास्त्राणि उत किं विविधकाव्यामृतरसान् पिबामः । जने कतिपयनिमेषम् अल्पदिनस्थायीत्यर्थः आयुः यस्य तादृशे सति किं कुर्मः ? न विद्मः न जानीमः । शिखरिणीवृत्तम् ॥ ७३ ॥

दुराराध्यः स्वामी तुरगचलचित्ताः क्षितिभुजो
वयञ्च स्थूलेच्छाः सुमहति पदे बद्धमनसः।
जरा देहे मृत्युर्हरति दयितं जीवितमिदं
सखे! नान्यच्छ्रेयो जगति विदुषामत्र तपसः॥ ७४॥

रम्यं हर्म्यतलं न किं वसतये श्राव्यं न गेयादिकं
किं वा प्राणसमासमागमसुखं नैवाधिकप्रीतये।
किन्तु भ्रान्तपतङ्गपक्षपवनव्यालोलदीपाङ्कुर-
च्छायाचञ्चलमाकलय्य सकलं सन्तो वनान्तङ्गताः॥ ७५॥

शिवार्चनपद्धतिः।

आसंसारं त्रिभुवनमिदं चिन्वतां तात! तादृक्
नैवास्माकं नयनपदवीं श्रोत्रमार्गं गतो वा।

दुराराध्य इति। स्वामी दुराराध्यः दुःसेव्यः, क्षितिभुजः राजानः तुरगवत् चलं चपलं चित्तं येषां तादृशाः। वयञ्च सुमहति पदे बद्धं मानसं यैः तथोक्ताः अतएव स्थूलेच्छाः दुराकाङ्क्षा इत्यर्थः। देहे जरा वार्द्धकं तिष्ठतीत्यर्थः, मृत्युः दयितं प्रियम् इदं जीवितं हरति। हे सखे! अत्र जगति विदुषां तपसः तपश्चर्य्यायाः अन्यत् श्रेयः मङ्गलं न अस्तीति शेषः। शिखरिणीवृत्तम्॥ ७४॥

रम्यमिति। रम्यं मनोहरं हर्म्यतलं वसतये वासाय किम्? गेयादिकं सङ्गीतादिकं न श्राव्यं किम्? प्राणसमायाः कान्तायाः समागमसुखं किं वा अधिकप्रीतये नैव? अपि तु अधिकप्रीतये एवेत्यर्थः। किन्तु भ्रान्तस्य भ्रमतः पतङ्गस्य पक्षिणः पक्षपवनेन पक्षवातेन व्यालोलः यो दीपाङ्कुरः क्षुद्रदीपः तस्य छायावत् चञ्चलं क्षणस्थायि सकलं वस्त्विति शेषः आकलय्य विविच्य सन्तः साधवः वनान्तं गताः प्राप्ताः। काव्यलिङ्गमलङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥ ७५॥

आसंसारमिति। हे तात! आसंसारम् आजन्मेति यावत् इदं

योऽयं धत्ते विषयकरिणीगाढ़गूढ़ाभिमान-
क्षीवस्यान्तःकरणकरिणः संयमालानलीलाम् ॥ ७६ ॥

जीर्णा एव मनोरथाश्च हृदये यातञ्च तद्यौवनं
हन्ताङ्गेषु गुणाश्च वन्ध्यफलतां याता गुणज्ञैर्विना।
किं युक्तं सहसाभ्युपैति बलवान् कालः कृतान्तोऽक्षमी
न ध्यातं मदनान्तकाङ्घ्रियुगलं मुक्त्वास्तु नान्या गतिः ॥७७॥

महेश्वरे वा जगतामधीश्वरे जनार्दने वा जगदन्तरात्मनि।
न वस्तुभेदप्रतिपत्तिरस्ति मे तथापि भक्तिस्तरुणेन्दुशेखरे॥७८

त्रिभुवनं व्याप्ततां पश्यतामिति यावत् नः अस्माकं नयनपदवीं दृष्टि-
पथं श्रोत्रमार्गं वा गतः तादृक् पदार्थ इति शेषः नैव अस्तीति शेषः,
यः अयं पदार्थः विषयकरिण्यां विषयरूपहस्तिन्यां गाढ़ः प्रबलः सः गूढ़ः
अभिमानः स्नेहः तेन क्षीवस्य मत्तस्य अन्तःकरणकरिणः मानस-
रूपहस्तिनः संयमे बन्धने आलानलीलां स्तम्भविभ्रमं धत्ते दधाति। मन्दा-
क्रान्तावृत्तम् ॥ ७६ ॥

जीर्णा इति। हृदये मनसि मनोरथाः अभिलाषाः जीर्णाः जरां
गता एव न कामा भुक्ता इति भावः, तत् यौवनं यातञ्च, हन्त खेदे,
गुणज्ञैर्विना गुणज्ञानामभावादित्यर्थः गुणाश्च विद्यादयश्च अङ्गेषु
वन्ध्यफलतां नैष्फल्यमिति यावत् याताः प्राप्ताः। किं युक्तं कर्त्तव्य-
मिदानीमिति शेषः? बलवान् कालः जीवनकाल इत्यर्थः सहसा
अभ्युपैति गच्छति, कृतान्तः संहारकः कालः अक्षमी असहनः कालं
स्वल्पमपि न प्रतीक्षते इति भावः। मदनान्तकस्य शम्भोः अङ्घ्रियुगलं
चरणद्वयं न ध्यातं न चिन्तितं, तु अतएव मुक्तेः निस्तारस्य अन्या गतिः
उपायः न अस्तीति शेषः। शार्दूलविक्रीड़ितं वृत्तम् ॥ ७७ ॥

महेश्वरे इति। जगतामधीश्वरे महेश्वरे वा जगतामन्तरात्मनि
परमात्मनि जनार्दने नारायणे वा वस्तुतः वास्तवी मे मम प्रतिपत्ति-

स्फुरत्स्फारज्योत्स्नाधवलिततले क्वापि पुलिने
सुखासीनाः शान्तध्वनिषु रजनीषु द्युसरितः ।
भवाभोगोन्मग्नाः शिवशिवशिवेत्युच्चवचसः
कदा गास्यामोऽन्तर्गतबहुलवाष्पाकुलदृशः ॥ ७९ ॥
वितीर्णे सर्वस्वे तरुणकरुणापूर्णहृदया-
स्तरन्तः संसारं विरसपरिणामावधिगतम् ।
कदा पुण्यारण्ये परिगतशरच्चन्द्रकिरणा-
स्त्रियामा नेष्यामो हरचरणचित्तैकशरणाः ॥ ८० ॥

विशेषः भेदबुद्धिरिति यावत् नास्ति, तथापि अनयोरभेदत्वेऽपि तरुणेन्दुशेखरे नवचन्द्रचूडे हरे भक्तिः मम अस्तीति शेषः हरमेवेष्ट-देवमाराधयामीत्यर्थः । वंशस्थविलं वृत्तं, वदन्ति वंशस्थविलं जतौ जराविति तल्लक्षणात् ॥ ७८ ॥

स्फुरदिति । कदा शान्तध्वनिषु निःशब्दासु रजनीषु स्फुरन्त्या स्फारया महत्या ज्योत्स्नया धवलितं तलं यस्य तथाभूते द्युसरितः गङ्गायाः क्वापि पुलिने सैकते सुखासीनाः सुखोपविष्टाः भवाभोगात् संसारप्रपञ्चात् उन्मग्नाः उत्तीर्णाः वयं अन्तर्गतेन बहुलेन प्रभूतेन वाष्पेण आकुलदृशः समाच्छन्नदृष्टयः शिवशिवशिवेति उच्चम् उच्चैः-स्वरेण उच्चरितं वचो यैः तथाभूताः सन्तः गास्यामः गानं करिष्यामः । शिखरिणीवृत्तम् ॥ ७९ ॥

वितीर्णे इति । तरुणकरुणया प्रबलकृपया आपूर्णं हृदयं येषां तथाभूताः अतिदयावन्तः इति यावत् सर्वस्वे सर्वस्मिन् धने वितीर्णे अर्थिभ्यो दत्ते सति विरसः दुःखदः यः परिणामः अम्बुधिरिव दुस्तर-त्वादिति भावः तद्गतं संसारं तरन्तः हरस्य चरणयोः चित्तमेव एकम् अद्वितीयं शरणम् आश्रयो येषां तादृशाः सन्तः पुण्यारण्ये विशुद्ध-

कदा वाराणस्याममरतटिनीरोधसि वसन्
वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम् ।
अये गौरीनाथ ! त्रिपुरहर ! शम्भो ! त्रिनयन !
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान् ॥ ८१ ॥
स्नात्वा गाङ्गैः पयोभिः शुचिकुसुमफलैरर्चयित्वा विभो ! त्वां
ध्येये ध्यानं निवेश्य क्षितिधरकुहरग्रावशय्यानिषण्णः ।
आत्मारामः फलाशी गुरुवचनरतस्त्वत्प्रसादात् स्मरारे !
दुःखं मोक्ष्ये कदाहं समकरचरणे पुंसि सेवासमुत्थम् ॥ ८२ ॥

कानने परिगतः परितः प्रसृतः शरच्चन्द्रस्य किरणो यासु तादृशीः त्रियामाः रजनीः नेष्यामः अतिवाहयिष्यामः । शिखरिणीवृत्तम् ॥ ८० ॥

कदेति । कदा कस्मिन् काले वाराणस्याम् अमरतटिन्याः गङ्गायाः रोधसि तीरे वसन् अधितिष्ठन् कौपीनं वसानः आच्छादयन् शिरसि अञ्जलिपुटं निदधानः स्थापयन् अये गौरीनाथ ! त्रिपुरहर ! शम्भो ! त्रिनयन ! प्रसीद प्रसन्नो भव इति क्रोशन् आलपन् दिवसान् निमिषमिव क्षणमिव नेष्यामि यापयिष्यामि । शिखरिणीवृत्तम् ॥ ८१ ॥

स्नात्वेति । हे विभो ! हे स्मरारे ! मदनान्तक ! गाङ्गैः पयोभिः जलैः स्नात्वा शुचिभिः विशुद्धैः कुसुमफलैः त्वाम् अर्चयित्वा ध्येये ध्यातव्ये त्वयीति शेषः ध्यानं निवेश्य गुरुवचनेषु रतः सम्मानितगुरुवचन इति यावत् क्षितिधरस्य पर्वतस्य कुहरे गुहायां ग्रावशय्यायां शिलाशयने निषण्णः स्थितः फलाशी फलभोजी तथा आत्मना रमत इति तथोक्तः सन् कदा तव प्रसादात् अहं समकरचरणे तुल्यहस्तपटशालिनि पुंसि मानवे मानवस्येत्यर्थः अधिकरणविवक्षया सप्तमी सेवासक्त्या दास्यजनितं दुःखं कदा मोक्ष्ये त्यक्ष्यामीत्यर्थः ॥ ८२ ॥

महीशय्या शय्या विपुलमुपधानं भुजलता
वितानञ्चाकाशं व्यजनमनुकूलोऽयमनिलः।
स्फुरन् दीपश्चन्द्रो विरतिवनितासङ्गमुदितः
सुखं शान्तः शेते मुनिरतनुभूतिर्नृप इव॥ ८३॥

अवधूतचर्य्या।

कौपीनं शतखण्डजर्ज्जरतरं कन्था पुनस्तादृशी
नैश्चिन्त्यं निरपेक्ष्यभैक्ष्यमशनं निद्रा श्मशाने वने।
स्वातन्त्र्येण निरङ्कुशं विहरणं स्वान्तं प्रशान्तं सदा
स्थैर्य्यं योगमहोत्सवेऽपि च यदि त्रैलोक्यराज्येन किम्॥ ८४

महीति। मही शय्या भूतलरूपं शयनस्थानं शय्या, भुजलता बाहुलता विपुलं महत् उपधानं शिरोरक्षणस्थानम्, आकाशं वितानं चन्द्रातपः, अनुकूलः अयं अनिलः पवनः व्यजनम्। स्फुरन् विराजन् चन्द्रः दीपः, विरतिर्विषयनिवृत्तिरेव वनिता कान्ता तस्याः सङ्गेन मुदितः अतनुर्महती भूतिरणिमादिसिद्धिः सम्पद् च यस्य तथाभूतः शान्तो मुनिः नृप इव राजेव सुखं शेते निद्राति। उपमालङ्कारः। शिख-रिणीवृत्तम्॥ ८३॥

कौपीनमिति। शतखण्डं शतच्छिद्रं जर्ज्जरतरं सुजीर्णमित्यर्थः कौपीनं कन्था, पुनः तादृशी शतच्छिद्रा जर्ज्जरतरा चेत्यर्थः, नैश्चिन्त्यं चिन्तारहित्यं निरपेक्ष्यम् अपेक्षारहितं यथालब्धमिति यावत् भैक्ष्यं भिक्षान्नम् अशनम् आहारः, श्मशाने वने अरण्ये च निद्रा शयन-विधिः, स्वातन्त्र्येण स्वेच्छया निरङ्कुशं निर्बाधं विहरणं भ्रमणं, स्वान्तं मनः सदा सततं प्रशान्तं प्रसन्नम्, इत्थं योगमहोत्सवेऽपि यदि स्थैर्य्यं चित्तैकाग्र्यं वर्त्तते इति शेषः त्रैलोक्यराज्येन त्रिभु-वनाधिपत्येन किम्? न किमपि प्रयोजनमस्तीत्यर्थः। शार्दूल-विक्रीडितं वृत्तम्॥ ८४॥

भूः पर्य्यङ्को निजभुजलता कन्दुकः खं वितानं
दीपश्चन्द्रो विरतिवनितालब्धसङ्गप्रमोदः ।
दिक्कान्ताभिः पवनचमरैर्वीज्यमानः समन्तात्
भिक्षुः शेते नृप इव भुवि त्यक्तसर्वस्पृहोऽपि ॥ ८५ ॥
ब्रह्माण्डो मण्डलीमात्रं को लोभोऽयं मनस्विनः ।
शफरीस्फुरितै नाब्धेः क्षुब्धता जातु जायते ॥ ८६ ॥
यदासीदज्ञानं स्मरतिमिरसंस्कारजनितं
तदा दृष्टं नारीमयमिदमशेषं जगदिति ।

भूरिति । भूः भूमितलं पर्य्यङ्कः खट्टा, निजभुजलता स्वबाहु-लता कन्दुकम् उपधानं, खम् आकाशं वितानं चन्द्रातपः, चन्द्रः दीपः, विरतिरेव वनिता कान्ता तस्याः सङ्गेन लब्धप्रमोदः प्राप्तसन्तोषः समन्तात् सर्वतः दिश एव कान्ताः नार्य्यः ताभिः पवना एव चमराः तैः वीज्यमानः संसेव्यमान इति यावत् त्यक्ता सर्वेषु स्पृहा येन तादृशोऽपि भिक्षुः भुवि पृथिव्यां नृप इव राजेव शेते निद्राति । मन्दाक्रान्तावृत्तम् ॥ ८५ ॥

ब्रह्माण्डमिति । ब्रह्माण्डं जगत् मण्डलीमात्रं प्रतिविम्बमात्रं काचोपममिति यावत्, मनस्विनः धीरस्य अत्र ब्रह्माण्डे काचोपमे अलीके इति भावः को लोभः ? नैवात्र लोभः सम्भवतीति भावः । शफरीणां स्फुरिते स्फुरणे सञ्चारे इति भावः अब्धेः समुद्रस्य क्षोभः विकारः जातु कदाचित् न जायते नैव भवतीत्यर्थः । ब्रह्माण्डविभ्रम-दर्शने मनस्विनां लोभः शफरीस्फुरणे अर्णवस्य क्षोभ इवेति विम्ब-प्रतिविम्बप्रतीतेर्दृष्टान्तालङ्कारः । तदुक्तं दर्पणे, दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिविम्बनमिति । अनुष्टुप्वृत्तम् ॥ ८६ ॥

यदेति । यदा स्मरतिमिरस्य कामान्धकारस्य संस्कारेण सञ्चा-रेणत्यर्थः जनितम् अज्ञानं मोहः आसीत् तदा इदम् अशेषं जगत्

इदानीमस्माकं पटुतरविवेकाञ्जनजुषां
समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ॥ ८७ ॥
रम्याश्चन्द्रमरीचयस्तृणवती रम्या वनान्तस्थली
रम्यं साधुसमासमागमसुखं काव्येषु रम्याः कथाः ।
कोपोपाहितवास्पबिन्दुतरलं रम्यं प्रियाया मुखं
सर्वं रम्यमनित्यतामधिगतं चित्ते न किञ्चित् पुनः ॥८८॥
भिक्षाशी जनमध्यसङ्गरहितः स्वायत्तचेष्टः सदा
हानादानविभिन्नवर्णरहितः कश्चित्तपस्वी स्थितः ।
रथ्याकीर्णविशीर्णजीर्णवसनैरास्यूतकन्थाधरो
निर्मानो निरहङ्कृतिः शमसुधाभोगैकबद्धस्पृहः ॥ ८९ ॥

नारीमयमिति दृष्टम् । इदानीं पटुतरः तीक्ष्णतरः विवेक एव अञ्जनं तत् जुषन्ति सेवन्ते इति तथोक्तानाम् अस्माकं समीभूता समदर्शिनी दृष्टिः त्रिभुवनमपि ब्रह्म मनुते मन्यते, सर्वं ब्रह्ममयं जगदिति ज्ञानं सञ्जातमिति भावः । शिखरिणीवृत्तम् ॥ ८७ ॥

रम्या इति । चन्द्रमरीचयः शशिकिरणाः रम्याः मनोहराः, तृणवती वनान्तस्थली काननमध्यप्रदेशः रम्या मनोहारिणी, साधूनां सभा तस्याः समागमसुखं संसर्गसुखं रम्यं, काव्येषु कथाः काव्यविषयिण्य आलापा इत्यर्थः रम्याः मनोज्ञाः, कोपेन उपाहिताभिः जनिताभिः वाष्पबिन्दुभिः अश्रुजलकणैः तरलम् आकीर्णमिति यावत् प्रियायाः मुखं रम्यं मनोज्ञम् । पुनः किन्तु अनित्यताम् अधिगतं सर्वं रम्यं वस्तु चित्ते मनसि न किञ्चित् किमपि न गण्यते इति शेषः । शार्दूलविक्रीडितं वृत्तम् ॥ ८८ ॥

भिक्षाशीति । भिक्षाशी भैक्ष्यभोजनः जनानां मध्ये सङ्गरहितः निःसङ्गः सदा स्वायत्ता स्वाधीना चेष्टा यस्य तादृशः दानादानयोः केनापि किञ्चिद्दाने किञ्चिद्दाने नेत्यर्थः विभिन्नेन वर्णेन रहितः

मातर्मेदिनि ! तात मारुत ! सखे ज्योतिः ! सुबन्धो जल !
भ्रातर्व्योम ! निबद्ध एष भवतामग्रे प्रणामाञ्जलिः ।
युष्मत्सङ्गवशोपजातसुकृतोद्रेकस्फुरन्निर्मल-
ज्वालापास्तसमस्तमोहमहिमा लीये परे ब्रह्मणि ॥ ९० ॥
स्वादिष्ठं मधुनो घृताच्च रसवत् प्रस्रवत्यक्षरं
दैवीवागमृतात्मनो रसवतस्तेनैव तृप्ता वयम् ।
कुक्षौ यावदिमे भवन्ति धृतये भिक्षाहृताः सक्तवः
तावद्ग्राम्यकृतार्जनैर्नहि धनैर्वृत्तिं समीहामहे ॥ ९१ ॥

लाभालाभयोरविकृतचित्त इत्यर्थः रथ्यासु पथिषु आकीर्णैः परित्यक्तैरिति यावत् विशीर्णैः छिन्नैः जीर्णैः निःसारैरित्यर्थः वसनैः आस्तृता या कन्था तस्या धरः निर्माणः सम्माननिस्पृहः निरहङ्कृतिरहङ्काररहितः शम एव सुधा तस्याः भोगे आस्वादे एकं केवलं बद्धा स्पृहा येन तथाभूतः कश्चित् विरक्त इत्यर्थः तपस्वी स्थितः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ८९ ॥

मातरिति । हे मातः मेदिनि ! पृथिवि ! तात पितः मारुत ! वायो ! सखे ! ज्योतिः ! हे सुबन्धो जल ! हे भ्रातः व्योम आकाश ! भवतां पञ्चानां भूतानामिति भावः अग्रे एषः प्रणामाञ्जलिः निबद्धः रचितः कृताञ्जलिर्युष्मान् प्रणमामीत्यर्थः । युष्माकं सङ्गवशेन संसर्गहेतुना उपजातं सञ्चितं यत् सुकृतं पुण्यं तस्य य उद्रेकः उदयः तस्य स्फुरन्त्या निर्मलया ज्वालया अपास्तः विनष्टः समस्तः मोहस्य महिमा यस्य तादृशोऽहं परे ब्रह्मणि परमात्मनि लीये लयं गच्छामि । शार्दूलविक्रीड़ितं वृत्तम् ॥ ९० ॥

स्वादिष्ठमिति । मधुनः घृताच्च स्वादिष्ठम् अधिकस्वादं रसवत् सरसं रसवतः परस्मात् दैवीवागमृतात्मनः सकाशात् यत् अक्षरम् ओङ्काररूपं प्रस्रवति प्रच्योतति वयं तेनैव अक्षरेण तृप्तिं गताः ।

निवृत्ता भोगेच्छा पुरुषबहुमानो विगलितः
समानाः स्वर्याताः सपदि सुहृदो जीवितसमाः ।
शनैर्यष्ट्युत्थानं घनतिमिररुद्धे च नयने
अहो भ्रष्टः कायस्तदपि मरणोपायचकितः ॥ ८२ ॥

हिंसाशून्यमयत्नलभ्यमशनं वायुः कृतो वेधसा
व्यालानां पशवस्तृणाङ्कुरभुजः पुष्टाः स्थलीशायिनः ।
संसारार्णवलङ्घनक्षमधियां वृत्तिः कृता सा नृणां
यामन्वेषयतां प्रयान्ति सहसा सर्वे समाप्तिं गुणाः ॥८३॥

अतः कुक्षौ जठरे इमे भिक्षया आहृताः अल्पाः शक्तवः यावत् तृप्तये सन्तोषाय भवन्ति, तावत् दास्येन सेवया कृतम् अर्जनं येषां तैः धनैः वृत्तिं जीविकां न हि समीहामहे नैव चेष्टामहे । शार्दूलविक्रीडितं वृत्तम् ॥ ८१ ॥

निवृत्तेति । भोगेच्छा भोगवासना निवृत्ता, पुरुषोऽयमिति बहुमानः विगलितः, समानाः समवयसः जीवितसमाः प्राणसमाः सुहृदः सपदि सहसा स्वर्याताः मृता इति शेषः, शनैः मन्दं मन्दं यष्ट्या यष्ट्यवलम्बनेन उत्थानं, नयने घनतिमिरेण निविडान्धकारेण रुद्धे दर्शनशक्तिहीने इति भावः । अहो आश्चर्यं भ्रष्टः नष्टः तदपि एतादृशवस्थायामपि मरणोपायात् मरणसाधनात् रोगादे-रिति भावः चकितः शङ्कितः । शिखरिणीवृत्तम् ॥ ८२ ॥

हिंसेति । वेधसा ब्रह्मणा व्यालानां सर्पाणां वायुः हिंसा-शून्यमयत्नलभ्यम् अशनम् आहारः कृतः । पशवस्तृणाङ्कुरभुजः स्थलीशायिनः वनभूमिशयनाः पुष्टाः वृद्धिं गताः । संसार एव अर्णवः तस्य लङ्घने क्षमा धीः येषां तादृशानां नृणां सा वृत्तिर्जीविका कृता, यां वृत्तिम् अन्वेषयतां नृणां सर्वे गुणाः सहसा समाप्तिं प्रयान्ति गच्छन्ति सर्वगुणक्षयो भवतीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ ८२ ॥

कृशः काणः खञ्जः श्रवणरहितः पुच्छविकलो
व्रणी पूयक्लिन्नः कृमिकुलशतैरावृततनुः ।
क्षुधाक्षामो जीर्णः बहुलमृत्कपालार्दितगलः
शुनीमन्वेति श्वा हतमपि निहन्त्येव मदनः ॥ ९४ ॥

मृत्पिण्डो जलरेखया वलयितः सर्वोऽप्ययं नन्वणुः
स्वयीकृत्य तमेव संयुगशतैराज्ञां गणाः भुञ्जते ।
दद्यन्ते ददतोऽथवा किमपरे क्षुद्रा दरिद्रा भृशं
धिग्धिक् कापुरुषाधमान् धनलवं तेभ्योऽपि वाञ्छन्ति ये ९५

कृश इति । कृशः क्षीणः काणः दृष्टिहीनः खञ्जः चरणहीनः श्रवणरहितः कर्णेन्द्रियवर्जितः पुच्छविकलः लाङ्गूलहीनः व्रणी क्षतदेहः पूयक्लिन्नः गलत्पूयः कृमिकुलशतैः क्षुद्रकीटसङ्घैः आवृततनुः आचितकलेवरः क्षुधया क्षामः दुर्बलः जीर्णः स्थविरः बहुलेन मृत्कपालेन अर्दितः आहतः गलो यस्य तथाभूतः श्वा कुक्कुरः शुनीं कुक्कुरीम् अन्वेति अनुसरति, तथाहि मदनः कामः हतमपि निहन्त्येव नाशयत्येव । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । शिखरिणीवृत्तम् ॥ ९४ ॥

मृत्पिण्ड इति । सर्वोऽपि अयं मृत्पिण्डः जलरेखया वलयितः वेष्टितः समुद्रवेष्टिता पृथिवीति भावः अणुः क्षुद्रः ननु अतितुच्छ एवेत्यर्थः । राज्ञां गणाः नृपतयः संयुगशतैः संग्रामशतैः तमेव मृत्पिण्डं स्वीयीकृत्य आत्मसात्कृत्य भुञ्जते । ददतः एतद्दाति शेषः जनाः दद्यन्ते क्लेशमनुभवन्तीत्यर्थः कर्मकर्त्तरि लट् । अस्य सामान्यस्य मृत्पिण्डस्य दाने लोकाः नितरामार्त्ता भवन्तीति भावः । अथवा अपरे भृशं क्षुद्रा दरिद्राः किम् ? किं वक्तव्यं क्षुद्राणां दरिद्राणामिति भावः ये तेभ्योऽपि दाने कष्टमनुभवद्भ्योऽपि धनलवं स्वल्पकिञ्चिद्धनं वाञ्छन्ति तान् कापुरुषाधमान् धिक् धिक् पुनः पुनः

ददतु ददतु गालीर्गालिमन्तो भवन्तः
वयमपि तदभावाद्गालिदानेऽसमर्थाः।
जगति विदितमेतद्दीयते विद्यमानं
न हि शशकविषाणं कोऽपि कस्मै ददाति॥ ९६॥

पुरा विद्वत्तासीदमलिनधियां क्लेशहतये
गता कालेनासौ विषयसुखसिद्धौ विषयिणाम्।
इदानीं सम्प्रेक्ष्य क्षितिलवभुजः शास्त्रविमुखान्
अहो कष्टं सापि प्रतिदिनमधोऽधः प्रविशति॥ ९७॥

निन्दामीत्यर्थः। धिङ्निर्भर्त्सननिन्दयोरित्यमरः। शार्दूलविक्रीडितं वृत्तम्॥ ९५॥

ददत्विति। गालिमन्तः कटुवादिनः भवन्तः गालीः ददतु ददतु दुर्वाक्यानि वदन्तु वदन्त्वित्यर्थः। वयमपि वयन्तु तदभावात् गालिमत्ताभावात् गालिदाने असमर्थाः गालीः न दद्म इत्यर्थः। जगति पृथिव्याम् एतत् विदितं ज्ञातं सर्वैर्जनैरिति शेषः यत् विद्यमानं वस्तु दीयते न तु अविद्यमानमिति भावः ततश्च गालिवचनस्याविद्यमानत्वात् तद्दानं अशक्यमेवेति भावः, कोऽपि जनः कस्मै अपि शशकविषाणं शशशृङ्गं न हि ददाति दातुं नैव शक्नोतीत्यर्थः तस्याभावादिति भावः। मालिनीवृत्तम्॥ ९६॥

पुरेति। पुरा पूर्वम् अमलिनधियां निर्मलमतीनां क्लेशहतये क्लेशनाशाय विद्वत्ता पाण्डित्यम् आसीत् विद्यामेव क्लेशनाशिनीं पूर्वे अमन्यन्तेत्यर्थः, कालेन असौ विद्वत्ता विद्या विषयिणां विषयसुखरतानां तेषां जनानां विषयसुखस्य सिद्धौ सिद्ध्यर्थं गता चलिता, विषयसुखार्थमेव न तु आध्यात्मिकादितापत्रयनाशार्थं विद्यामिदानीं जना उपार्जयन्तीति भावः। इदानीं क्षितिलवभुजः क्षुद्रभूपालान् शास्त्रविमुखान् अगणितशास्त्रानित्यर्थः सम्प्रेक्ष्य दृष्ट्वा सापि अर्थकरी विद्यापि प्रतिदिनम् अधः अधः प्रविशति गच्छति।

स जातः कोऽप्यासीन्मदनरिपुणा मूर्ध्नि धवलं
कपालं यस्योच्चैर्विनिहितमलङ्कारविधये ।
नृभिः प्राणत्राणप्रवणमतिभिः कैश्चिदधुना
नमद्भिः कः पुंसामयमतुलदर्पज्वरभरः ॥ ९८ ॥

यदा किञ्चिज्ज्ञोऽहं द्विप इव मदान्धः समभवं
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ।
यदा किञ्चित् किञ्चिद्गुरुजनसकाशादधिगतं
तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ॥९९॥

व्यङ्गो इति खेदे कष्टम् अतिक्षोभविषयमेतदिति भावः । शिखरिणी-वृत्तम् ॥ ९७ ॥

स इति । मदनरिपुणा हरेण अलङ्कारविधये शोभार्थं यस्य मूर्ध्नि शिरसि उच्चैः धवलम् अतिशुभ्रं कपालं विनिहितं दत्तं शङ्करासक्तमनसो हि कपालं शिरसि निधाय पर्य्यटन्तीति भावः, स कोऽपि जातः आसीत् तस्यैव जन्म सफलमिति भावः । अधुना प्राणानां त्राणे रक्षणे प्रवणा मतिर्येषां तादृशैः अतएव नमद्भिः प्रणतैः कैश्चित् नृभिः मानवैर्हेतुभिरित्यर्थः पुंसाम् अयम् अतुलो महान् दर्पज्वरस्य गर्वजनितसन्तापस्य भरः अतिशयः कः? नराः प्राणत्राणार्थं सविनयं यान् याचन्ते ते नितरामभिमानिनो भवन्तीति भावः । शिखरिणीवृत्तम् ॥ ९८ ॥

यदेति । यदाहं किञ्चिज्ज्ञः यत्किञ्चिज्ज्ञानसम्पन्नः, तदा मदान्धः मदमत्तः द्विप इव हस्तीव समभवम् । तदा सर्वज्ञः अस्मि इति शिवेति शेषः मम मनः अवलिप्तं गर्वितम् अभवत् । ततश्च यदा गुरुजनसकाशात् किञ्चित् किञ्चित् अधिगतं शिक्षितमित्यर्थः तदा मूर्खः अस्मीति मे मम मदः ज्वर इव व्यपगतः विनष्टः । शिखरिणी-वृत्तम् ॥ ९९ ॥

माने म्लायिनि खण्डिते च वसुनि व्यर्थे प्रयातेऽर्थिनि
क्षीणे बन्धुजने गते परिजने नष्टे शनैर्यौवने।
युक्तं केवलमेतदेव सुधियां यज्जह्नुकन्यापयः-
पूतग्रावगिरीन्द्रकन्दरदरीकुञ्जे निवासः क्वचित् ॥१००॥

इति श्रीभर्तृहरिविरचितं वैराग्यशतकं समाप्तम्।

---

मान इति। म्लायिनि गौरवशालिनि माने खण्डिते क्षीणे इत्यर्थः, व्यर्थे निरर्थके वसुनि धने अर्थिनि याचके प्रयाते अर्थिभाग्न्ते इति भावः, बन्धुजने मित्रवर्गे क्षीणे क्षयं गते, परिजने पुत्रकलत्रादौ गते विनष्टे, शनैः क्रमेण यौवने नष्टे गलिते सति, सुधियां सुविज्ञानां एतदेव केवलं युक्तम् उचितं यत् क्वचित् जह्नुकन्यायाः गङ्गायाः पयसा जलेन पूताः पवित्रीकृताः ग्रावाणः शिलाः यस्य तथाभूतस्य गिरीन्द्रस्य हिमवतः कन्दरदरीकुञ्जे गुहायां गह्वरवर्त्तिकानने वा निवासः अवस्थानम्। शार्दूलविक्रीडितं वृत्तम् ॥ १०० ॥

इति बि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण
विरचिता वैराग्यशतकव्याख्या समाप्ता।

---

# सूर्य्यशतकम् ।

---

## रश्मिवर्णनम् ।

जम्भारातीभकुम्भोद्भवमिव दधतः सान्द्रसिन्दूररेणुं
रक्ताः सक्तैरिवौघैरुदयगिरितटीधातुधाराद्रवस्य ।
आयान्त्या तुल्यकालं कमलवनरुचेवारुणा वो विभूत्यै
भूयासुर्भासयन्तो भुवनमभिनवा भानवो भानवीयाः ॥ १ ॥
भक्तिप्रह्वाय दातुं मुकुलपुटकुटीकोटरक्रोड़लीनां
लक्ष्मीमाक्रष्टुकामा इव कमलवनोद्घाटनं कुर्वते ये ।

जम्भेति । जम्भस्य दैत्यविशेषस्य अरातिः शत्रुरिन्द्रः तस्य इभः हस्ती ऐरावत इत्यर्थः तस्य कुम्भोद्भवं कुम्भजं सान्द्रं घनं सिन्दूररेणुं सिन्दूररजः दधतः इव धारयन्त इव उदयगिरेः उदयाचलस्य तटीषु सानुषु या धातूनां गैरिकादीनां धारा श्रेणिः तस्याः द्रवस्य निस्रावस्य ओघैः समूहैः सक्तैः संलग्नैरिव रक्ताः रक्तवर्णाः तुल्यकालं समकालम् उदयसमभावमित्यर्थः आयान्त्या आगच्छन्त्या स्फुरन्त्येति यावत् कमलवनरुचेव पद्मवनकान्त्येव अरुणाः रक्ताः भुवनं जगत् भासयन्तः प्रकाशयन्तः अभिनवाः भानवीयाः सौराः भानवः किरणाः वः युष्माकं विभूत्यै भूयासुः भवन्त्वित्यर्थः । स्रग्धरावृत्तमस्मिन् सन्दर्भे । म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति तल्लक्षणात् । अत्र चतुर्थपादे एकस्य भकारस्य असकृत् साम्यात् नवयोः अनेकधा असकृत् साम्यात् वृत्त्यनुप्रासोऽलङ्कारः । तदुक्तं दर्पणे । अनेकस्यैकधा साम्यमसकृद्वाप्यनेकधा । एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते इति ॥ १ ॥

भक्तीति । ये भक्तिप्रह्वाय भक्तिप्रणताय मुकुलपुटं मुकुलावरणम्

कालाकारान्धकारानमपतितजगत्साध्वसध्वंसकल्याः
कल्याणं वः क्रियासुः किसलयरुचयस्ते करा भास्करस्य ॥२॥
गर्भेष्वम्भोरुहाणां शिखरिषु च शिताग्रेषु तुल्यं पतन्तः
प्रारम्भे वासरस्य व्युपरतिसमये चैकरूपास्तथैव।
निष्पर्य्यायं पतन्तस्त्रिभुवनभवनप्राङ्गणे पान्तु युष्मान्
उष्माणं सन्तताध्वश्रमजमिव भृशं बिभ्रतो ब्रध्नपादाः ॥३॥
प्रभ्रश्यत्युत्तरीयत्विषि तमसि समुद्वीक्ष्य वीतावृतीन् प्राग्
जन्तूंस्तन्तून् यथा यानतनु वितनुते तिग्मरोचिर्मरीचीन्।

एव कुटी क्षुद्रगृहं तस्याः कोटरस्य अभ्यन्तरस्य क्रोडे उत्सङ्गे लीनां स्थितामिति भावः लक्ष्मीं श्रियं दातुम् आक्रष्टुं पटीयः कामो येषां अधःमूला इव कमलानां वनस्य उद्घाटनं कुर्व्वते कमलवनं विकाशय-न्तीति भावः, कालाकाराः कृष्णवर्णाः ये अन्धकाराः तेषाम् आननेषु मुखेषु पतितस्य जगतः यत् साध्वसं भीतिः, भीतिर्भीः साध्वसं भय-मित्यमरः। तस्य ध्वंसे खण्डने कल्याः क्षमाः शक्ता इति यावत् किसलयरुचयः नवपल्लवप्रभाः ते प्रसिद्धाः भास्करस्य सूर्य्यस्य कराः मयूखाः वः युष्माकं कल्याणं मङ्गलं क्रियासुः कुर्व्वन्त्वित्यर्थः ॥ २ ॥

गर्भेष्विति। अम्भोरुहाणां कमलानां गर्भेषु मध्येषु शिखरिषु पर्व्वतेषु च शितं तीक्ष्णम् अग्रं येषां तादृशाः ये इषवः शराः तत्तुल्यं यथा तथा पतन्तः वासरस्य दिवसस्य प्रारम्भे व्युपरतिसमये अवदान-समये च तथैव एकरूपाः तुल्यवर्णाः रक्ता इति भावः त्रिभुवनमेव भवनं गृहं तस्य प्राङ्गणे चत्वरे निष्पर्य्यायम् अक्रमं यथा तथा पतन्तः सन्ततः अविच्छिन्नः यः अध्वश्रमः तस्मात् जायते इति तथोक्तमिव भृशम् अत्यर्थम् उष्माणम् उत्तापं बिभ्रतः धारयन्तः ब्रध्नस्य सूर्य्यस्य पादाः रश्मयः युष्मान् पान्तु रक्षन्तु ॥ ३ ॥

प्रभ्रश्यतीति। तिग्मरोचिः तीक्ष्णरश्मिः सूर्य्यः प्राक् पूर्व्वं तमसि

ते सान्द्रीभूय सद्यः क्रमविशददशाशादशालीविशालं
शश्वत्सम्पादयन्तोऽम्बरममलमलं मङ्गलं वो दिशन्तु ॥ ४ ॥
न्यक्कुर्वन्नोषधीशे मुषितरुचि शुचेवौषधीः प्रोषिताभा
भास्वद्ग्रावोद्गतेन प्रथममिव कृताभ्युद्गतिः पावकेन ।
पक्षच्छेदव्रणासृक्स्रुत इव दृषदो दर्शयन् प्रातरद्रेः
आताम्रस्तीव्रभानोरनभिमतनुदे स्ताद्गभस्त्युद्गमो वः ॥ ५ ॥

उदयमात्र एवेत्यर्थः उत्तरीयवत्त्विषि लोकानाम् उत्तरीयवसनमिवाचरन्तीति यावत् तमसि तिमिरे प्रभ्रश्यति विगलति सति वीतावृतीन् आवरणशून्यान् उत्तरीयहीनानिति भावः जन्तून् प्राणिनः समुद्वीक्ष्य दृष्ट्वा तन्तून् यथा सूत्राणीव यान् मरीचीन् मयूखान् अतनु अधिकं यथा तथा वितनुते विस्तारयति प्राणिनामावरणार्थमिति भावः । ते मरीचयः सद्यः क्षणेनैव सान्द्रीभूय घनीभूय क्रमेण विशदानां प्रकटानां दशानाम् आशानाम् दिशां दशभिः आलीभिर्विभागैर्विशालम् विस्तीर्णम् अम्बरम् आकाशम् अमलं निर्मलं समुज्ज्वलमित्यर्थः सम्पादयन्तः सन्तः शश्वत् सततं वः युष्माकं मङ्गलम् अलम् अतिशयेन दिशन्तु विदधतु । अत्र तृतीयचतुर्थयोः पादयोर्वृत्त्यनुप्रासः ॥ ४ ॥

न्यगिति । ओषधीशे चन्द्रे मुषितरुचि अपहृतकिरणे सति शुचेव शोकेनेव पतिवियोगादिति भावः प्रोषिताभाः निष्प्रभा इत्यर्थः ओषधीः तृणज्योतिर्लताः याश्चन्द्रोदये ज्वलन्तीति भावः । न्यक्कुर्वन् अवमानयन्नित्यर्थः भास्वद्ग्राव्णः सूर्यकान्तात् उद्गतेन पावकेन अग्निना प्रथमम् आदावेव कृता अभ्युद्गतिः अभिनन्दनमिति भावः यस्य तथोक्त इव प्रातः प्रातःकाले अद्रेः पर्वतस्य दृषदः शिलाः पक्षयोः छेदेन यो व्रणः क्षतं तस्मात् यानि असृञ्जि रक्तानि निर्गलितानीति भावः तानि स्रवन्तीति तथाविधाः दर्शयन् आताम्रः अतिरक्तः तीव्रभानोः सूर्यस्य गभस्तीनाम् उद्गमः प्रकाशः वः युष्माकम् अनभिमतनुदे अमङ्गलनाशाय स्तात् भवतु ॥ ५ ॥

शीर्णघ्राणाङ्घ्रिपाणीन् व्रणिभिरपघनैर्घर्घराव्यक्तघोषान्
दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन् यः ।
घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्ते-
र्दत्तार्घाः सिद्धसङ्घैर्विदधतु घृणयः शीघ्रमंहोविघातम् ॥ ६॥

बिभ्राणा वामनत्वं प्रथममथ तथैवांशवः प्रांशवो वः
क्रान्ताकाशान्तरालास्तदनु दश पूरयन्तस्ततोऽपि ।
ध्वान्तादाच्छिद्य देवद्विष इव बलितो विश्वमाश्वश्नुवाना-
श्छ्रायाण्युच्छ्रायहेलावहसितहरयो हारिदश्वा हरन्तु ॥ ७ ॥

शीर्णेति । य एकः शीर्णाः चयं गताः घ्राणं नासिका अङ्घ्री चरणौ पाणी हस्तौ च येषां तान् घर्घराः अव्यक्ताः अस्फुटाः घोषाः स्वरा येषां तथोक्तान् अघौघैः पापसमूहैः दीर्घम् आयतं यथा तथा आघ्रातान् आक्रान्तानित्यर्थः जनानिति शेषः, अपघनैः मेघावरण-शून्यैः घृणिभिः किरणैः उल्लाघयन् निरुजान् कुर्वन्, उल्लाघो निरुज इति वैयाकरणाः । पुनरपि घटयति स्वस्थान् करोतीत्यर्थः अन्त-र्द्विगुणा घना सान्द्रा या घृणा दया तस्याः निघ्ना अधीना दयार्द्रेति यावत् निर्विघ्ना निरन्तराया वृत्तिर्वर्त्तनं यस्य तथाभूतस्य तस्य घर्मांशोः सूर्य्यस्य सिद्धसङ्घैः देवयोनिविशेषनिचयैः योगिवृन्दैर्वा दत्तम् अर्घं येभ्यः तादृशाः घृणयः किरणाः शीघ्रम् अंहोविघातं दुरितक्षयं विद-धतु कुर्वन्तु ॥ ६ ॥

बिभ्राणा इति । प्रथमं वामनत्वं बिभ्राणाः स्वल्पा इति भावः, अथ अनन्तरं क्रमेणेति भावः प्रांशवः उन्नताः, तथैव तदनु तदनन्तरं क्रान्तम् आकाशस्य अन्तरालं मध्यं यैः तथाविधाः, ततोऽपि तदनन्तर-मपि दश दिशः पूरयन्तः आच्छादयन्तः विश्वं जगत् देवद्विषः असु-रात् बलितः बलिदैत्यादिव ध्वान्तात् अन्धकारात् आच्छिद्य आहृत्य आशु शीघ्रं अश्नुवानाः व्याप्नुवानाः उच्छ्रायस्य औन्नत्यस्य हेलया

उद्गाढेनारुणिम्ना विदधति बहुलं येऽरुणस्यारुणत्वं
मूर्द्धोद्धूतौ खलीनक्षतरुधिररुचो ये रथाश्वाननेषु ।
शैलानां शेखरत्वं श्रितशिखरिशिखास्तन्वते ये दिशन्तु
प्रेङ्खन्तः खे खरांशोः खचितदिनमुखास्ते मयूखाः सुखं वः ॥८॥
दत्तानन्दाः प्रजानां समुचितसमयाकृष्टसृष्टैः पयोभिः
पूर्वाह्णे विप्रकीर्णा दिशि दिशि विरमत्यह्नि संहारभाजः ।
दीर्घांशोर्दीर्घदुःखप्रभवभयोदन्वदुत्तारनावो
गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु ॥९॥

अवहसिताः हरयः अश्वाः यैः तथाभूताः हारिदश्वाः हरिदश्वस्य सूर्य्यस्य इमे इति हारिदश्वाः सौरा इत्यर्थः अंशवः किरणाः कक्ष्याणि क्लेशान् हरन्तु नाशयन्तु । उपमालङ्कारः ॥ ७ ॥

उद्गाढेनेति । ये उद्गाढेन उत्कटेन अरुणिम्ना लौहित्येन अरुणस्य सौरसारथेः बहुलम् अत्यन्तम् अरुणत्वं रक्तत्वं विदधति जनयन्ति, ये रथस्य सूर्य्यरथस्य अश्वानाम् आननेषु मूर्ध्नां शिरसाम् उद्धूतौ उन्नमने खलीनक्षतेषु कविकाजनितव्रणेषु रुधिरस्येव रुक् प्रभा येषां तथाभूताः, ये श्रिताः आक्रान्ताः शिखरिणां पर्व्वतानां शिखाः यैः यथाभूताः, सन्तः शैलानां पर्व्वतानां शेखरत्वं शिरोभूषणत्वं तन्वते विस्तारयन्ति खे आकाशे प्रेङ्खन्तः स्फुरन्तः खचितम् अलङ्कृतं दिनमुखं दिवसारम्भः यैः तादृशाः खरांशोः तीक्ष्णरश्मेः ते मयूखाः वः युष्माकं सुखं दिशन्तु ददतु ॥ ८ ॥

दत्तानन्दा इति । समुचिते समये यथासमये इति यावत् आकृष्टानि आहृतानि सञ्चितानीति यावत् ततश्च सृष्टानि तैः पयोभिर्जलैः प्रजानां जनानां दत्तानन्दाः आनन्ददायिनः, आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति शास्त्रात् । पूर्वाह्णे प्रातःकाले दिशि दिशि विप्रकीर्णाः विक्षिप्ताः, अह्नि दिवसे विरमति अपगच्छति सति

बन्धध्वंसैकहेतुं शिरसि नतिवशाबद्धसन्ध्याञ्जलीनां
लोकानां ये प्रबोधं विदधति विपुलाम्भोजषण्डाशयेव।
ते युष्माकं स्वचित्तप्रथितपृथुतरप्रार्थनाकल्पवृक्षाः
कल्पन्तां निर्विकल्पं दिनकरकिरणाः केतवः कल्मषस्य॥१०॥
धीरैरायोधनायापदि सपदि करालम्बभूताः प्रपाते
तत्त्वालोकैकदीपास्त्रिदिवपतिपुरः प्रस्थितौ वीथ्य एव।

संहारभाजः सङ्कुचन्त इति यावत् दीर्घांशोः सूर्य्यस्य दीर्घात् दुःखात् प्रभवतीति तथोक्तं यत् भयं तदेव उदन्वान् समुद्रः तस्मात् उत्तारे नावः तरण्यः पावनाः पवित्रहेतवः ताः प्रसिद्धाः गावः किरणाः, स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्या स्त्रियां पुंसि गौरित्यमरः। वः युष्माकं परम् अतीव अपरिमितां प्रीतिम् उत्पादयन्तु जनयन्तु॥ ९॥

बन्धेति। ये विपुलं महत् यत् अम्भोजषण्डं कमलसङ्कुलं तस्य आशयेव बोधेनेवेति भावः शिरसि नतिवशेन प्रणामवशात् आबद्धः रचितः सन्ध्यायाम् अञ्जलिर्यैः तेषां लोकानां बन्धध्वंसस्य संसारबन्धननिराकरणस्य हेतुं साधनं प्रबोधं जागरणं ज्ञानञ्च विदधति जनयन्ति, स्वस्य चित्ते प्रथिता विस्तृता पृथुतरा महती या प्रार्थना कामना तस्याः कल्पवृक्षाः पूरका इति भावः कल्मषस्य पापस्य केतवः उत्पातग्रहविशेषाः संहारका इति भावः ते दिनकरस्य किरणाः युष्माकं निर्विकल्पं निःसंशयं ज्ञानमिति शेषः कल्पन्तां विदधतु इति यावत्॥ १०॥

धीरैरिति। धीरैः विद्वद्भिरायोधनाय संग्रामाय आपदि प्रपाते सपदि झटिति करालम्बभूताः हस्तावलम्बनभूताः आश्रयभूता इति भावः धीरैः सह विद्याविवादे भगवत्सूर्य्यरश्मिप्रसादे ज्ञानचक्षुषः समुदयादिति भावः। तत्त्वस्य शिवादिचतुर्भिंशत्यात्मकस्य

निर्वाणीयोयोगिय्योगिप्रशमनिजतनुद्वारि वेत्रायमाणा-
स्त्रायन्तां तीव्रभानोर्दिवसमुखसुखा रश्मयः कल्मषाद्वः ॥११॥
प्राचि प्रागाचरन्त्योऽनतिचिरमचले चारुचूडामणित्वं
कुर्वन्त्यो रोचनाम्बु प्रचुरमिव दिशामुच्चकैरर्चनाय ।
चाटूक्तैश्चक्रनाम्नां चतुरमविचलैर्लोचनैरर्च्यमानाः
चेष्टन्तां चिन्तितानामुचितमचरमाश्चण्डरोचीरुचो वः ॥१२॥
एकं ज्योतिर्दृशौ द्वे त्रिजगति गदितान्यब्जजास्यैश्चतुर्भि-
र्भूतानां पञ्चमं यान्यलमृतुषु तथा षट्सु नानाविधानि ।

आलोके दर्शने एकटीपाः अद्वितीयप्रदीपाः त्रिदिवप्रतिपुरः स्वर्गनग-
रस्य प्रस्थितौ प्रस्थाने वीथ्य एव पन्थान एव निर्वाणे मुक्तौ उद्युयो-
गिनः ये योगिनः तेषां प्रशमः प्रशान्तिरेव निजा तनुः तस्या द्वारि
वेत्रायमाणाः विघ्ननिवारणार्थं दौवारिकहस्तधृतदण्डवदाचरन्त इति
भावः तीव्रभानोः सूर्य्यस्य दिवसमुखे प्रातःकाले सुखाः सुखजनकाः
रश्मयः किरणाः वः युष्मान् कल्मषात् पापात् त्रायन्तां रक्षन्तु ॥११॥

प्राचीति । प्राक् प्रथमं प्राचि अचले पूर्वपर्वते उदयाचले इति
यावत् अनतिचिरं तत्क्षणादिति यावत् चारुचूडामणित्वं मनो-
हरशिरोरत्नवत्त्वम् आचरन्त्यः सम्पादयन्त्यः दिशाम् उच्चकैरतिशयेन
अर्चनाय पूजनाय प्रचुरं समधिकं रोचनाम्बु गोरोचनारसमिव
कुर्वन्त्यः क्षिपन्त्यः चक्रनाम्नां चक्रवाकानां रात्रिविरहेण क्लान्ता-
नामिति भावः चाटूक्तैः प्रियोक्तिषु स्तुतिष्विति भावः उत्कैः उत्-
सुकैः अविचलैः धीरैः लोचनैः नेत्रैः चतुरं सुभगं यथा तथा अर्च्य-
मानाः अचरमाः नवाः चण्डरोचिषः सूर्य्यस्य रुचः मयूखाः वः
युष्माकं चिन्तितानाम् अभिलषितानाम् उचितं चेष्टन्ताम् अभिलषि-
तम् पूरयन्त्वित्यर्थः ॥ १२ ॥

एकमिति । यानि चतुर्भिः अब्जस्य ब्रह्मणः आस्यैर्मुखैः एकं

युष्माकं तानि सप्तत्रिदशमुनिनुतान्यष्टदिग्भाञ्जि भानोः
यान्ति प्राह्णे नवत्वं दश दधतु शिवं दीधितीनां शतानि १२
आवृत्तिभ्रान्तविश्वाः श्रममिव दधतः शोषिणः स्वोष्मणेव
ग्रीष्मे दावाग्नितप्ता इव रसमसकृद्ये धरित्र्या धयन्ति ।
ते प्रावृष्यात्तपानातिशयरुज इवोद्वान्ततोया हिमर्त्तौ
मार्त्तण्डस्य प्रचण्डाश्चिरमशुभभिदेऽभीषवो वो भवन्तु ॥ १४॥
तन्वाना दिग्वधूनां समधिकमधुरालोकरम्यामवस्था-
मारूढप्रौढिलेशोत्कलितकपिलिमालङ्कृतिः केवलैव ।

ज्योतिः द्वे दृशौ तथा भूतानां क्षित्यादीनां पञ्चमं त्रिजगति मदितानि उक्तानि, षट्सु ऋतुषु हेमन्तादिषु चलं सम्यक् नानाविधानि विविधरूपाणि सप्तत्रिदशमुनिभिः सप्तर्षिभिः नुतानि स्तुतानि, स्तवः स्तोत्रं स्तुतिर्नुतिरित्यमरः । अष्टदिग्भाञ्जि अष्टदिक्पूरकाणि प्राह्णे प्रातः नवत्वं यान्ति गच्छन्ति तानि भानोः सूर्य्यस्य दीधितीनां दश शतानि सहस्राणीत्यर्थः युष्माकं शिवं मङ्गलं दधतु कुर्वन्तु ॥ १२ ॥

आवृत्तीति । ये आवृत्त्या भ्रमणेन भ्रान्तं प्रदक्षिणीकृतं विश्वं जगत् यैः तथोक्ताः अतएव श्रमं दधत इव श्रमार्त्ता इव उष्मणेव उत्तापेनैव शोषिणः शोषकाः विश्वस्येति शेषः, तथा दावाग्निना तप्ता इव असकृत् पुनः पुनः धरित्र्याः पृथिव्याः रसं धयन्ति पिबन्ति, धेट पाने इत्यस्मात् खट् । प्रावृषि वर्षाकाले आत्ताः गृहीतपानातिशयेन अधिकपानेन रुजः रोगाः यैः तथाभूता इव उद्वान्ततोयाः दत्तजलाः हिमर्त्तौ हेमन्ते प्रचण्डाः ते मार्त्तण्डस्य अभीषवः रश्मयः, अभीषुः प्रग्रहे रश्मावित्यमरः । वः युष्माकं चिरम् अशुभभिदे अमङ्गलनाशाय भवन्तु ॥ १४ ॥

तन्वाना इति । दिश एव वध्वः तासां समधिकमधुरं यथा तथा आलोकेन उद्द्योतेन रमणीयत्वैः रम्याम् अवस्थां तन्वाना विस्तारयन्ती

उज्जृम्भाम्भोजनेत्रद्युतिनि दिनमुखे किञ्चिदुद्भिद्यमाना
श्मश्रुश्रेणीव तासां दिशतु दशशती शर्म घर्मत्विषो वः ॥१५॥
मौलीन्दोर्मैष मोषीद्द्युतिमिति वृषभाङ्केन यः शङ्किनेव
प्रत्यग्रोद्घाटिताम्भोरुहकुहरगुहासुस्थितेनेव धात्रा ।
कृष्णेन ध्वान्तकृष्णस्वतनुपरिभवत्रस्नुनेव स्तुतोऽलं
त्राणाय स्तात्तनीयानपि तिमिररिपोः स त्विषामुद्गमो वः॥१६॥
विस्तीर्णं व्योम दीर्घाः सपदि दश दिशो व्यस्तवेलाम्भसोऽब्धीन्
कुर्वद्भिर्दृश्यमानां नगनगरगणाभोगपृथ्वीञ्च पृथ्वीम् ।

आरूढेन सञ्जातेन शौद्गिलेशेन ईषदुद्गमेन उत्कलिता उत्पादिता कपिलिम्ना पाण्डुतया अलङ्कृतिः शोभा यया तादृशी दिग्बधूनां विरहजनितपाण्डिमानमातन्वतीति भावः उज्जृम्भायां विकसताम् अम्भोजानामिव नेत्राणां द्युतिर्यस्मिन् तादृशे दिनमुखे किञ्चित् ईषत् उद्भिद्यमाना उद्गच्छन्ती तासां दिग्बधूनाम् श्मश्रुश्रेणीव घर्मत्विषः सूर्य्यस्य दशशती वः युष्माकं शर्म सुखं दिशतु ददातु । रूपकमलङ्कारः ॥ १५ ॥

मौलीन्दोरिति । एष मौलीन्दोः शिरःस्थितचन्द्रस्य द्युतिं मा मोषीत् न अपहरतु इति शङ्किनेव वृषभाङ्केन हरेण, प्रत्यग्रम् अभिनवं यथा तथा उद्घाटितस्य विकासितस्य अम्भोरुहस्य कमलस्य कुहरमेव अभ्यन्तरमेव गुहा गह्वरं तत्र सुस्थितेनेव सुखेन तिष्ठतेव धात्रा ब्रह्मणा, तथा कृष्णेन ध्वान्तवत् तिमिरमिव कृष्णा या स्वतनुः निजशरीरं तस्याः परिभवात् त्रस्नुना भीतेनेव ध्वान्तबुद्ध्या निजतनुध्वंसशङ्किनेवेति यावत् अलम् अत्यर्थं स्तुतः सः तनीयानपि स्वल्पोऽपि तिमिररिपोः सूर्य्यस्य त्विषां मयूखानामुद्गमः वः युष्माकं त्राणाय स्तात् भवतु ॥ १६ ॥

विस्तीर्णमिति । यैः व्योम आकाशं विस्तीर्णं दश दिशः दीर्घाः,

पद्मिन्युच्छ्वास्यते यैरुषसि जगदपि ध्वंसयित्वा तमिस्रा-
मुस्रा विस्रंसयन्तु द्रुतमनभिमतं ते सहस्रत्विषो वः ॥१७॥
अस्तव्यस्तत्वशून्यो निजरुचिरनिशानश्वरः कर्त्तुमीशो
विश्वं वेश्मेव दीपः प्रतिहततिमिरं यः प्रदेशे स्थितोऽपि ।
दिक्कालापेक्षयासौ त्रिभुवनमटतस्तिग्मभानोर्नवाख्यां
यातः शातक्रतव्यां दिशि दिशतु शिवं सोऽर्चिषामुद्गमो वः॥१८॥
मागान्म्लानिं मृणाली मृदुरिति दययेवाप्रविष्टोऽहिलोकं
लोकालोकस्य पार्श्वं प्रतपति न परं यस्तदाख्यार्थमेव ।

अब्धीन् समुद्रान् व्यस्तं विभक्तं वेलाम्भः तटसलिलं येषां तान् नगाः पर्वताः नगराणि पुराणि तेषां गणानां समूहानाम् आभोगेन पृथ्वीं विपुलां पृथ्वीञ्च दृश्यमानां कुर्वद्भिः तमिस्रां तामसीं रात्रिं ध्वंसयित्वा निराकृत्य उषसि प्रभाते पद्मिनी जगदपि उच्छ्वास्यते विकास्यते, ते सहस्रत्विषः सूर्य्यस्य उस्राः गभस्तयः वः युष्माकम् अनभिमतं द्रुतं शीघ्रं विस्रंसयन्तु नाशयन्तु ॥ १७ ॥

अस्तेति । यः अस्तव्यस्तत्वशून्यः अस्तत्वेन व्यस्तत्वेन च शून्यः रहितः अतिधीर इत्यर्थः निजरुचिरेण स्वतेजसा निशानश्वरः रजनीनाशकः यद्वा निजरुचिः स्वेन तेजस्वी, अनिशं सततम् अनश्वरः अविनाशी सर्वकालस्थायीति यावत् प्रदेशे प्रकृष्टदूरदेशे स्थितोऽपि वेश्मेव दीपः, विश्वं जगत् प्रतिहततिमिरं निराकृतान्धकारं कर्त्तुम् ईशः शक्तः दिक्कालापेक्षया दिशां कालस्य चानुरोधेन त्रिभुवनम् अटतः पर्य्यटतः तिग्मभानोः सूर्य्यस्य शातक्रतव्याम् ऐन्द्र्यां पूर्व्वस्यामिति यावत् दिशि नवाख्यां यातः नूतन इत्यर्थः सोऽसौ अर्चिषां मयूखानाम् उद्गमः वः युष्माकं शिवं मङ्गलं दिशतु करोतु ॥ १८ ॥

मागादिति । यः मृदुः कोमलाङ्गी मृणाली पद्मिनी म्लानिं

ऊर्द्ध्वं ब्रह्माण्डखण्डस्फुटनभयपरित्यक्तदैर्घ्यो द्युसीम्नि
स्वेच्छावश्यावकाशावधिरवतु स वस्तापनो रोचिरोघः ॥१९॥

अश्यामः काल एको न भवति भुवनान्तेऽपि वीतेऽन्धकारे ?
सद्यः प्रालेयपादो न विलयमचलं चन्द्रमाश्चाभ्युपैति ? ।
बन्धः सिद्धाञ्जलीनां न हि कुमुदवनस्यापि यत्रोज्जिहाने ?
तत् प्रातः प्रेक्षणीयं दिशतु दिनपतेर्धाम कामाधिकं वः॥२

मागात् न गच्छतु इति दययेव अनुकम्पयेव अर्द्धलोकं पातालम् अप्रविष्टः अगतः, तस्य लोकालोकस्य पर्वतस्य आख्यार्थम् एकस्मिन् पार्श्वे लोकः आलोकः उद्द्योतः अपरस्मिन् पार्श्वे अलोकः अनुद्द्योत इति अन्वर्थसंज्ञार्थमेवेत्यर्थः लोकालोकस्य पार्श्वम् एकमिति भावः प्रतर्पति आलोकेन पूरयति, न परं पार्श्वमिति शेषः । ऊर्द्ध्वं द्युसीम्नि स्वर्गसीमायां ब्रह्माण्डखण्डस्य स्फुटनं विदारणं तस्मात् भयेन परित्यक्तं दैर्घ्यं येन तथाभूतः स्वेच्छया निजेच्छया वश्यः वशं गतः अवकाशस्य स्थानस्य अवधिर्यस्य तादृशः तापनः सौरः रोचिरोघः किरणचयः वः युष्मान् अवतु रक्षतु ॥ १९ ॥

अश्याम इति । यत्र उज्जिहाने उद्गच्छति सति भुवनान्तेऽपि एकः कालः वीतं विगतम् अन्धकारं यस्मिन् तादृशः अतएव अश्यामः अकृष्णः धवल इत्यर्थः न भवति ? अपि तु भवत्येवेत्यर्थः प्रालेयपादः शिशिरकिरणः चन्द्रमाः सद्यः क्षणमात्रेणैवेत्यर्थः विलयम् अचलम् अस्तपर्वतमिति यावत् न अभ्युपैति ? अपि तु अभ्युपैत्येवेत्यर्थः । सिद्धानां सिद्धपुरुषाणां ये अञ्जलयः उपासनविधौ प्रणामार्थं करयोः संयोगविशेषाः तेषां तथा कुमुदवनस्यापि बन्धः सङ्कोचः न हि नैव ? अपि तु बन्ध एव स्यादित्यर्थः । प्रातः प्रेक्षणीयं सुदर्शनीयं दिनपतेः सूर्यस्य तत् धाम किरणः वः युष्माकं कामाधिकं कामनाधिकं फलमिति शेषः दिशतु ददातु ॥ २० ॥

यत् कान्तिं पङ्कजानां न हरति कुरुते प्रत्युताधिक्यरम्यां
नो धत्ते तारकाभां तिरयति नितरामाशु यन्नित्यमेव ।
कर्त्तुं नालं निमेषं दिवसमपि परं यत्तदेकं त्रिलोक्याः
चक्षुः सामान्यचक्षुर्विसदृशमघभिद्भास्वतस्तान्महो वः ॥२१॥
क्ष्मां क्षेपीयः क्षपाम्भःशिशिरतरलस्पर्शतर्षाद्द्रुतेव
द्रागाशा नेतुमाशाद्विरदकरसरःपुष्कराणां विबोधम् ।
प्रातः प्रोल्लङ्घ्य विष्णोः पदमपि घृणये वातिवेगाद्दवीय'
स्युद्दामं द्योतमाना दहतु दिनपतेर्दुर्निमित्तं द्युतिर्वः ॥२२॥

यदिति । यत् पङ्कजानां कमलानां कान्तिं न हरति प्रत्युत अधिकरम्यां कुरुते, यत् तारकाणां नक्षत्राणाम् आभां कान्तिं नो धत्ते न करोति, आशु शीघ्रं नितराम् अत्यर्थं तिरयति आच्छादयति प्रत्युतेति शेषः यत् दिवसमपि सर्वं दिनं व्याप्येत्यर्थः निमेषं कर्त्तुं न अलं न शक्तं परं श्रेष्ठम् एकम् अद्वितीयम् अतएव सामान्यचक्षुषः विसदृशं विलक्षणं त्रिलोक्याः चक्षुः नेत्रभूतमित्यर्थः तत् भास्वतः भास्करस्य महः तेजः वः युष्माकं नित्यमेव अघभित् पापापहं स्तात् भवतु ॥ २१ ॥

क्ष्मामिति । क्षपायाः रात्रेरम्भसां शिशिराणामित्यर्थः शिशिरः शीतलः तरलः यः स्पर्शः तस्मिन् तर्षेण लालसया आद्रुतेव आर्द्रवतीव प्रस्तुतसुकेवेति यावत् क्षेपीयः अतिक्षिप्रं क्ष्मां पृथिवीम् आशाद्विरदानां दिग्गजानां कराः शुण्डा एव सरांसि तेषां पुष्कराणां पद्मानां विबोधं विकाशं नेतुम् आशाः दिशश्च तथा अतिवेगात् घृणयेव दययेव दवीयः अतिदूरीयः अतिमहत् विष्णोः पदम् आकाशं, वियद्विष्णुपद-मित्यमरः । द्राक् झटिति प्रातः प्रोल्लङ्घ्य अतिक्रम्य उद्दामम् उत्कर्ष-मित्यर्थः द्योतमाना दीप्यमाना दिनपतेः द्युतिः वः युष्माकं दुर्निमित्तं दहतु भस्मीकरोतु ॥ २२ ॥

नो कल्पापायवायोरदयरयदलत्क्ष्माधरस्यापि गम्या
गाढोद्गीर्णोज्ज्वलश्रीरहनि न रहिता नो तमःकज्जलेन ।
प्राप्तोत्पत्तिः पतङ्गान्न पुनरुपगता मोषमुष्णत्विषो वो
वर्त्तिः सैवान्यरूपा सुखयतु निखिलद्वीपदीपस्य दीप्तिः ॥२३

निःशेषाशावपूरप्रवणगुरुगुणश्लाघनीयस्वरूपा
पर्य्याप्ता नोदयादौ दिनगमसमयोपप्लवेऽप्युन्नतैव ।
अत्यन्तं यानभिज्ञा क्षणमपि तमसा साकमेकत्र वस्तुं
ब्रध्नस्येद्धा रुचिर्वो रुचिरिव रुचितस्याप्तये वस्तुनोऽस्तु ॥२४॥

नो इति । या कल्पापाये कल्पान्ते यो वायुः प्रलयपवन इत्यर्थः तस्य अदयरयेण निर्दयवेगेन दलतः स्वयं भिद्यमानस्य क्ष्माधरस्य पर्वतस्यापि नो गम्या अप्राप्येत्यर्थः तदानीं सूर्य्योदयाभावादिति भावः अहनि दिवसे गाढं यथा तथा उद्गीर्णा उदिता उज्ज्वला श्रीः शोभा यस्याः तादृशी, तमःकज्जलेन अन्धकाररूपाञ्जनेन न रहिता इति नो अपि तु रहिता एव पतङ्गात् सूर्य्यात् प्राप्ता उत्पत्तिः जन्म यस्याः तथोक्ता अन्यस्मात्तु दीपवर्त्तेः पतङ्गाख्यकीटात् निर्वाणमिति भावः मोषं निर्वाणं न पुनरुपगता अतएव अन्यरूपा अन्यदीपविलक्षणेत्यर्थः वर्त्तिरिव दशेव निखिलद्वीपदीपस्य सप्तद्वीपप्रदीपस्य उष्णत्विषः सूर्य्यस्य सा दीप्तिः वः युष्मान् सुखयतु आलोकदानेनेति भावः ॥ २३ ॥

निःशेषेति । या निःशेषं यथा तथा आशानां दिशां कामानाञ्च आपूरे आपूरणे प्रवणाः तत्पराः ये गुरवः महान्तः गुणाः तैः श्लाघनीयं प्रशंसनीयं स्वरूपं यस्याः तथोक्ता उदयादौ उदयात् प्रागित्यर्थः उदयाद्राविति पाठे उदयाचले इत्यर्थः न पर्य्याप्ताः न प्राप्तं गतेत्यर्थः यद्वा उदयादौ उदयवर्द्धनादिविधौ न पर्य्याप्ता नोद्धतेति भावः दिनगमसमयः दिनावसानमेव उपप्लवः विपत् तस्मिन्नपि उन्नतैव ऊर्द्ध्वगतैव अविपादेन अविनतेवेति च भावः तमसा अन्धकारेण पापिष्ठेन खलेन साकं सह एकत्र एकस्मिन् स्थाने क्षणमपि वस्तुं स्थातुम्

बिभ्राणः शक्तिमाशु प्रशमितबलवत्तारकौर्जित्यगुर्वीं
कुर्वाणो लीलयाधः शिखिनमपि लसच्चन्द्रकान्तावभासम् ।
आदध्यादन्धकारे रतिमतिशयिनीमावहन् वीक्षणानां
बालो लक्ष्मीमपारामपर इव गुहोऽहर्पतेरातपो वः ॥२५॥

तीव्रं निर्वाणहेतुर्यदपि च विपुलं यत् प्रकर्षेण चाणु
प्रत्यक्षं यत् परोक्षं यदिह यदपरं नश्वरं शाश्वतञ्च ।
यत् सर्वस्य प्रसिद्धं जगति कतिपये योगिनो यद्विदन्ति
ज्योतिस्तद्द्विप्रकारं सवितुरवतु वो बाह्यमाभ्यन्तरञ्च ॥२६॥

अनभिज्ञा अजानतीत्यर्थः, सा अभिनव सूर्य्यस्य इद्धा दीप्ता रुचिः दीप्तिः रुचिरिव कामनेव वः युष्माकं रुचितस्य अभीष्टस्य वस्तुनः आप्तये लाभाय अस्तु भवतु ॥ २४ ॥

बिभ्राण इति । प्रशमितेन शान्तिं नीतेन बलवतीनाम् उज्ज्वलानामिति यावत् तारकाणां नक्षत्राणां पक्षे बलवतः प्रबलस्य तदाख्यासुरस्य और्जित्येन शोभया पक्षे औद्धत्येनेति यावत् गुर्वीं महतीं शक्तिं सामर्थ्यं पक्षे तदाख्यमस्त्रम् आशु शीघ्रं बिभ्राणः धारयन् लीलया अवहेलया पक्षे विलासेन लसन् स्फुरन् चन्द्रस्येव कान्तः रमणीयः अवभासः दीप्तिर्यस्य तादृशं पक्षे लसद्भिः राजद्भिः चन्द्रकैः मेचकैः अन्ते उपरि अवभासः शोभा यस्य तादृशं शिखिनम् अग्निं पक्षे मयूरमपि अधः कुर्वाणः पराभवन् स्वतेजसेति भावः पक्षे अधः कुर्वाणः आरोहणेन अधोगतं कुर्वन् अन्धकारे तिमिरे पक्षे अन्धकारेः हरस्य वीक्षणानां नयनानाम् अतिशयिनीं रतिं प्रीतिम् आवहन् जनयन् बालः नवः पक्षे शिशुः अतएव अपरो द्वितीयो गुह इव कार्त्तिकेय इव अहर्पतेः सूर्य्यस्य आतपः मयूखः वः युष्माकम् अपाराम् अशेषाम् लक्ष्मीं श्रियम् आदध्यात् ददातु । उत्प्रेक्षालङ्कारः ॥२५॥

तीव्रमिति । यत् तीव्रं तीक्ष्णं निर्वाणहेतुर्मुक्तिकारणञ्च, यदपि

ज्योत्स्नांशाक्रान्तपाण्डुद्युतितिमिरमसीशेषकल्माषमीषत्
जृम्भोद्भूतेन पिङ्गं सरसिजरजसा सन्ध्यया शोणशोचिः ।
प्रातः प्रारम्भकाले सकलमिव जगच्चित्रमुन्मीलयन्ती
कान्तिस्तीक्ष्णत्विषोऽक्ष्णां मुदमुपनयतान्तूलिकेवातुलां वः ॥२७

आयान्ती किं सुमेरोः सरणिररुणिता पाद्मरागैः परागैः ?
आहोस्वित् स्वस्य माहारजनविरचिता वैजयन्ती रथस्य ? ।
माञ्जिष्ठी पृष्ठवाहावलिविधृतशिरश्चामराली नु ? लोकैः
आशङ्क्यालोकितैवं सवितुररुणुदे स्यात् प्रभाते प्रभा वः ॥२८॥

विपुलं महत् विस्तीर्णमित्यर्थः प्रकर्षेण अणु अतिसूक्ष्मञ्चेत्यर्थ, यत् प्रत्यक्षम् अक्षिगोचरं परोक्षम् अप्रत्यक्षम् अदृष्टगोचरमित्यर्थः इह संसारे यत् नश्वरम् अस्थायि अपरं शाश्वतं नित्यञ्च, यत् सर्वत्र जगति प्रसिद्धं विदितं ज्ञातमित्यर्थः, यत् कतिपये न तु सर्वे योगिनः विदन्ति जानन्ति, तत् द्विप्रकारं द्विविधं बाह्यं बहिःस्थितम् आभ्यन्तरञ्च अन्तर्वर्त्ति च सवितुः सूर्य्यस्य ज्योतिः वः युष्मान् अवतु रक्षतु ॥ २६ ॥

ज्योत्स्नेति । ज्योत्स्नायाः अंशेन आक्रान्तपाण्डुद्युतिः असमग्रपाण्डुराभा या तिमिरमसी तस्याः शेषेण कल्माषं शबलम् ईषत् अल्पं यथा तथा जृम्भया विकाशेन उद्भूतं तेन सरसिजरजसा पद्मपरागेण पिङ्गं कपिशं सन्ध्यया प्रातःकालीनया शोणा रक्ता शोचिः कान्तिर्यस्य तादृशं प्रातः प्रारम्भकाले सकलं सम्पूर्णं चित्रमिव आलेख्यमिव उन्मीलयन्ती चित्रयन्ती तीक्ष्णत्विषः सूर्य्यस्य कान्तिः तूलिकेव वः युष्माकम् अतुलाम् अक्ष्णां नेत्राणां मुदम् आनन्दम् अनयत् । उपमालङ्कारः ॥ २७ ॥

आयान्तीति । पाद्मरागैः पद्मरागसम्बन्धिभिः परागैः रजोभिः अरुणिता रञ्जिता सुमेरोः सरणिः पङ्क्तिः आयान्ती आगच्छन्ती किम् ? स्वस्य सवितुरित्यर्थः महारजनेन काञ्चनेन विरचिता निर्मिता

ध्वान्तध्वंसं विधत्ते न तपति नितरां नातिरूपं व्यनक्ति
न्यक्त्वं नीत्वापि नक्तं न वितरतितरां तावदह्नस्त्विषं यः
स प्रातर्मा विरंसीदसकलपटिमा पूरयन् युष्मदाशा-
माशाकाशावकाशावतरणतरुणप्रक्रमोऽर्कप्रकाशः ॥२९॥
रत्नानां मण्डनाय प्रभवति नियतोद्देशलब्धावकाशं
वह्नेर्दार्वादि दग्धुं निजजडिमतया कर्त्तुमानन्दमिन्दोः ।
यत्तु त्रैलोक्यभूषाविधिरघदहनं ह्लादिवृष्ट्याशु तद्वो
बाहुल्योत्पाद्य कार्य्याधिकतरमवतादेकमेवार्कतेजः ॥३०॥

रथस्य वैजयन्ती पताका आयान्ती आहोस्वित् किम् ? माञ्जिष्ठी मञ्जिष्ठारागरञ्जिता प्रष्ठाभिः अग्रगामिनीभिः वाजावलीभिः अश्व-सङ्घैः विधृता शिरःसु चामरावली नु किम् ? प्रभाते लोकै-रेवमाशङ्क्य आलोकिता निरीक्षिता सवितुः सूर्य्यस्य प्रभा वः युष्मा-कम् अघानां पापानां नुदे नाशाय स्यात् । सन्देहालङ्कारः । तदुक्तं दर्पणे, सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थित इति ॥ २८ ॥

ध्वान्तेति । यः ध्वान्तानां तिमिराणां ध्वंसं विधत्ते करोति, नितराम् अत्यर्थं न तपति न तापं ददाति, अति अत्यन्तं रूपं घट-पटादिकं वस्त्विति यावत् न व्यनक्ति न प्रकाशयति, नक्तं रात्रिं न्यक्त्वं निरवशेषत्वमिति भावः नीत्वापि तावत् साकल्येन अह्नः दिवसस्य त्विषं प्रभां न वितरतितरां नातिशयेन वितरतीत्यर्थः अल्प-प्रकाशत्वादिति भावः प्रातः प्रभाते असकलः असम्पूर्णः पटिमा माहात्म्यं यस्य तथाभूतः आशानां दिशाम् आकाशस्य च अवकाशे अवतरणे तरुणः अभिनवः प्रक्रमः उद्योगः यस्य तादृशः अर्कप्रकाशः सूर्य्योदयः युष्माकम् आशां कामनां पूरयन् मा विरंसीत् विरतो न भवतु पूरयत्वित्यर्थः ॥ २९ ॥

रत्नानामिति । यत्तु यच्च नियतेषु उद्देशेषु स्थानेषु लब्धावकाशं प्राप्तावसरं सत् रत्नानां मण्डनाय अलङ्करणाय, वह्नेः अग्नेः

मीलच्चक्षुर्विजिह्मश्रुति जड़रसनं विघ्नितघ्राणवृत्ति
स्वव्यापाराक्षमत्वक् परिमुषितमनः श्वासमात्रावशेषम् ।
विस्रस्ताङ्गं पतित्वा स्वपदपहरतादप्रियं वोऽर्कजन्मा
कालव्यालावलीढं जगदगद इवोत्थापयन् प्राक् प्रतापः ॥२१
निःशेषं नैशमम्भः प्रसभमपनुदन्नश्रुलेशानुकारि
स्तोकस्तोकापनीतारुणरुचिरचिरादस्तदोषानुषङ्गः ।

दावादि वनादिकं दग्धुं भस्मीकर्त्तुं निजजाड़िमतया स्वीयजाड्येन उपलक्षितस्य जड़मयस्येति भावः इन्दोश्चन्द्रस्य आनन्दं कर्त्तुं जनयितुं प्रभवति शक्नोति, त्रैलोक्यस्य भूषाविधिः अलङ्कारस्वरूपमित्यर्थः अघदहनं पापनाशनं दृष्ट्वा दृष्टिकरणेन ह्लादि जगताम् आह्लादकं बाहुल्येन उत्पाद्यैः कार्य्यैः देवताराधनादिभिः अधिकतरम् अधिकमनोरमं तत् एकमेव अर्कतेजः सौरमयूखः वः युष्मान् अवतात् रक्षतु ॥ २० ॥

मीलदिति । अर्कजन्मा सौरः प्राक् प्रतापः नवोदय इति भावः अगद इव औषधमिव मीलन्ति चक्षूंषि यस्य तथोक्तं मुद्रितनेत्रं विजिह्मा विवशा श्रुतिः श्रवणेन्द्रियं यस्य तथोक्तं जड़ा मन्थरा विवशेति यावत् रसना जिह्वा यस्य तथाभूतं विघ्निता रहिता घ्राणानां वृत्तिः व्यापारः यस्य तादृशं स्वव्यापारे स्पर्शनक्रियायामित्यर्थः अक्षमा त्वक् यस्य तथोक्तं परिमुषितम् अपहृतम् मनो यस्य तथोक्तं श्वासमात्रम् अवशेषो यस्य तथाविधं विस्रस्तानि विगलितानि अङ्गानि यस्मिन् तत् यथा तथा पतित्वा स्वपत् निद्रां गच्छत् काल एव व्यालः सर्पः तेन अवलीढ़ं ग्रस्तं दष्टमिति यावत् जगत् उत्थापयन् वः युष्माकम् अप्रियम् अपहरतात् अपहरतु । उपमालङ्कारः ॥ २१ ॥

निःशेषमिति । नैशं निशासम्बन्धि अश्रुलेशानुकारि अश्रुबिन्दु-

दाता दृष्टिं प्रसन्नां त्रिभुवननयनस्याशु युष्मद्विरुद्धं
बध्याद् ब्रघ्नस्य सिद्धाञ्जनविधिरपरः प्राक्तनोऽर्चिःप्रचारः॥३२

भूत्वा जम्भस्य भेत्तुः ककुभि परिभवारम्भभूः शुभ्रभानोः
बिभ्राणा बभ्रुभावं प्रसभमभिनवाम्भोजजृम्भा प्रगल्भा ।
भूषाभूयिष्ठशोभा त्रिभुवनभवनस्याशु वैभाकरी प्राग्
विभ्रान्तिभ्राजमाना विभवतु विभवोद्भूतये सा विभा वः ३३

सदृशमित्यर्थः अम्भः जलं शैशिरमिति यावत् निःशेषं निरवशेषं यथा तथा प्रसभं सहसा अपनुदन् अपनयन् सौरमयूखस्पर्शेन शिशिरापगमादिति भावः स्तोकस्तोकम् अल्पाल्पं यथा तथा अपनीता अरुणा रक्ता रोचिर्यस्य तादृशः अचिरात् अविलम्बेन अस्तः अपगतः दोषायाः रात्रेः दोषस्य च अनुषङ्गः सम्बन्धः यस्य तथाभूतः त्रिभुवननयनस्य प्रसन्नां दृष्टिं दाता दानशीलः अत्र शीलार्थतृणयोगे कर्मणि न षष्ठी । अतएव अपरः सिद्धाञ्जन विधिः प्राक्तनः प्राथमिकः नव इत्यर्थः ब्रघ्नस्य सूर्य्यस्य अर्चिषां प्रचारः उद्गमः आशु शीघ्रं युष्माकं विरुद्धम् अमङ्गलं बध्यात् हन्यात् । अत्रातिशयोक्तिरलङ्कारः । तदुक्तं दर्पणे, सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते ॥ ३२ ॥

भूत्वेति । जम्भस्य भेत्तुः जम्भासुरहन्तुरिन्द्रस्य ककुभि दिशि पूर्व्वस्यामिति भावः शुभ्रभानोः शीतगोश्चन्द्रस्य परिभवस्य मालिन्यस्येत्यर्थः आरम्भभूः उत्पत्तिनिदानं बभ्रुभावं पाटलत्वं बिभ्राणा धारयन्ती प्रसभं सहसा अभिनवानाम् अम्भोजानां कमलानां जृम्भायां विकासे प्रगल्भा पटुतरा त्रिभुवनमेव भवनं गृहं तस्य भूयिष्ठशोभा समधिकशोभिनी भूषा अलङ्कृतिस्वरूपेत्यर्थः विभ्रान्त्या विभ्रमेण स्फुरणेनेति यावत् भ्राजमाना शोभमाना प्राक् अभिनवा या प्रसिद्धा वैभाकरी विभाकरसम्बन्धिनी विभा प्रभा वः युष्माकं विभवोद्भूतये सम्पद्वर्द्धनाय विभवतु ॥ ३३ ॥

संसक्तं सिक्तमूलादभिनवभुवनोद्यानकौतूहलिन्या
यामिन्या कन्ययेवामृतकरकलशावर्जितेनामृतेन ।
अर्कालोकः क्रियाद्वो मुदमुदयशिरश्चक्रवालालवालाद्
उद्यन्बालप्रवालप्रतिमरुचिरहःपादपप्राक्प्रवालः ॥ २४ ॥
भिन्नं भासारुणस्य क्वचिदभिनवया विद्रुमाणां त्विषेव
भिन्नं नक्षत्ररत्नद्युतिनिकरकरालान्तरालं क्वचिच्च ।
अन्तर्निःशेषकृष्णप्रियमुदधिमिव ध्वान्तराशिं पिबंस्ता-
दौर्वः पूर्वोऽप्यपूर्वोऽग्निरिव भवदघप्लुष्टयेऽर्कावभासः ॥ २५ ॥

संसक्तमिति । अभिनवं भुवनमेव उद्यानम् उपवनं तस्मिन् कुतू-हलिन्या कौतुकवत्या कन्ययेव यामिन्या रजन्या कन्या एव जलकलसेन वृक्षं सिञ्चतीति प्रसिद्धिः । अमृतकरश्चन्द्र एव कलशः तेन आवर्जि-तेन दत्तेन अमृतेन संसक्तम् अविच्छिन्नं यथा तथा सिक्तमूलात् उदयस्य उदयाचलस्य शिरसां शृङ्गाणां यत् चक्रवालं मण्डलं तदेव आलवालं मूले जलसेकार्थं गोलाकृतिर्वृत्तविशेषः तस्मात् बाल-प्रवालस्य नवपल्लवस्य प्रतिमा सदृशी रुचिः प्रभा यस्य तादृशः उद्यन् उदयं गच्छन् अहरेव पादपः वृक्षः तस्य प्राक्प्रवालः नवपल्लवः अर्कालोकः सूर्यमयूखः वः युष्माकं मुदम् आनन्दं क्रियात् करोतु जनयत्वित्यर्थः । रूपकालङ्कारः ॥ २४ ॥

भिन्नमिति । क्वचित् कुत्रचित् प्रदेशे अभिनवया अरुणस्य सूर्य-सारथेः भासा प्रभया भिन्नं भेदं नीतम् अतएव विद्रुमाणां प्रवालानां त्विषेव कान्त्येव भिन्नं विदलितं क्वचिच्च नक्षत्राण्येव रत्नानि तेषां द्युतिनिकरेण प्रभापुञ्जेन करालं व्याप्तम् अन्तरालम् अन्तरं यस्य तादृशम् अन्तरभ्यन्तरे निःशेषं सम्यक् यथा तथा कृष्णं श्यामं प्रियं मनोहरञ्च यद्वा कृष्णस्य नारायणस्य प्रियं शयनीयत्वादिति भावः उदधिमिव समुद्रमिव

गन्धर्वैर्गद्यपद्यव्यतिकरितवचो हृद्यमातोद्यवाद्यैः
यो देवो नारदाद्यैर्मुनिभिरभिनुतो वेदवेद्यैर्विभिद्य ।
आसाद्यापद्यते यं पुनरपि च जगद्यौवनं सद्य उद्यन्
उद्योतो द्योतितद्यौर्द्यतु दिवसकृतोऽसाववद्यानि वोऽद्य॥३६
आरालैश्चन्द्रकान्तैश्च्युततिमिरतया भासयान्तारकाणा
मेणाङ्कालोकलोपादुपहतमहसामोषधीनां लयेन ।
आरादुत्प्रेक्ष्यमाणा क्षणमुदयतटान्तर्हितस्याहिमांशोः
आभा प्राभातिकी वोऽवतु न तु नितरान्तावदाविर्भवन्ती ३७

ध्वान्तराशिम् अन्धकारनिचयं पिबन् ग्रसन् अपूर्वः पूर्वः पूर्वदिगुत्थित इति यावत् और्वः अग्निरिव वाडवानल इव अर्कस्य सूर्यस्य अवभासः आलोकः भवतां युष्माकम् अघप्लुष्ट्यै पापदहनाय स्तात् भवतु । उत्प्रेक्षालङ्कारः । तदुक्तं दर्पणे, भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मनेति ॥ ३५ ॥

गन्धर्वैरिति । यः देवः गद्यैः चूर्णकैः पद्यैः श्लोकैश्च व्यतिकरितं विमिश्रितं यत् वचः वाक्यं तेन हृद्यं मनोज्ञं यथा तथा आतोद्यवाद्यैः आतोद्यं तदाख्यं वाद्यं येषां तैः गन्धर्वैः देवयोनिविशेषैः तथा नारदाद्यैः मुनिभिः वेदवाक्यैः [illegible]ठेन वेद्यैः स्तोत्रविशेषैरिति शेषः विभिद्य विशिष्य अभिनुतः अभितः स्तुतः, यञ्च देवम् आसाद्य प्राप्य जगत् पुनरपि यौवनम् आपद्यते प्राप्नोति, सद्यः उद्यन् उदयं गच्छन् तस्य दिवसकृतः असौ उद्द्योतिता उद्भासिता द्यौः आकाशं स्वर्गो वा येन तादृशः उद्द्योतः आलोकः अद्य इदानीं वः युष्माकम् अवद्यानि अशुभानि द्यतु छिनत्तु, दो यच्छेदे इत्यस्य लोटि रूपम् ॥ ३६ ॥

आरालैरिति । आरालैः प्रस्रुतसलिलैरिति यावत्, चन्द्रोदये चन्द्रकान्ता मणयः प्रस्रवन्तीति प्रसिद्धेः । चन्द्रकान्तैः चन्द्रोदयेन दीप्त-

सानौ सा नौदयेनारुणितदलपुनर्यौवनानां वनानां
आलीमालीढपूर्वा परिहृतकुहरोपान्तनिम्नातनिम्ना ।
भा वो भावोपशान्तिं दिशतु दिनपतेर्भासमानासमाना
राजी राजीवरेणोः समसमयमुदेतीव यस्या वयस्या ॥ २८ ॥
उज्जृम्भाम्भोरुहाणां प्रभवति पयसां या श्रिये चोष्णतायै
पुष्णात्यालोकमात्रं न तु दिशति दृशां दृश्यमाना विघातम्

भानैरिति भावः च्युततिमिरतया नष्टान्धकारतया भालयात् प्रभाप-
गमात्, तमस्येव तारकाः स्फुरन्तीति भावः, उपहतमहसां निस्तेज-
सामित्यर्थः तारकाणां नक्षत्राणां एणाङ्कस्य शशाङ्कस्य चालोक-
लोपात् उद्द्योतापगमात् उपहतमहसाम् श्रोषधीनां दर्पज्योति-
र्लतानां लगेन सहेति शेषः आरात् दूरतः, आराद्दूरसमीपयोरित्य-
मरः । उत्प्रेक्ष्यमाणा उद्धतेन चक्षुषा दृश्यमाना क्षणम् अल्पकालम्
उदयस्य अद्रेः तटान्तर्हितस्य तटलीनस्य अहिमांशोः सूर्य्यस्य प्राभा-
तिकी प्रातःकालीना न तु नितराम् आविर्भवन्ती उदयमाना आभा
वः युष्मान् तावत् अवतु रक्षतु ॥ २७ ॥

सानाविति । सानौ पर्वतीयविभागविशेषे आ ईषत् उदयः
ओदयः तेन अरुणितैः रक्तैः दलैः पत्रैः पुनरागतं यौवनं येषां तादृ-
शानां वनानाम् आलीं श्रेणीं न आलीढपूर्वा पूर्वम् अस्पृशन्तीत्यर्थः
तन्निम्ना लघुतया परिहृतं परित्यक्तं कुहरं गर्त्तः उपान्तं प्रान्तदेशः
निम्नं नतप्रदेशश्च यया तादृशी भासमाना दीप्यमाना असमाना
अतुल्या यस्याः भायाः प्रभायाः वयस्या सखी राजीवानां कमलानां
रेणोः परागस्य राजी समसमयं समकालम् उदेतीव सा दिनपतेः
सूर्य्यस्य भा वः युष्माकं भावोपशान्तिं भवः संसारः तत्सम्बन्धिनीम्
उपशान्तिं दिशतु जनयतु ॥ २८ ॥

उज्जृम्भेति । या उज्जृम्भाणां विकसताम् अम्भोरुहाणां
श्रिये शोभायै पयसां जलानाम् उष्णतायै च प्रभवति, दृश्यमाना सती

पूर्वाद्रेरेव पूर्वन्दिवमनु च पुनः पावनी दिङ्मुखानां
एनांस्यैनी विभासौ नुदतु नुतिपदैकास्पदम्प्राक्तनी वः॥३९॥

वाचां वाचस्पतेरप्यचलभिदुचिताचार्य्यकाणां प्रपञ्चैः
वैरिञ्च्यानां तथोच्चारितरुचिरऋचामाननानां चतुर्णाम् ।
उच्येतार्चासु वाच्यच्युति शुचि चरितं यस्य नोच्चैर्विविच्य
प्राच्यं वर्चश्चकासच्चिरमुपचिनुतात्तस्य चण्डार्चिषो वः ॥४०॥

मूर्ध्न्यद्रेर्धातुरागस्तरुषु किसलयो विद्रुमौघः समुद्रे
दिङ्मातङ्गोत्तमाङ्गेष्वभिनवनिहितः सान्द्रसिन्दूररेणुः ।
सीम्नि व्योम्नश्च हेम्नः सुरशिखरिभुवो जायते यः प्रकाशः
शोणिम्नाऽसौ खरांशोरुषसि दिशतु वः शर्म्म शोभैकदेशः॥४१

दृशां चक्षुषाम् आलोकमात्रं दर्शनव्यापारमात्रं पुष्णाति न तु विषात्तं दिशति ददाति, पूर्वं पूर्वाद्रेः पूर्वाचलस्यैव पुनः दिवमनु आकाशेन सह दिङ्मुखानां पावनी शुद्धिविधायिनी नुतिपदानां स्तोत्रपदानाम् एकास्पदम् अद्वितीयपात्रं प्राक्तनी अभिनवा असौ ऐषी सौरी विभा वः युष्माकम् एनांसि पापानि नुदतु नाशयतु ॥ ३९ ॥

वाचामिति। अचलभिदः इन्द्रस्य उचितम् आचार्य्यकम् आचार्य्यकर्म्म याभिः तथाभूतानां वाचस्पतेरपि बृहस्पतेरपि वाचां तथा उच्चारिता रुचिरा मनोज्ञा ऋक् मन्त्रविशेषो यैः तादृशानां वैरिञ्च्यानां विधातृसम्बन्धिनां चतुर्णाम् आननानां प्रपञ्चैः वृन्दैः यस्य अर्चासु पूजासु वाच्या अभिधेया च्युतिर्विरामो यत्र तादृशं शुचि विशुद्धं चरितं नोच्चैः मन्दं मन्दं यतिभङ्गभयादिति भावः विविच्य विशेषेण चिन्तयित्वेत्यर्थः उच्येत पठ्येत, तस्य चण्डार्चिषः तीक्ष्णतेजसः सूर्य्यस्य चकासत् विराजत् प्राच्यं प्राक्तनं वर्चः तेजः वः युष्मान् चिरम् उपचिनुतात् वर्द्धयतु ॥ ४० ॥

मूर्ध्नीति । यः अद्रेः पर्वतस्य मूर्ध्नि शिरसि धातुरागः गैरिक-

अस्ताद्रीशोत्तमाङ्गे श्रितशशिनि तमःकालकूटे निपीते
याति व्यक्तिं पुरस्तादरुणकिसलये प्रत्युषःपारिजाते ।
उद्यन्त्यारक्तपीताम्बरविशदतरोद्वीक्षिता तीक्ष्णभानोः
लक्ष्मीर्लक्ष्मीरिवास्तु स्फुटकमलपुटोपाश्रया श्रेयसे वः ॥४२॥

रागः, तरुषु वृक्षेषु किसलयः नवपल्लवः, समुद्रं चिद्भासां ज्वाला-नाम् ओघः समूहः, दिङ्मातङ्गानां दिग्गजानां उत्तमाङ्गेषु शिरःसु अभिनवनिहितः अभिनवसमर्पितः सान्द्रः घनः सिन्दूररेणुः, व्योम्नः आकाशस्य सीम्नि सीमायां हरिशिखरिभुवः सुमेरुप्रभवस्य हेम्नः काञ्चनस्य च प्रकाशः प्रभा जायते शोचिषां लौहित्येन तादृश इति यावत् असौ खरांशोः तिग्मरश्मेः सूर्यस्य उषसि प्रभाते शोभैकदेशः अवयवः आलोक इति यावत् वः युष्माकं शर्म सुखं दिशतु जनयतु ॥ ४१ ॥

अस्तेति । श्रितः शशी यत्र तादृशे अस्ताद्रीशस्य अस्ताचलेन्द्रस्य उत्तमाङ्गे सति, तम एव कालकूटं तस्मिन् निपीते निःशेषेण कवलिते इति यावत् पुरस्तात् पूर्वस्या दिशः अरुणकिसलये सूर्यसारथिरूपपल्लवे रक्तपल्लवे च प्रत्युषः पारिजाते प्राभातिकपारिजाततरौ व्यक्तिं प्रकाशं याति गच्छति सति उद्यन्ती उदयमाना आरक्तपीताम्बरे आकाशे विशदतरं स्पष्टतरम् उद्वीक्षिता उच्चैर्निरीक्षिता स्फुटः सम्यक् कमलपुटानां पद्ममुकुलानाम् उपाश्रयः विकास इति यावत् यया तथोक्ता पक्षे स्फुटं विकसितं यत् कमलपुटं पद्ममुकुलं तदेव उपाश्रयः आसनं यस्याः तथोक्ता लक्ष्म्याः पद्मासनत्वस्य शास्त्रीयत्वात् । तथाचोक्तं, पाशाक्षमालिकाम्भोजसृणिभिर्याम्यसौम्ययोः पद्मासनस्थां ध्यायेत्तां श्रियं त्रैलोक्यमातरमिति । तीक्ष्णभानोः सूर्यस्य लक्ष्मीः शोभा लक्ष्मीरिव वः युष्माकं श्रेयसे मङ्गलाय अस्तु भवतु । उपमालङ्कारः ॥ ४२ ॥

नोदन्वान् जन्मभूमिर्न तदुदरभुवो बान्धवाः कौस्तुभाद्या
यस्याः पाणौ न पद्मं न च नरकरिपूरःस्थली वासवेश्म ।
तेजोरूपा परैव त्रिषु भुवनतटेष्वादधाना व्यवस्थां
सा श्रीः श्रेयांसि दिश्यादशिशिरमहसो मण्डलाग्रोद्गता वः ॥४३॥

अश्ववर्णना ।

रक्षन्तोऽक्षुण्णहेमोपलपटलमलं लाघवादुत्पतन्तः
पातङ्गाः पङ्गुवज्ञाजितपवनजवा वाजिनस्ते जयन्ति ।
येषां वीतान्यचिह्नान्वयमपि वहतां मार्गमाख्याति मेरा-
वुद्यन्नुद्दामदीप्तिद्युमणिमणिशिलावेदिकाजातवेदाः ॥४४॥

नोदन्वानिति । यस्याः उदन्वान् समुद्रः जन्मभूमिर्न, तदुदरभुवः समुद्रोदरसम्भवाः कौस्तुभाद्याः बान्धवाः न, पाणौ हस्ते पद्मं न, नरकरिपोर्नारायणस्य उरःस्थली वक्षःस्थलं वासवेश्म वासगृहं न च, तेजोरूपा त्रिषु भुवनतटेषु व्यवस्थां व्यापारम् आदधाना जनयन्ती अशिशिरमहसः उष्णकिरणस्य मण्डलाग्रात् उद्गता उदिता अपरैव अन्यविधैव सा श्रीः वः युष्माकं श्रेयांसि दिश्यात् ददातु ॥४३॥

रक्षन्न इति । अलम् अत्यर्थं लाघवात् द्रुततया उत्पतन्तः अतएव अक्षुण्णं यथा तथा हेमोपलपटलं काञ्चनशिलासमूहं रक्षन्तः पङ्गुषु पद्भ्यां न गच्छन्तीति तथोक्तेषु अवज्ञया जितः पवनस्य जवो वेगो यैः तथाभूताः पातङ्गाः सौराः ते वाजिनः अश्वाः जयन्ति सर्वोत्कर्षेण वर्त्तन्ते । वहतां गच्छतां येषां वाजिनां मेरौ वीतान्यचिह्नान्वयमपि विगतापरचिह्नसम्बन्धमपि मार्गं गतिमिति यावत् उद्यन् उदयमानः उद्दामा उद्भटा दीप्तिर्येषां तथाविधा याः द्युमणिमणिशिलाः सूर्यकान्तमणयः तासां वेदिकासु परिष्कृतभूमिषु जातवेदाः अग्निः सौरकिरणसङ्गाज्जात इति भावः आख्याति कथयति सूचयतीति यावत् ॥ ४४ ॥

प्लुष्टाः पृष्टेऽंशुपातैरतिनिकटतया दत्तदाहातिरेकैः
एकाहाक्रान्तकृत्स्नत्रिदिवपथपृथुश्वासघोषाः क्रमेण ।
तीव्रोदन्यास्त्वरन्तामहितविहतये सप्तसप्ते-
रभ्यासाकाशगङ्गाजलशबलगलावर्जिताश्वाननना वः ॥ ४५ ॥
मत्वाऽन्यान् पार्श्वतोऽश्वान् स्फटिकतटदृषद्दृष्टदेहा द्रवन्ती
व्यस्तेऽह्न्यस्तसन्ध्येयमिति मृदुपदा पद्मरागोपलेषु ।
सादृश्यादृश्यमूर्त्तिर्मरकतदृषदि क्लिष्टसूता सुमेरोः
मूर्द्धन्यावृत्तिलब्धध्रुवगतिरवतु ब्रध्नवाहावली वः ॥ ४६ ॥

प्लुष्टा इति । अतिनिकटतया अतिसान्निध्यात् दत्तः दाहातिरेको यैः तादृशैः अतिशयेन दाहकैरित्यर्थः अंशुपातैः मयूखपतनैः पृष्ठे प्लुष्टाः दग्धाः एकाहेन एकदिवसेन आक्रान्ताः भ्रान्ताः कृत्स्नाः समग्राः त्रिदिवपथाः यैः तथोक्ता अतएव पृथवः आयताः श्वासैः घोषाः ध्वान्तयः येषां तथाविधाः क्रमेण तीव्रा उत्कटा उदन्या पिपासा येषां तादृशाः अतएव अभ्यासे सन्निधौ या आकाशगङ्गा मन्दाकिनी तस्याः जलेन श्वेतनेति भावः शबलाः भिन्नवर्णाः स्वस्य हरिद्वर्णत्वादिति भावः गलाः कण्ठाः येषां तादृशानि आवर्जितानि आनमितानि अश्वाननानि आननाग्राणि यैः तथाविधाः सप्तसप्तेः सूर्य्यस्य अश्वाः वः युष्माकम् अहितविहतये अमङ्गलनाशाय त्वरन्तां सत्वरा भवन्तु ॥ ४५ ॥

मत्वेति । स्फटिकतटेषु याः दृषदः स्फटिकोपलाः इत्यर्थः तासु दृष्टः प्रतिफलितत्वादिति भावः देहः यया तादृशी अतएव पार्श्वतः पार्श्वयोरित्यर्थः अन्यान् अश्वान् धावत इति भावः मत्वा द्रवन्ती धावन्ती तेषामीर्षयेति भावः व्यस्ते विपर्य्यस्ते अह्नि अपराह्णे इत्यर्थः पद्मरागाणाम् उपलेषु शिलासु अस्तसन्ध्या सायंसन्ध्या इयं वर्त्तते इति शेषः इति धियेति भावः तेषां रक्तत्वात् सन्ध्यासाम्यमिति

हेलालोलं वहन्ती विषधरदमनस्याग्रजेनावकृष्टा
स्वर्वाहिन्याः सुदूरं जनितजवपयाः स्यन्दनस्य स्यदेन ।
निर्व्याजं ताप्यमाने हरितिमनि निजे स्फीतफेनाहितश्रीः
अश्रेयांस्यश्वपङ्क्तिः शमयतु यमुनेवापरा तापनी वः ॥४८॥
मार्गोपान्ते सुमेरोर्नुवति कृतनतौ नाकधाम्नां निकाये
वीक्ष्य व्रीडावतीनां प्रतिकुहरमुखं किन्नरीणां मुखानि ।

भावः । मृदुपदा मन्दगामिनी, मरकतदृषदि मरकतशिलायां स्व- स्याद् अदृश्या मूर्त्तिर्यस्याः तादृशी क्लिष्टः क्लेशं नीतः सूतः सारथिर्यया तथोक्ता सुमेरोः मूर्द्धनि शिरसि आप्रदक्षिणावर्त्तनं भ्रमणमेव लब्धा ध्रुवा निश्चिता गतिर्यस्याः तथोक्ता मेरुशिरसोऽन्यत्र न गच्छतीति भावः । अभ्रस्य सूर्य्यस्य वाहावली अश्वराजिः वः युष्मान् अवतु रक्षतु ॥ ४६ ॥

हेलेति । विषधराणां नागानां दमनः गरुड़ः तस्य अग्रजेन अरुणेन अवकृष्टा आकृष्टा पक्षे विषधरस्य कालियस्य दमनः कृष्णः तस्य अग्रजेन बलदेवेन अवकृष्टा लाङ्गलेनापसारितेत्यर्थः हेलया अवज्ञया पक्षे विभ्रमेण लोलं चञ्चलं यथा तथा वहन्ती धावन्ती स्यन्दनस्य रथस्य पक्षे स्रवणस्य स्रोतस इति यावत् स्यदेन जवेन स्वर्वाहिन्याः मन्दाकिन्याः पक्षे भागीरथ्याः सुदूरम् अत्यर्थं यथा तथा जनितम् उत्पादितं जवपयः सवेगं जलं यया तादृशी निजे हरितिमनि हरिद्वर्णे इति यावत् निर्व्याजं सम्यगित्यर्थः ताप्यमाने उत्तापं नीयमाने सति स्फीतैः प्रवृद्धैः फेनैः आहिता जनिता श्रीः शोभा यस्याः तादृशी अपरा द्वितीया यमुनेव तापनी तपनस्य इयम् अपत्यं वेति तापनी सौरी अश्वानां पङ्क्तिः वः युष्माकम् अश्रेयांसि अमङ्गलानि शमयतु नाशयतु । उत्प्रेक्षालङ्कारः ॥ ४७ ॥

मार्गोपान्ते इति । सुमेरोः मार्गोपान्ते वर्त्मप्रान्ते कृतनतौ कृतप्रणामे नाकधाम्नां स्वर्गवासिनां निकाये समूहे नुवति स्तुवति

सूतेऽसूयत्यपीषज्जडगति वहतां कन्धरार्द्धैर्वलद्भिः
वाहानां व्यस्यताद्वः सममसमहरेर्हेषितं कल्मषाणि ॥४८॥
धुन्वन्तो नीरदालीर्निजरुचिहरिताः पार्श्वयोः पक्षतुल्या-
स्तालूत्तानैः खलीनैः खचितमुखरुचः स्रोतता लोहितेन ।
उड्डीयेव व्रजन्तो वियति गतिवशादर्कवाहाः क्रियासुः
क्षेमं हेमाद्रिहृद्यद्रुमशिखरशिरःश्रेणिशाखाशुका वः ॥४९॥

सूते सूर्य्यमिति शेषः प्रतिकूलहरमुखं गुहामुखेष्वित्यर्थः व्रीड़ावतीनां लज्जावतीनां किन्नरीणाम् अश्वमुखीनामिति यावत् अश्वदर्शनेन तासां लज्जाशीलत्वं युक्तमिति भावः मुखानि वीक्ष्य दृष्ट्वा सूते सारथौ असूयति विद्विषत्यपि वलद्भिः तिर्य्यग्भावेन चलद्भिः कन्धरार्द्धैः ग्रीवार्द्धैः अश्वमुखीषु साभिलाषदर्शनार्थं तिर्य्यक् चालितैरिति भावः ईषत् अल्पं जड़ा मन्थरा न्द्रहोत्यर्थः गतिर्यत्र तद् यथा तथा वहतां धावताम् असमहरेः सप्ताश्वस्य सूर्य्यस्य वाहानाम् अश्वानां हेषितं शब्दविशेषः वः युष्माक कल्मषाणि पापानि व्यस्यतात् निरस्यतु ॥४८॥

धुन्वन्त इति । पार्श्वयोः पक्षतुल्याः पतत्रनद्दशौः निजया रुच्या कान्त्या हरिताः हरिद्वर्णीकृता इत्यर्थः नीरदालीः मेघपङ्क्तीः धुन्वन्तः चालयन्तः कम्पयन्त इति यावत् जवेनेति भावः तालुषु उत्तानैः चलैः खलीनैः कविकाऽभिः स्रोतता क्षरता लोहितेन रक्तेन खचिताः रञ्जिताः मुखानां रुचः कान्तयः येषां तथोक्ताः गतिवशात् वियति आकाशे उड्डीयेव उत्पतित्वेव व्रजन्तः धावन्तः अत-एव हेमाद्रेः सुमेरोः हृद्याः मनोरमाः ये द्रुमाः वृक्षाः तेषां शिखराण्येव शिरांसि तेषां श्रेणिषु राजिषु याः शाखाः विटपाः तासु चरन्त इति भावः शुकाः शुकपक्षिणः अर्कस्य सूर्य्यस्य वाहाः अश्वाः वः युष्माकं क्षेमं मङ्गलं क्रियासुः कुर्वन्तु । रूपकमलङ्कारः ॥४९॥

## सारथिवर्णना।

प्रातः शैलाग्ररङ्गे रजनिजवनिकापायसंलक्ष्यलक्ष्मीः
विक्षिप्यापूर्वपुष्पाञ्जलिमुडुनिकरं सूत्रधारायमाणः।
यामेष्वङ्केष्विवाङ्कः कृतरुचिषु चतुर्ष्वेव यातः प्रतिष्ठा-
मव्यात् प्रस्तावयन् वो जगदटनमहानाटिकां सूर्य्यसूतः॥५०॥
आक्रान्त्या वाह्यमानं पशुमिव हरिणा वाहकोऽग्र्यो हरीणां
भ्राम्यन्तं पक्षपाताज्जगति समरुचिः सर्वकर्मैकसाक्षी।

प्रातरिति। प्रातः प्रत्यूषे पक्षे प्रथमतः, शैलाग्रम् उदयाद्रेः शृङ्गं रङ्ग इव अभिनयस्थानमिव तस्मिन् रजनिः जवनिकेव तिरस्करिणीव तस्याः अपायेन अपसारणेन संलक्ष्या सम्यक् दृश्या लक्ष्मीः शोभा यस्य तथोक्तः अपूर्वः अद्भुतः पुष्पाञ्जलिरिव तम् अपरपुष्पाञ्जलिमिवेत्यर्थः उडुनिकरं नक्षत्रचयं विक्षिप्य निरस्य पक्षे गुरुजनेभ्यो दत्त्वेति यावत् मङ्गलार्थमिति भावः। सूत्रधारायमाणः अभिनयविधेः प्रथमसूत्रपातकारी प्रधाननटः सूत्रधारः स इवाचरन् कृतरुचिषु विहितप्रकाशेषु पक्षे जनितानुरागेषु चतुर्ष्वेव अङ्केष्विव नाटकपरिच्छेदेष्विव अङ्कः दिवसस्य यामेषु प्रहरेषु एव प्रतिष्ठां नैपुण्यजनितप्रशंसां यातः प्राप्तः जगतस्तु अटनं भ्रमणं महानाटिकेव ताम् अस्या एव चतुरङ्कविधानात् प्रहरचतुष्टयसाम्यमिति भावः। उक्तञ्च दर्पणे। नाटिका ख्यातवृत्ता स्यात् स्त्रीप्राया चतुरङ्किकेति। प्रस्तावयन् कुर्वन् पक्षे सूचयन् सूर्य्यसूतः अरुणः वः युष्मान् अव्यात् रक्षतु। अत्रोपमालङ्कारः॥ ५०॥

आक्रान्त्येति। यः जगति समरुचिः तुल्यकान्तिः समदर्शी च सर्वेषां कर्मणां सुकृतदुष्कृतानाम् एकः अद्वितीयः साक्षी साक्षात् द्रष्टा सर्वोपरिवर्त्तमानत्वादिति भावः हरिणा हरितां हरीणाम् अश्वानाम् अग्र्यः श्रेष्ठः वाहकः नियन्ता धाम्नां तेजसां निधिः वयसा ज्येष्ठभावे समेऽपि तुल्येऽपि उभयोरपि युगपत् प्रसूतत्वादिति भावः

सूतेऽसूयत्यपीषज्जडगति वहतां कन्धरार्द्धैर्वलद्भिः
वाहानां व्यस्यताद्वः सममसमहरेर्ह्रेषितं कल्मषाणि ॥४८॥

धुन्वन्तो नीरदालीर्निजरुचिहरिताः पार्श्वयोः पक्षतुल्या-
स्तालूत्तानैः खलीनैः खचितमुखरुचः श्च्योतता लोहितेन।
उड्डीयेव व्रजन्तो वियति गतिवशादर्कवाहाः क्रियासुः
क्षेमं हेमाद्रिहृद्यद्रुमशिखरशिरःश्रेणिशाखाशुका वः ॥४९॥

सूते इति सूर्य्यमिति शेषः प्रतिक्रुहरमुखं गुहामुखेष्वित्यर्थः व्रीडावतीनां लज्जावतीनां किन्नरीणाम् अश्वमुखीनामिति यावत् अश्वदर्शनेन तासां लज्जाशीलत्वं युक्तमिति भावः मुखानि वीक्ष्य दृष्ट्वा सूते सारथौ अरुणे असूयति विद्विषत्यपि वलद्भिः तिर्य्यग्भावेन चलद्भिः कन्धरार्द्धैः ग्रीवार्द्धैः अश्वमुखीषु साभिलाषदर्शनार्थं तिर्य्यक् चालितैरिति भावः ईषत् अल्पं जडा मन्थरा रुद्धेत्यर्थः गतिर्यत्र तद् यथा तथा वहतां धावताम् असमहरेः सप्ताश्वस्य सूर्य्यस्य वाहानाम् अश्वानां ह्रेषितं शब्दविशेषः वः युष्माक कल्मषाणि पापानि व्यस्यतात् निरस्यतु ॥४८॥

धुन्वन्त इति। पार्श्वयोः पक्षतुल्याः पतत्त्रसदृशीः निजया रुच्या कान्त्या हरिताः हरिद्वर्णीकृता इत्यर्थः नीरदालीः मेघपङ्क्तीः धुन्वन्तः चालयन्तः कम्पयन्त इति यावत् जवेनेति भावः तालुषु उत्तानैः चित्रैः खलीनैः कविकाभिः श्च्योतता क्षरता लोहितेन रक्तेन खचिताः रञ्जिताः मुखानां रुचः कान्तयः येषां तथोक्ताः गतिवशात् वियति आकाशे उड्डीयेव उत्पतित्वेव व्रजन्तः धावन्तः अतएव हेमाद्रेः सुमेरोः हृद्याः मनोरमाः ये द्रुमाः वृक्षाः तेषां शिखराण्येव शिरांसि तेषां श्रेणिषु राजिषु याः शाखाः विटपाः तासु चरन्त इति भावः शुकाः शुकपक्षिणः अर्कस्य सूर्यस्य वाहाः अश्वाः वः युष्माकं क्षेमं मङ्गलं क्रियासुः कुर्वन्तु। रूपकमलङ्कारः ॥४९॥

सारथिवर्णना ।

प्रातः शैलाग्ररङ्गे रजनिजवनिकापायसंलक्ष्यलक्ष्मीः
विक्षिप्यापूर्वपुष्पाञ्जलिमुडुनिकरं सूत्रधारायमाणः ।
यामेष्वङ्केष्विवाङ्कः कृतरुचिषु चतुर्ष्वेव यातः प्रतिष्ठा-
मव्यात् प्रस्तावयन् वो जगदटनमहानाटिकां सूर्य्यसूतः॥५०॥
आक्रान्त्या वाह्यमानं पशुमिव हरिणा वाहकोऽग्र्यो हरीणां
भ्राम्यन्तं पक्षपाताज्जगति समरुचिः सर्वकर्मैकसाक्षी ।

प्रातरिति । प्रातः प्रत्यूषे पक्षे प्रथमतः, शैलाग्रम् उदयाद्रेः शृङ्गं रङ्ग इव अभिनयस्थानमिव तस्मिन् रजनिः जवनिकेव तिरस्करिणीव तस्याः अपायेन अपसारणेन संलक्ष्या सम्यक् दृश्या लक्ष्मीः शोभा यस्य तथोक्तः अपूर्वः अद्भुतः पुष्पाञ्जलिरिव तम् अपरपुष्पाञ्जलिमिवेत्यर्थः उडुनिकरं नक्षत्रचयं विक्षिप्य निरस्य पक्षे गुरुजनेभ्यो दत्त्वेति यावत् मङ्गलार्थमिति भावः । सूत्रधारायमाणः अभिनयविधेः प्रथमसूत्रपातकारी प्रधाननटः सूत्रधारः स इवाचरन् कृतरुचिषु विहितप्रकाशेषु पक्षे जनितानुरागेषु चतुर्ष्वेव अङ्केष्विव नाटकपरिच्छेदेष्विव अङ्कः दिवसस्य यामेषु प्रहरेषु एव प्रतिष्ठां नैपुण्यजनितप्रशंसां यातः प्राप्तः जगतृसु अटनं भ्रमणं महानाटिकेव ताम् अस्या एव चतुरङ्कविधानात् प्रहरचतुष्टयसाम्यमिति भावः । उक्तञ्च दर्पणे । नाटिका क्लृप्तवृत्ता स्यात् स्त्रीप्राया चतुरङ्किकेति । प्रस्तावयन् कुर्वन् पक्षे सूचयन् सूर्य्यसूतः अरुणः वः युष्मान् अव्यात् रक्षतु । अत्रोपमालङ्कारः ॥ ५० ॥

आक्रान्त्येति । यः जगति समरुचिः तुल्यकान्तिः समदर्शी च सर्वेषां कर्मणां सुकृतदुष्कृतानाम् एकः अद्वितीयः साक्षी साक्षात् द्रष्टा सर्वोपरिवर्त्तमानत्वादिति भावः हरिणा हरितां हरीणाम् अश्वानाम् अग्र्यः श्रेष्ठः वाहकः नियन्ता धाम्नां तेजसां निधिः वयसा ज्येष्ठभावे समेऽपि तुल्येऽपि उभयोरपि युगपत् प्रसूतत्वादिति भावः

सूतेऽसूयत्यपीषज्जडगति वहतां कन्धरार्द्धैर्वलद्भिः
वाहानां व्यस्यताद्वः सममसमहरेर्हेषितं कल्मषाणि ॥४८॥
धुन्वन्तो नीरदालीर्निजरुचिहरिताः पार्श्वयोः पक्षतुल्या-
स्तालूत्तानैः खलीनैः खचितमुखरुचः श्च्योतता लोहितेन ।
उड्डीयेव व्रजन्तो वियति गतिवशादर्कवाहाः क्रियासुः
क्षेमं हेमाद्रिहृद्यद्रुमशिखरशिरःश्रेणिशाखाशुका वः ॥४९॥

सूते इति सूर्य्यमिति शेषः प्रतिकूहरमुखं गुहामुखेष्वित्यर्थः व्रीड़ावतीनां लज्जावतीनां किन्नरीणाम् अश्वमुखीनामिति यावत् अश्वदर्शनेन तासां लज्जाशीलत्वं युक्तमिति भावः मुखानि वीक्ष्य दृष्ट्वा सूते सारथौ असूयति विद्विषत्यपि वलद्भिः तिर्य्यग्भावेन चलद्भिः कन्धरार्द्धैः ग्रीवार्द्धैः अश्वमुखीषु साभिलाषदर्शनार्थं तिर्य्यक् चालितैरिति भावः ईषत् अल्पं जड़ा मन्थरा रुद्धेत्यर्थः गतिर्यत्र तद् यथा तथा वहतां धावताम् असमहरेः सप्ताश्वस्य सूर्य्यस्य वाहानाम् अश्वानां हेषितं शब्दविशेषः वः युष्माक कल्मषाणि पापानि व्यस्यतात् निरस्यतु ॥४८॥

धुन्वन्त इति । पार्श्वयोः पक्षतुल्याः पतत्त्रसदृशीः निजया रुच्या कान्त्या हरिताः हरिद्वर्णीकृता इत्यर्थः नीरदालीः मेघपङ्क्तीः धुन्वन्तः चालयन्तः कम्पयन्त इति यावत् जवेनेति भावः तालुषु उत्तानैः चित्रैः खलीनैः कविकाभिः श्च्योतता क्षरता लोहितेन रक्तेन खचिताः रञ्जिताः मुखानां रुचः कान्तयः येषां तथोक्ताः गतिवशात् वियति आकाशे उड्डीयेव उत्पतित्वेव व्रजन्तः धावन्तः अतएव हेमाद्रेः सुमेरोः हृद्याः मनोरमाः ये द्रुमाः वृक्षाः तेषां शिखराण्येव शिरांसि तेषां श्रेणिषु राजिषु याः शाखाः विटपाः तासु चरन्त इति भावः शुकाः शुकपक्षिणः अर्कस्य सूर्य्यस्य वाहाः अश्वाः वः युष्माकं क्षेमं मङ्गलं क्रियासुः कुर्वन्तु । रूपकमलङ्कारः ॥४९॥

## सारथिवर्णना।

प्रातः शैलाग्ररङ्गे रजनिजवनिकापायसंलक्ष्यलक्ष्मीः
विक्षिप्यापूर्वपुष्पाञ्जलिमुडुनिकरं सूत्रधारायमाणः।
यामेष्वङ्केष्विवाङ्कः कृतरुचिषु चतुर्ष्वेव यातः प्रतिष्ठा-
मव्यात् प्रस्तावयन् वो जगदटनमहानाटिकां सूर्य्यसूतः॥५०॥
आक्रान्त्या वाह्यमानं पशुमिव हरिणा वाहकोऽग्र्यो हरीणां
भ्राम्यन्तं पक्षपाताज्जगति समरुचिः सर्वकर्मैकसाक्षी।

प्रातरिति। प्रातः प्रत्यूषे पक्षे प्रथमतः, शैलाग्रम् उदयाद्रेः शृङ्गं रङ्ग इव अभिनयस्थानमिव तस्मिन् रजनिः जवनिकेव तिरस्करिणीव तस्याः अपायेन अपसारणेन संलक्ष्या सम्यक् दृश्या लक्ष्मीः शोभा यस्य तथोक्तः अपूर्वः अद्भुतः पुष्पाञ्जलिरिव तम् अपरपुष्पाञ्जलिमिवेत्यर्थः उडुनिकरं नक्षत्रचयं विक्षिप्य निरस्य पक्षे गुरुजनेभ्यो दत्त्वेति यावत् मङ्गलार्थमिति भावः। सूत्रधारायमाणः अभिनयविधेः प्रथमसूत्रपातकारी प्रधाननटः सूत्रधारः स इवाचरन् कृतरुचिषु विहितप्रकाशेषु पक्षे जनितानुरागेषु चतुर्ष्वेव अङ्केष्विव नाटकपरिच्छेदेष्विव अङ्कः दिवसस्य यामेषु प्रहरेषु एव प्रतिष्ठां नैपुण्यजनितप्रशंसां यातः प्राप्तः जगत्सु अटनं भ्रमणं महानाटिकेव ताम् अस्या एव चतुरङ्कविधानात् प्रहरचतुष्टयसाम्यमिति भावः। उक्तञ्च दर्पणे। नाटिका क्लृप्तवृत्ता स्यात् स्त्रीप्राया चतुरङ्किकेति। प्रस्तावयन् कुर्वन् पक्षे सूचयन् सूर्य्यसूतः अरुणः वः युष्मान् अव्यात् रक्षतु। अत्रोपमालङ्कारः॥ ५०॥

आक्रान्त्येति। यः जगति समरुचिः तुल्यकान्तिः समदर्शी च सर्वेषां कर्मणां सुकृतदुष्कृतानाम् एकः अद्वितीयः साक्षी साक्षात् द्रष्टा सर्वोपरिवर्त्तमानत्वादिति भावः हरिणां हरितां हरीणाम् अश्वानाम् अग्र्यः श्रेष्ठः वाहकः नियन्ता धाम्नां तेजसां निधिः वयसा ज्येष्ठभावे समेऽपि तुल्येऽपि उभयोरपि युगपत् प्रसूतत्वादिति भावः

शत्रुं नेत्रश्रुतीनामवजयति वयोज्येष्ठभावे समेऽपि
धाम्ना धाम्नां निधिर्यः स भवदघनुदे नूतनस्तादनूरुः ॥५१॥
दत्तार्घैर्दूरनम्रैर्वियति विनयतो वीजितः सिद्धसङ्घैः
सामर्थ्यं सारथिर्वः स दशशतरुचेः सातिरेकं करोतु ।
आपीय प्रातरेव प्रततहिमपयःस्यन्दिनीरिन्दुभासो
यः काष्ठादीपनोऽग्रे जड़ित इव भृशं सेवते पृष्ठतोऽर्कम् ॥५२॥
मुञ्चन् रश्मीन् दिनादौ दिनगमसमये संहरंश्च स्वतन्त्रः
स्तोत्रप्रख्यातवीर्यो विरतहरिपदाक्रान्तिबद्धाभियोगः ।

व्याक्रान्त्या अश्वानां वेगाक्रमेणेनेत्यर्थः वाह्यमानं सञ्चाल्यमानं पशुमिव पक्षपातात् पक्षपवनाद्धेत्योरिति भावः भ्राम्यन्तं घूर्णमानं नेत्रश्रुतीनां चक्षुःश्रवसां सर्पाणामित्यर्थः शत्रुं गरुड़ं धाम्ना तेजसा अवजयति पराजयते, स नूतनः नवोदितः अनूरुः अरुणः भवतां युष्माकम् अघ-नुदे पापनाशनाय स्तात् भवतु ॥ ५१ ॥

दत्तार्घैरिति । काष्ठाः दिशः, दिशस्तु ककुभः काष्ठा इत्यमरः । दीपयतीति तथोक्तः यः प्रततहिमपयःस्यन्दिनीः विस्तृतशिशिरजल-स्राविणीः इन्दोश्चन्द्रस्य भासः मयूखान् आपीय सम्यक् पीत्वा प्रातरेव जड़ित इव शीतार्त्त इव अग्रे स्थित इति शेषः पृष्ठतः स्थितमिति शेषः अर्कं सूर्य्यं भृशम् अत्यर्थं सेवते भजति वियति आकाशे विन-यतः विनयेन दत्तम् अर्घ्यं यैः तथाभूतैः दूरात् तेजःस्पर्शभियेति भावः नम्रैः विनतैः सिद्धसङ्घैः देवयोनिविशेषाणां गणैः वीजितः अवलोकितः सः दशशतरुचेः सहस्रकिरणस्य सूर्य्यस्य सारथिः वः युष्माकं सातिरेकम् अत्यन्तं सामर्थ्यं योग्यतां करोतु जनयतु । उत्-प्रेक्षालङ्कारः ॥ ५२ ॥

मुञ्चन्निति । यः दिनादौ प्रातः रश्मीन् प्रग्रहान् मुञ्चन् त्यजन् प्रसारयन्नित्यर्थः दिनगमसमये दिनावसानकाले संहरन् सङ्कोचयन्

कालोत्कर्षाल्लघुत्वं प्रसभमधिपतौ योजयन् यो द्विजानां
सेवाप्रीतेन पूष्णा स्वसम इव कृतस्त्रायतां सोऽरुणो वः ॥५२॥
शातः श्यामालतायाः परशुरिव तमोऽरण्यवह्नेरिवार्चिः
प्राच्येवाग्रे गृहीतुं ग्रहकुमुदवनं प्रागुदस्तोग्रहस्तः ।
ऐक्यं भिन्दन् द्युभूम्योरवधिरिव विधातेव विश्वप्रबोधं
वाहानां वो विनेता व्यपनयतु विपन्नाम धामाधिपस्य ॥५४॥
पौरस्त्यस्तोयदर्त्तोः पवन इव पतन् पावकस्येव धूमो

स्वतन्त्रः स्वाधीनः स्तोत्रेण स्तवेन प्रख्यातं प्रथितं वीर्य्यं सामर्थ्यं यस्य तथाभूतः विरतेषु विश्रान्तेषु चारेषु वाहेषु पदाक्रान्त्या चरणाभ्यामाक्रमणेन आहृत्येति यावत् बद्धः कृतः अभियोगः वाहनत्वं येन तथोक्तः कालोत्कर्षात् कालक्रमात् द्विजानाम् अधिपतौ चन्द्रमसि, द्विजराजः शशधर इत्यमरः । ब्राह्मणप्रवरे चेति ध्वनिः प्रसभं सहसा लघुत्वं लाघवं मालिन्यमिति यावत् योजयन् सङ्घटयन् सेवया आराधनया प्रीतेन प्रसन्नेन पूष्णा सूर्य्येण स्वस्य आत्मनः सम इव कृतः निजप्रतिनिधीकृत इति यावत् सः अरुणः वः युष्मान् त्रायतां रक्षतु ॥ ५२ ॥

शात इति । श्यामालतायाः श्यामाख्यवल्ल्याः शातः तीक्ष्णः परशुरिव कुठार इव तमः तिमिरम् अरण्यमिव तस्य वह्नेरग्नेः अर्चिरिव ज्वालेव अग्रे प्राच्येव पूर्व्वस्यां दिश्येव ग्रहाः कुमुदवनमिव तत् गृहीतुम् आक्रमितुं प्राक् पूर्व्वम् उदस्ताः प्रसारिताः उग्राः तीक्ष्णाः हस्ताः कराः येन तथोक्तः द्युभूम्योः द्यावापृथिव्योः ऐक्यम् ऐक्यभावं तमसि विलीनत्वादिति भावः भिन्दन् अपनयन् विश्वेषां जगतां प्रबोधं विधातेव अवधिरिव सीमेव धाम्नां [illegible] तेजसां पत्युः सूर्य्यस्य वाहानाम् अश्वानां विनेता नियन्ता अरुणः वः युष्माकं विपदां नाम व्यपनयतु नाशयतु । उत्प्रेक्षालङ्कारः ॥ ५४ ॥

पौरस्त्य इति । पौरस्त्यः पूर्व्वदिग्भवः तोयदर्त्तोः वर्षर्त्तोः पवन

विश्वस्यैवादिसर्गः प्रणव इव परं पावनो वेदराशेः ।
सन्ध्यानृत्योत्सवेच्छोरिव मदनरिपोर्नन्दिनान्दीनिनादः
सौरस्याग्रे सुखं वो वितरतु विनतानन्दनः स्यन्दनस्य ॥५५॥
पर्य्याप्तं तप्तचामीकरकटकतटे श्लिष्टशीतेतरांशा-
वासीदत्स्यन्दनाश्वानुकृतमरकते पद्मरागायमाणः ।
यः सोत्कर्षां विभूषां कुरुत इव कुलक्ष्माभृदीशस्य मेरोः
एनांस्यङ्गाय दूरं गमयतु स गुरुः काद्रवेयद्विषो वः ॥ ५६ ॥

धूम पतन् आविर्भवन् पावकस्य अग्नेः धूम इव विश्वस्य जगतः आदि सर्ग इव प्रथमा सृष्टिरिव परम् अतिमात्रं पावनः वेदराशेः श्रुतिचयस्य प्रणव इव ओङ्कार इव सन्ध्यायां पूर्वायामिति भावः नृत्योत्सवस्य इच्छोः अभिलाषिणः मदनारिपोः हरस्य नन्दिनः किङ्करस्य नान्दीनिनाद इव प्रथममङ्गलध्वनिरिवेत्यर्थः सौरस्य स्यन्दनस्य अग्रे स्थित इति शेषः विनतानन्दनः अरुणः वः युष्माकं सुखं वितरतु ददातु । उत्प्रेक्षालङ्कारः ॥ ५५ ॥

पर्य्याप्तमिति । यः श्लिष्टः आलिङ्गितः शीतेतरांशुः तिग्मरश्मि-र्येन तादृशे अनवरत तप्तचामीकराणि ज्वलत्काञ्चनानि सूर्य्यकर-स्पर्शादिति भावः कटकतटानि नितम्बदेशाः यस्य तादृशे आसीदद्भिः सञ्चरद्भिः स्यन्दनाश्वैः रथाश्वैः अनुकृतानि मरकतानि यस्य तथाविधे मरकतैरिति भावः पर्य्याप्तं सम्यक् यथा तथा पद्मरागायमाणः पद्म-राग इवाचरन् कुलक्ष्माभृतां कुलाचलानाम् ईशस्य मेरोः सोत्कर्षां महतीमित्यर्थः विभूषाम् अलङ्कृतिं कुरुते इव सम्पादयतीव स काद्र-वेयाणां पन्नगानां द्विट् शत्रुः तस्य गरुडस्य गुरुः अग्रजः अरुणः अङ्गाय झटिति वः युष्माकम् एनांसि पापानि दूरम् अत्यर्थं गमयतु यान्तिं नयतु । अत्रोपमोत्प्रेक्षयोः सङ्करः ॥ ५६ ॥

नीत्वाश्वान् सप्तकक्ष्या इव नियमवशं वेत्रकल्पप्रतोद-
स्तूर्णं ध्वान्तस्य राशावितरजन इवोत्सारिते दूरभाजि ।
पूर्वं प्रष्ठो रथस्य क्षितिभृदधिपतीन् दर्शयंस्त्रायतां व-
स्त्रैलोक्यास्थानदानोद्यतदिवसपतेः प्राक् प्रतीहारपालः ॥ ५७ ॥
वज्रिन् ! जातं विकासीक्षणकमलवनं भासि नो भासि वह्ने !
तातं नत्वाश्वपार्श्वादपसर यम ! मह्निषं राक्षसा ! वीक्षिताः स्थ !
सप्तीन् सिञ्च प्रचेतः ! पवन ! भज जवं वित्तपा ! ऽऽवेदितस्त्वं
वन्देशर्वेति जल्पन् प्रतिदिशमधिपान् पातु पूष्णोऽग्रणीर्वः ५८

नीत्वेति । सप्त अश्वान् कक्ष्या इव प्रकोष्ठानिव नियमवशं नियमाधीन-ताम् अधिकृताधीनताञ्च नीत्वा वेत्रकल्पः वेत्रसदृशः प्रतोदः चालनयष्टि-विशेषः यस्य तथाभूतः तूर्णं शीघ्रं ध्वान्तस्य राशौ अन्धकारपुञ्जे इतरजन इव उत्सारिते अपसारिते अतएव दूरभाजि दूरं गते सति रथस्य प्रष्ठः अग्रगः पूर्वं क्षितिभृतां पर्वतानाम् अधिपतीन् महतः पर्वतानित्यर्थः दर्शयन् अत्युच्चत्वात्तेषामग्रे दर्शनमिति भावः त्रैलोक्यमेव आस्थानं सभा तत्र दानोद्यतः आनन्ददाने प्रवृत्तस्येति यावत् दिवसपतेः सूर्यस्य प्राक् प्रथमः प्रतीहारपालः दौवारिकः अरुणः वः युष्मान् त्रायतां रक्षतु ॥ ५७ ॥

वज्रिन्निति । हे वज्रिन् इन्द्र ! ईक्षणान्येव नेत्राण्येव कमलानि तेषां वनं विकासि विकस्वरं जातं भवेति शेषः सूर्यदर्शनात् कमलविकास इति प्रसिद्धिः । हे वह्ने ! अनल ! त्वं भासि सूर्यप्रभायां नो भासि न राजसे, हे यम ! तातं पितरं सूर्यं नत्वा प्रणम्य अश्वानां पार्श्वात् महिषं नय अपसारय, हे राक्षसाः ! नैर्ऋताः वीक्षिताः स्थ दृष्टाः स्थ, हे प्रचेतः ! वरुण ! सप्तीन् अश्वान् सिञ्च श्रमापनयनार्थमिति भावः, हे पवन ! जवं वेगं भज आश्रय, हे वित्तप ! धनपते कुबेर ! त्वम् आवेदितः विज्ञापितः, हे शर्व शम्भो !

प्राशानाशान्तपालादरुण ! वरुणतो मा ग्रहीः प्रग्रहार्थं
तृष्णां कृष्णस्य चक्रे जहिहि न हि रथो याति मे नैकचक्रः।
योक्तुं योग्यं किमुच्चैःश्रवसमभिलषस्यष्टमं हव्यभक्तो-
स्त्यक्तान्यापेच्चविश्वोपकृतिरिति रविः शास्ति यं सोऽवताद्वः ५९

नोमूर्च्छां छिन्नवाञ्छः श्रमविवशतनुर्नैव नाप्यास्यशोषी
पान्थः पथ्येतराणि चपयतु भवतां भास्वतोऽग्रेसरः सः।
यः संश्रित्य त्रिलोकीमटति पटुतरैस्ताप्यमानो मयूखैः
आरादारामरेखामिव हरितमणिश्यामलामश्वपङ्क्तिम्॥६०॥

त्वां वन्दे प्रणमामि, इतीत्थं प्रतिदिशम् अष्टासु प्राच्यादिषु दिक्षु अधिपान् तत्तद्दिक्पालान् जल्पन् आलपन् पूष्णः सूर्य्यस्य अग्रणीः रथाग्रवर्त्ती अरुणः वः युष्मान् पातु रक्षतु॥ ५८॥

पाशानिति। हे अरुण ! आशान्तपालात् दिगन्तपालकात् वरुणतः वरुणात् प्रग्रहार्थं रश्मिनिर्माणार्थं पाशान् रज्जूः मा ग्रहीः न गृहाण, कृष्णस्य नारायणस्य चक्रे तृष्णां लालसां जहिहि त्यज, हि यतः मे मम एकचक्रः रथः न याति न गच्छति इति न अपितु गच्छत्येव। अष्टमं योग्यम् अश्वं योक्तुं रथे इति शेषः किं कथं हव्यभक्तोरिन्द्रस्य उच्चैःश्रवसं तदाख्यम् अश्वम् अभिलषसि ? तेन न प्रयोजनमिति भावः त्यक्ता अन्येषाम् अपेक्षा साहाय्यं यत्र तद् यथा तथा विश्वेषां जगताम् उपकृतिरुपकारः कार्य्येति शेषः जगदुपकारकरणे परसाहाय्यं न ग्राह्यं स्वत एव प्रवर्त्तितव्यमिति भावः इतीत्थं रविः सूर्य्यः यं शास्ति उपदिशति सः अरुणः वः युष्मान् अवतात् रक्षतु॥ ५९॥

नो इति। यः पटुतरैः तीक्ष्णतरैः मयूखैः किरणैः ताप्यमानः सन् आरात् समीपे आरामस्य उपवनस्य रेखामिव हरितमणिश्यामलां मरकतश्यामाम् अश्वपङ्क्तिं सप्त अश्वान् संश्रित्य त्रिलोकीं

सीदन्तोऽन्तर्निमज्जज्जड़खुरमुषलाः सैकते नाकनद्याः
स्कन्दन्तः कन्दरालीः कनकशिखरिणो मेखलासु स्खलन्तः ।
दूरं दूर्वास्थलीत्का मरकतदृषदि स्थास्नवो यत्र याताः
पूष्णोऽश्वाः पूरयंस्तैस्तदवतु जवनैर्हुङ्कृतेनाग्रगो वः ॥ ६१ ॥
पीनोरःप्रेरिताभ्रैश्चरमखुरपुटाग्रस्थितैः प्रातरद्रा-
वाद्दीर्घाङ्गैरुदस्तो हरिभिरपगतासङ्गनिःशब्दचक्रः ।

त्रिभुवनम् अटति पर्य्यटति, स पान्थः पथिकः सतताध्वग इत्यर्थः किन्तु नो मूर्च्छया उत्तापातिशयेन श्रमेण च जनितयेति भावः छिन्ना अपनीता वाञ्छा अभिलाषः सौरमार्ग्ये इति भावः यस्य तथोक्तः नैव श्रमेण विवशा विह्वला आर्त्तिर्यावत् तनुर्यस्य तथाभूतः नापि आश्रमोपी शुर्कसुख इत्यर्थः भास्वतः सूर्य्यस्य अग्रेसरः अरुणः भवतां पथ्यैतराणि अहितानि क्षपयतु नाशयतु ॥ ६० ॥

सीदन्त इति । नाकनद्याः स्वर्गगङ्गायाः सैकते पुलिने अन्तर्निमज्जन्तः अतएव जड़ाः मन्थराः चलनशक्तिहीना इति यावत् खुराः मुषला इव येषां तथाभूताः अतएव सीदन्तः अवसादं गच्छन्तः कन्दरालीः गह्वरावलीः स्कन्दन्तः भ्रमन्तः किन्तु कनकशिखरिणः सुमेरोः मेखलासु नितम्बेषु स्खलन्तः पतन्तः दूरम् अत्यर्थं दूर्वास्थलेषु दूर्वातृणपूरितप्रदेशेषु उत्काः उत्सुकाः तद्भक्षणार्थमिति भावः अतएव मरकतदृषदि मरकतशिलायां स्थास्नवः स्थितिमन्तः स्थिता इति शेषः दूर्वाभ्रमेणेति भावः यत् यदा न याताः न चलिताः अश्वाः, तत् तदा हुङ्कृतेन हुङ्कारेण जवनैः वेगगामिभिः तैः अश्वैः पूरयन् सञ्चरन् पूष्णः सूर्य्यस्य अग्रगः अरुणः वः युष्मान् अवतु रक्षतु ॥ ६१ ॥

पीनोर इति । पीनेन पीवरेण उरसा वक्षःस्थलेन प्रेरिताश्चालिताः अभ्राः मेघाः यैः चरमखुरपुटाग्राभ्यां पश्चात्खुराग्राभ्यां स्थितैः दण्डायमानैः आदीर्घाणि अतिदीर्घाणि अङ्गानि येषां तैः हरिभिर्वाजिभिः प्रातः अद्रौ उदयाचले उदस्तः उर्द्धंक्षिप्य नीतः

उत्तामानूरुमूर्द्धावनतिहठभवद्विप्रतीपप्रयाणः
प्राह्णे श्रेयो विधत्तां सवितुरवतरन् व्योमवीथीं रथो वः॥ ६२॥
उत्कीर्णस्वर्णरेणुद्रुतखुरदलिता पार्श्वयोः शश्वदश्वैः
अश्रान्तभ्रान्तचक्रभ्रमनिखिलमिलन्नेमि निम्ना भरेण ।
मेरोर्मूर्द्धन्यघं वो विघटयतु रवेरेकवीथी रथस्य
स्रोतोदत्ताम्बुरिक्तप्रकटितपुलिनोद्धूसरा स्वर्धुनी वः ॥६३॥
ध्वान्तौघध्वंसदीक्षाविधिगुरु वहता प्राक् सहस्रं कराणां
अर्यम्णा यो गरिम्णः पदमतुलमुपानीयताध्यासनेन ।

अपमतेन आसक्तेन कस्मिंश्चिदपि वस्तुनि स्पर्शराहित्येनेति भावः निःशब्दं चक्रं यस्य तादृशः उत्तानेन उन्नमितेन अनूरोः अरुणस्य मूर्द्धा शिरसा या अवनतिः अवनमनं प्रणामः तत्र हठेन सहसा भवत् विप्रतीपं प्रतिकूलं प्रयाणं गतिः यस्य तथाभूतः तदानीमश्वानां विशृङ्खलत्वादिति भावः प्राह्णे प्रभाते व्योमवीथीम् आकाशमार्गम् अवतरन् सवितुः सूर्य्यस्य रथः वः युष्माकं श्रेयः मङ्गलं विधत्तां करोतु ॥ ६२ ॥

उत्कीर्णेति । शश्वत् सततम् अश्वैः पार्श्वयोः उत्कीर्णेषु स्वर्णरेणुषु काञ्चनरजःसु द्रुतैः क्षिप्रचालितैः खुरैः दलिता क्षुण्णा अश्रान्तम् अनवरतं भ्रान्तस्य भ्रमतः चक्रस्य भ्रमेण निखिलं सम्यक् यथा तथा मिलन्ती सङ्गच्छन्ती नेमिः प्रधिः प्रान्तदेशः यत्र तत् यथा तथा भरेण गौरवातिरेकेण निम्ना नतीभूता स्वेन निजेन स्रोतसा उत्तापेन दत्तं शुष्कं यत् अम्बु जलं तेन रिक्तं रहितम् अतएव प्रकटितं यत् पुलिनं सैकतम् तेन उद्धूसरा धूसरवर्णा स्वर्धुनी गङ्गा यया तादृशी मेरोः मूर्ध्नि शिरसि रवेः सूर्य्यस्य रथस्य एकवीथी एका पद्धतिः वः युष्माकम् अघं पापं विघटयतु नाशयतु ॥ ६३ ॥

ध्वान्तेति । ध्वान्तौघानाम् अन्धकारनिचयानां ध्वंसे दीक्षा-

स श्रान्तानां नितान्तं भरमिव मरुतामक्षमाणां विसोढुं
स्कन्धात्स्कन्धं व्रजन्वो वृजिनविजितये भास्वतः स्यन्दनोऽस्तु ॥६४॥
योक्त्रीभूतान् युगस्य ग्रसितुमिव पुरो दन्दशूकान् दधानो
द्वेधाव्यस्ताम्बुवाहावलिविहितबृहत्पक्षविक्षेपशोभः ।
सावित्रः स्यन्दनोऽसौ निरतिशयरयप्रीणितानूरुरेनः
क्षेपीयो वो गरुत्मानिव हरतु हरीच्छाभिसंविधेयप्रचारः ॥६५॥
धुर्ध्वस्ताग्र्यग्रहाणि ध्वजपटपवनान्दोलितेन्दूनि दूरं

विधिः नियमविधानं तत्र गुरू आचार्य्यस्वरूपं कराणां किरणानां नक्षत्रं वहता धारयता अर्य्यम्णा सूर्य्येण अध्यासनेन अध्यारोहणेन यः प्राक् प्रथमं गरिम्णः गौरवस्य अतुलं पदम् उपानीयत प्रापितः अधिकगौरववान् कृत इत्यर्थः सः नितान्तं श्रान्तानाम् अतएव भरं विसोढुम् अक्षमाणामिव मरुतां वायूनां स्कन्धात् स्कन्धं व्रजन् भास्वतः सूर्य्यस्य स्यन्दनः रथः वः युष्माकं वृजिनविजितये पापध्वंसाय अस्तु भवतु ॥ ६४ ॥

योक्त्रीभूतानिति । युगस्य रथाग्रवर्त्तिकाष्ठविशेषस्य योक्त्रीभूतान् रज्जूरिति भावः पुरः अग्रतः ग्रसितुमिव दन्दशूकान् पन्नगान् दधानः धारयन् द्वेधा व्यस्ताभ्यां विभक्ताभ्याम् उभयोः पार्श्वयोः स्थापिताभ्यामिति भावः अम्बुवाहावलिभ्यां मेघनिचयाभ्यां विहिता कृता बृहतोः पक्षयोः विक्षेपेणेव शोभा यस्य पक्षे विक्षेपस्य शोभा यस्य तथाभूतः निरतिशयेन रयेण वेगेन प्रीणितः सन्तोषितः अनूरुः सारथिः पक्षे अग्रजः येन तादृशः हरेः सूर्य्यस्य पक्षे विष्णोः इच्छया संविधेयः प्रचारः गतिः यस्य तथोक्तः असौ सावित्रः सौरः स्यन्दनः रथः गरुत्मानिव गरुड़ इव वः युष्माकम् एनः पापं क्षेपीयः अतिक्षिप्रं हरतु नाशयतु ॥ ६५ ॥

धुरिति । धुरा कूपभागेन ध्वस्ताः [illegible] खण्डिताः अग्र्याः ग्रहाः यै:

राह्वौ ग्रासाभिलाषादनुसरति पुनर्दत्तचक्रव्यथानि।
श्रान्ताश्वश्वासहेलाधुतविबुधधुनीनिर्झराम्भांसि भद्रं
देयासुर्वो दवीयो दिवि दिवसपतेः स्यन्दनप्रस्थितानि ॥६६॥
अक्षे रक्षां निबध्य प्रतिसरवलयैर्योजयन्त्यो युगाग्रं
धुस्तम्भे दत्तधूपाः प्रतिहतसुमनोगोचरे कूवरस्य।
चर्चाश्चक्रे ददत्यो मलयजरजसा सिद्धसाध्व्यस्त्रिसन्ध्यं
वन्दन्ते यं द्युमार्गे स दहतु दुरितान्यंशुमत्स्यन्दनो वः ॥६७॥
नन्तुं नाकालयानामनिशमुपनता पद्धती पङ्क्तिरेव
क्षौदी नक्षत्रराशेरकृशरयमिलच्चक्रपिष्टस्य धूलिः।

तथोक्तानि ध्वजपटस्य पताकायाः पवनेन आन्दोलितः इन्दुश्चन्द्रः यैः तथाभूतानि राह्वौ ग्रासाभिलाषात् ग्रासेच्छया अनुसरति अनुपतति सति दूरम् अत्यर्थं यथा तथा दत्ता चक्रेण चक्राघातेनेति भावः व्यथा पीड़ा यैः तथाभूतानि श्रान्तानाम् अश्वानां श्वासात् हेलया धुतानि कम्पितानि विबुधधुन्याः देवनद्याः गङ्गायाः निर्झराम्भांसि यैः तथोक्तानि दिवि आकाशे दिवसपतेः सूर्य्यस्य स्यन्दनप्रस्थितानि रथगतयः वः युष्माकं दवीयः अतिदूरं भद्रं कुशलं देयासुः ददतु ॥६६॥

अक्षे इति। अक्षे चक्रे रक्षां रक्षार्थं सूत्रं निबध्य बद्धा प्रतिसरवलयैः सूत्रवलयैः युगाग्रं योजयन्त्यः कूवरस्य रथाग्रावयवविशेषस्य प्रतिहतानि प्रकर्षेण अर्पितानि सुमनांसि पुष्पाणि यस्मिन् तादृशे गोचरे सन्निधौ धुस्तम्भे अग्रस्तम्भे दत्तधूपाः धूपं ददत्यः चक्रे मलयजरजसा चन्दनपरागेण चर्च्चाः लेपनानि ददत्यः सिद्धानां देवयोनिविशेषाणां साध्व्यः पतिव्रताः स्त्रियः द्युमार्गे आकाशमार्गे त्रिसन्ध्यं यं वन्दन्ते, सः अंशुमतः सूर्य्यस्य स्यन्दनः रथः वः युष्माकं दुरितानि पापानि दहतु भस्मीकरोतु ॥ ६७ ॥

नन्तुमिति। यस्य पद्धतौ अनिशम् अजस्रं नन्तुं वन्दितुम्

ह्रेषाह्लादो हरीणां सुरशिखरिदरीः पूरयन्नेमिनादो
यस्याव्यात्तीव्रभानोः स दिवि भुवि यथा व्यक्तचिह्नो रथो वः॥६८॥
एकाह्नेनैव दीर्घां त्रिभुवनपदवीं लङ्घयन् यो लघिष्ठः
पृष्ठे मेरोर्गरीयान्दलितमणिदृषत्त्विंषि पिंषन् शिरांसि।
यः सर्वस्योपरिष्टादथच पुनरधस्तादिवास्ताद्रिमूर्ध्नि
ब्रध्नस्याव्यात्स एवं दुरधिगमपरिस्पन्दनः स्यन्दनो वः॥६९॥
निष्पन्दानां विमानावलिविततदिवां देववृन्दारकाणां
वृन्दैरानन्दसान्द्रोद्यममपि वहतां विन्द्यते वन्दितुं नो।

नाकालयानां स्वर्गवासिनां पङ्क्तिरेव श्रेणिरेव उपनता। यस्य भूमिः अक्षुणेन महता रयेण मिलता सञ्चरता चक्रेण पिष्टस्य नक्षत्रराशेः नक्षत्रमण्डलस्य क्षोदः चूर्णः। यस्य नेमिनादः सुरशिखरिणः सुमेरोः दरीः गुहाः पूरयन् हरीणां वाजिनां ह्रेषाह्लादः ह्रेषितनादः अन्तरीक्षे चक्रशब्दस्यासम्भवादिति भावः। भुवि पृथिव्यां यथा दिवि आकाशे अव्यक्तं चिह्नं यस्य तादृशः तीव्रभानोः सूर्य्यस्य स रथः युष्मान् अव्यात् रक्षतु॥६८॥

एकाह्नेनेति। यः लघिष्ठः लघुतरः सन् एकाह्नेनैव एकेन दिवसेनैव दीर्घां त्रिभुवनपदवीं त्रिलोकमार्गं लङ्घयन् अतिक्रामन् तथा गरीयान् अतिशयेन गौरववान् सन् मेरोः पृष्ठे उपरि दलिताः पराभूताः मणिदृषदां रत्नशिलानां त्विषः कान्तयः येषां तानि शिरांसि शृङ्गाणि पिंषन् चूर्णयन् यः सर्वस्य जगतः उपरिष्टात् उपरिस्थितः अथ च पुनरस्ताद्रेरस्ताचलस्य मूर्ध्नि शिरसि अधस्तादिव अधोवर्त्तीव एवम् इत्थं दुरधिगमं दुर्ज्ञेयं परिस्पन्दनं गमनं यस्य तादृशः सन् राजते इति शेषः स ब्रध्नस्य सूर्य्यस्य स्यन्दनः वः युष्मान् अव्यात् रक्षतु॥६९॥

निष्पन्दानामिति। निष्पन्दानां निश्चलानां विमानावलिभिः देव-

मन्दाकिन्याममन्दः पुलिनभुवि मृदुर्मन्दरे मन्दराभे
मन्दारैर्मण्डितोऽरं दधदपि दिनकृत्स्यन्दनः स्तान्मुदे वः ॥७०
चक्री चक्रारपङ्क्तिं हरिरपि च हरीन् धूर्जटिर्धूर्ध्वजाग्रान्
अक्षं नक्षत्रनाथोऽरुणमपि वरुणः कूवराग्रं कुबेरः ।
रंहः सङ्घः सुराणां जगदुपकृतये नित्यमुक्तस्य यस्य
स्तौति प्रीतिप्रसन्नोऽन्वहमहिमरुचेः सोऽवतात्स्यन्दनो वः॥७१॥
नेत्राहीनेन मूले विहितपरिकरः सिद्धसाध्यैर्मरुद्भिः
पादोपान्ते स्तुतोऽलं बलिहरिरभसाकर्षणाबद्धवेगः ।

यानवृन्दैः वितता व्याप्ता द्यौः आकाशं यैः तथाभूतानाम् आनन्देन सान्द्रः निविड़ः यः उद्यमः प्रयत्नः स बहुतामपि देववृन्दारकाणां सुरमुख्यानां वृन्दैः गणैः वन्दितुं नो विन्द्यते लभ्यते च इति शेषः रयातिशयेनाप्राप्तावसरत्वादिति भावः । यश्च पुलिनभुवि सैकतशालिन्यां मन्दाकिन्याम् अमन्दः द्रुतगामी मन्दराभे मन्दरपर्वतनिभे मन्दरे तदाख्यवृक्षे मृदुः तत्सौरभलोभादिति भावः अतएव अरं द्रुतगतिं दधदपि मन्दारैः मन्दारपुष्पैः मण्डितः अलङ्कृतः, स दिनकृतः सूर्य्यस्य स्यन्दनः वः युष्माकं मुदे आनन्दाय स्तात् भवतु ॥ ७० ॥

चक्रीति । प्रीतिप्रसन्नः आनन्दोत्फुल्ल इत्यर्थः चक्री विष्णुः जगताम् उपकृतये नित्यमुक्तस्य यस्य, चक्रस्य अरपङ्क्तिम् अन्तर्गतदण्डनिचयं हरिरपि इन्द्रोऽपि हरीन् अश्वान् धूर्जटिः हरः धुरि अग्रे शिरसीति यावत् स्थितानिति भावः ध्वजाग्रान्, नक्षत्रनाथः चन्द्रः अक्षं चक्रं, वरुणः अरुणं सारथिं, कुबेरः कूवरं युगन्धरं काष्ठमित्यर्थः, सुराणां सङ्घः समूहः रंहः रयं स्तौति प्रशंसति, सः अहिमरुचेः उष्णकिरणस्य स्यन्दनः रथः वः युष्मान् अन्वहं सततम् अवतात् रक्षतु ॥ ७१ ॥

नेत्रेति । नेत्रा नायकेन इनेन हि सूर्य्येणैव पक्षे नेत्रा रज्जु-

भ्राम्यन् व्योमाम्बुराशावशिशिरकिरणस्यन्दनः सन्ततं वो
दिश्याल्लक्ष्मीमतुल्यामतुलितमहिमेवापरो मन्दराद्रिः ॥७२॥

मण्डलवर्णनम्।

यज्ज्यायो बीजमह्नामपहृततिमिरं चक्षुषामञ्जनं यत्
यद्द्वारं मुक्तिभाजां यदखिलभुवनज्योतिषामेकमोकः।
यद् वृष्ट्यम्भोनिधानं धरणिरससुधापानपात्रं महद् यद्
दिश्यादीशस्य भासां सततमविकलं मण्डलं मङ्गलं वः ॥७३

भूतेन चक्रीनेन अहिराजेन वासुकिनेत्यर्थः मूले विहितः परिकरः समारम्भः समुद्योग इति यावत् पक्षे बन्धनं यस्य तथोक्तः सिद्ध-साध्यैः सिद्धैः साध्यैश्च देवयोनिभेदैः मरुद्भिर्देवैश्च पादोपान्ते चरणो-पान्ते चक्रोपान्ते इति यावत् चक्रस्यैव रथचरणत्वेनाभिहितत्वादिति भावः पक्षे मूलदेशे धृतम् अतिशयेन स्तुतः कृतस्तवः पक्षे गृहीतः, बलिभिर्बलवद्भिर्हरिभिर्वाजिभिः पक्षे बलिना बलवता हरिणा नारा-यणेन रभसेन यत् आकर्षणं तेन आबद्धः जनितः वेगो यस्य तथाभूतः व्योमाम्बुराशौ आकाशसमुद्रे भ्राम्यन् अतुलितमहिमा निरुपमप्रभावः अशिशिरकिरणस्य स्यन्दनः रथः अपरो द्वितीयो मन्दराद्रिरिव वः युष्माकं सन्ततम् अविरतम् अतुल्यां निरुपमां लक्ष्मीं श्रियं पक्षे कमलां दिश्यात् ददातु। उत्प्रेक्षालङ्कारः ॥ ७२ ॥

यदिति। यत् अह्नां दिवसानां ज्यायः श्रेष्ठं बीजं कारण-मित्यर्थः, यत् अपहृततिमिरं तमोहरम् अतएव चक्षुषाम् अञ्जनं दृष्टिदोषनाशकमौषधविशेषभूतं, यत् मुक्तिभाजां मुमुक्षूणां द्वारं, यत् अखिलभुवनानां यानि ज्योतींषि, तेषाम् एकम् अद्वितीयं मुख्यमित्यर्थः ओकः स्थानं निदानमित्यर्थः, यत् वृष्ट्यम्भसां वृष्टिजलानां निधानम् आश्रयः, अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा इति शास्त्रात्। यत् महत् धरण्याः रस एव

वेलाव‍र्द्धिष्णुसिन्धोः पय इव खमिवार्द्धोद्गतोग्रग्रहोडु
स्तोकोद्भिन्नस्वचिह्नप्रसवमिव मधोरास्यमस्यन्महांसि ।
प्रातः पूष्णोऽशुभानि प्रशमयतु शिरःशेखरीभूतमद्रेः
पौरस्त्यस्योद्गभस्ति स्तिमिततमतमःखण्डनं मण्डलं वः ॥७४॥
प्रत्युप्तस्तप्तहेमोज्ज्वलरुचिरचलः पद्मरागेण येन
ज्यायः किञ्जल्कपुञ्जं यदलिकुलसितिरम्बरेन्दीवरस्य ।
कालव्यालस्य चिह्नं महिततममहोमूर्ध्नि रत्नं महद् यत्
दीप्तांशोः प्रातरव्यात्तदविकलजगन्मण्डनं मङ्गलं वः ॥७५॥

सुधा अमृतं तस्य पानपात्रं, तत् सततम् अविकलम् एकरूपमित्यर्थः भासाम् ईशस्य भास्करस्य मण्डलं वः युष्माकं मङ्गलं दिश्यात् ददातु ॥ ७३ ॥

वेलेति । वेलासु वर्द्धिष्णोः हृद्धया उद्गतस्य सिन्धोः समुद्रस्य पय इव अर्द्धम् उद्गताः उग्राः ग्रहाः उडवः नक्षत्राणि च यत्र तादृशं खमिव आकाशमिव, स्तोकम् अल्पं यथा तथा उद्भिन्नः प्रकटितः स्वस्य चिह्नप्रसवः लक्षणोदयः यस्मिन् तादृशं मधोर्वसन्तस्य आस्यमिव मुखमिव महांसि मयूखान् अस्यत् क्षिपत् वर्षदित्यर्थः पौरस्त्यस्य अद्रेः पूर्वाचलस्य शिरसः शेखरीभूतं शिरोभूषणभूतम् उद्गताः गभस्तयः किरणाः यस्य तादृशं स्तिमिततमानाम् अतिनिश्चलानां गाढ़ानामित्यर्थः तमसां तिमिराणां खण्डनं नाशनं प्रातः पूष्णः सूर्य्यस्य मण्डलं वः युष्माकम् अशुभानि प्रशमयतु नाशयतु ॥ ७४ ॥

प्रत्युप्त इति । येन तप्तहेमभिः तप्तकाञ्चनैः उज्ज्वला रुचिर्यस्य तादृशः अचलः सुमेरुः पद्मानां रागेण विकासजनितसौहित्योदयेनेति यावत् प्रत्युप्तः रञ्जितः, यत् अलिकुलवत् भ्रमरपुञ्जवत् सितिः कालिमा यस्य तादृशस्य अम्बरेन्दीवरस्य आकाशरूपनीलोत्पलस्य ज्यायः श्रेष्ठं किञ्जल्कपुञ्जं केशरवृन्दं, यत् कालः व्यालः तस्य अहरेव

कस्त्राता तारकाणां पतति तनुरवश्यायविन्दुर्य्यथेन्दु-
र्निद्राणा दृक् स्मरारेरुषसि मुररिपोः कौस्तुभो नोद्गभस्तिः ।
वह्नेः सापह्नुतैव द्युतिरुदयगते यत्र तन्मण्डलं वो
मार्त्तण्डीयं पुनीयाद्दिवि भुवि च तमांसीव मुष्णन्महांसि ७६

यत्प्राच्यां प्राक् चकास्ति प्रभवति च यतः प्राच्यसावुज्जिहाना
दिग्धं मध्ये यदह्नो भवति ततरुचा येन चोत्पाद्यतेऽह्नः ।
यत् पर्य्यायेण लोकानवति च जगतां जीवितं यच्च तद्वो
विश्वानुग्राहि विश्वं सृजदपि च रवेर्म्मण्डलं मुक्तयेऽस्तु ॥७७॥

मूर्द्धा तस्मिन् सहिततमम् अतिपूजितम् अत्युत्कृष्टमिति यावत् महत् चिह्नं रत्नं रत्नभूतं तत् अविकलं सम्यक् जगतां मण्डनं भूषणं दीप्तांशोः सूर्य्यस्य मण्डलं वः युष्मान् प्रातः अव्यात् रक्षतु ॥ ७५ ॥

क इति । यत्र मण्डले उदयगते उदिते सति तारकाणां नक्षत्राणां त्राता रक्षकः कः ? न कोऽपीत्यर्थः । तनुः स्वल्पः क्षीणश्च अवश्यायविन्दुर्य्यथा शिशिरविन्दुरिव इन्दुः पतति अस्तं गच्छतीति भावः । उषसि प्रभाते स्मरारेर्हरस्य दृक् तृतीयलोचन-मित्यर्थः निद्राणा निष्प्रभेति भावः अग्निमयत्वात्तस्या इति भावः । मुररिपोः विष्णोः कौस्तुभः न उद्गता गभस्तयः किरणाः यस्य तथा-भूतः निष्प्रभ इति भावः, वह्नेः अग्नेः सा द्युतिः प्रभा अपह्नुतैव अपहृतैव, तत् मार्त्तण्डीयं सौरं दिवि भुवि च तमांसीव तिमिरा-णीव महांसि तेजांसि मुष्णत् अपहरत् मण्डलं वः युष्मान् पुनीयात् पवित्रीकरोतु ॥ ७६ ॥

यदिति । यत् प्राक् प्रथमं प्राच्यां पूर्व्वस्यां दिशि चकास्ति राजते, यतः यस्मात् उज्जिहाना उदयं लभमाना असौ प्राची दिक् प्रभवति च कार्य्यक्षमा भवति चेत्यर्थः । यत् अह्नो मध्ये मध्याह्ने इत्यर्थः दिग्धं दिप्ताङ्गम् अतितीक्ष्णमिति भावः भवति, दिनाह्ने

शुष्यन्त्यूढाम्बुधारा मकरवसतयो मारवीणां स्थलीनां
येनोत्तप्ताः स्फुटन्तस्तडिति तिलतुलां यान्त्यगेन्द्रा युगान्ते ।
तच्चण्डांशोरकाण्डत्रिभुवनदहनाशङ्कया धाम कृत्स्नं
संहृत्यालोकमात्रं प्रलघु विदधतः स्तान्मुदे मण्डलं वः ॥७८॥
उद्यद्द्यूद्यानवाप्यां बहुलतमतमःपङ्कपूरं विदार्य
प्रोज्झितं पत्रपार्श्वेष्वविमलमरुणच्छायया विस्फुरन्त्या ।
कल्याणानि क्रियाद्वःकमलमिव महन्मण्डलं चण्डभानोः
अन्वीतं तन्निहितोरसकृदलिकुलाकारिणा राहुणा यत् ॥७९॥

दिग्भर्तिप्रकाविव्यमरः । येन ततरुचा विस्तृतप्रमेण सता अहः दिनम् उत्पाद्यते जन्यते च, यत् पर्य्यायेण क्रमेण लोकान् जगन्ति अयति रक्षति च, यच्च जगतां जीवितं जीवनभूतं, तत् विश्वेषां अमताम् अनुग्राहि अनुग्रहपरं विश्वं जगत् सृजत् उत्पादयदपि च रवेः सूर्य्यस्य मण्डलं वः युष्माकं सम्पत्ये अस्तु ॥ ७७ ॥

शुष्यन्तीति । युगान्ते प्रलये येन उत्तप्ताः मकरवसतयः समुद्राः मारवीणां मरुमरुभिन्नीनां स्थलीनाम् ऊढानि गृहीतानि अम्बुकाराणि यैः तादृशाः सन्तः शुष्यन्ति शोषं गच्छन्ति तथा अगेन्द्राः पर्वतेन्द्राः स्फुटन्तः विदीर्य्यन्तः सन्तः तडिति झटिति तिलतुलां तिलसाम्यं यान्ति चूर्णीभवन्तीति यावत् अकाण्डे अनवसरे चण्डेत्यंशोः त्रिभुवनदहनात् वा आशङ्का भयं तया हेतुना कृत्स्नं समग्रं धाम संहृत्य सङ्कोच्य प्रलघु आलोकमात्रम् उद्द्योतमात्रं विदधतः चण्डांशोः सूर्य्यस्य तत् मण्डलं वः युष्माकं मुदे आनन्दाय स्तात् भवतु ॥ ७८ ॥

उद्यदिति । यत् द्यौरन्तरीक्षमेव उद्यानवापी उपवनसरः तस्यां बहुलतमम् अतिबहुलं यत् तमस्तिमिरमेव पङ्कः तस्य पूरं समूहं विदार्य्य भित्त्वा उद्यत् उदयं गच्छत् पत्रस्य रथस्य पार्श्वेषु चतुर्दिक्षु इति

चक्षुर्दैत्यद्विषो यत्र तु दहति पुरा पूरयत्येव कामं
नास्तं जुष्टं मरुद्भिर्यदिह नियमिनां यानपात्रं भवाब्धौ ।
यद्वीतभ्रान्ति शश्वद्भ्रमदपि जगतां भ्रान्तिमभ्रान्ति हन्ति
ब्रध्नस्याव्याद्विरुद्धक्रियमथच हिताधायि तन्मण्डलं वः ॥८०॥
सिद्धैः सिद्धान्तमिश्रं श्रितविधिविबुधैश्चारणैश्चाटुगर्भं
गीत्या गन्धर्वमुख्यैर्मुहुरहिपतिभिर्यातुधानैर्यताम्ना ।

पक्षे पत्राणां पलाशानां पार्श्वेषु विस्फुरन्त्या प्रसरन्त्या अरुण-च्छायया रक्तप्रभया प्रोद्भिन्नं समुज्ज्वलितम् अलिकुलाकारिणा भ्रमर-पुञ्जनिभेन राहुणा तद्ग्रहेतोः ग्रासजनितपरितोषार्थमिति भावः पक्षे मधुपानजनितपरितोषार्थम् असकृत् पुनः पुनः अन्वीतम् अन्विष्टम् अन्विष्टमित्यपि पाठः । अतएव कमलमिव पद्ममिव चण्ड-भानोः सूर्य्यस्य मण्डलं वः युष्माकं कल्याणानि मङ्गलानि क्रियात् करोतु ॥ ७९ ॥

चक्षुरिति । यत् दैत्यद्विषः शम्भोः चक्षुः नेत्रस्वरूपं न तु कामं कन्दर्पं मनोरथञ्च दहति भस्मीकरोति, पुरा प्रत्युत पूरयत्येव अभीष्टं सम्पादयतीत्यर्थः । यत् मरुद्भिः देवैः, मरुतौ पवनामरावित्यमरः । न अस्तं न त्यक्तम् अपि तु जुष्टं सेवितम्, इह भवाब्धौ संसारसागरे यानपात्रं तरणिभूतमित्यर्थः, यत् वीता विगता भ्रान्तिः भ्रमः मोह इति यावत् यस्य तादृशं ज्ञानस्वरूपमित्यर्थः शश्वत् सततं भ्रमदपि जगतां भ्रान्तिं मोहम् अज्ञानमित्यर्थः अभ्रान्ति अभ्रमं यथा तथा नाशयति, तत् विरुद्धक्रियं विपरीतव्यापारम् अथच हिताधायि हितसाधकं ब्रध्नस्य सूर्य्यस्य मण्डलं वः युष्मान् अव्यात् रक्षतु ॥८०॥

सिद्धैरिति । सिद्धैः देवयोनिभेदैः सिद्धपुरुषैर्नारदाद्यैर्वा सिद्धान्तः निगमः तन्मिश्रं तत्संवलितं, श्रिताः विधिविबुधाः ब्रह्मादेवाः यैः तथाभूतैः विधातृदेवानुगामिभिरिति यावत् यद्वा श्रितः अवलम्बितः

साध्यं साध्यैर्मुनीन्द्रैर्मुदिततममनो मोक्षिभिः पक्षपातात्
प्रातः प्रारभ्यमाणस्तुतिरवतु रविर्विश्ववन्द्योदयो वः ॥८१॥
भासामासन्नभावादधिकतरपटुत्वाच्चक्रवालस्य तापात्
छेदाद्विच्छिन्नगच्छत्तुरगखुरपुटन्यासनिःशङ्कटङ्कैः ।
निःसङ्गस्यन्दनाङ्गभ्रमणनिकषणस्यात्यातु वस्त्रिप्रकारं
तप्तांशुस्तत्परीक्षापर इव परितः पर्य्यटन् हाटकाद्रिम् ॥८२॥

विचित्रैर्दविधानम् यैः तथाभूतैः विबुधैः देवैः चारणैः कीर्त्तिसञ्चारकैः स्तुतिपरैर्देवयोनिविशेषैश्च चाटुगर्भं नानवद्यं गन्धर्वैस्तुम्बुरुः चित्ररथादिभिः मुहुः पुनः पुनः गीत्या सङ्कीर्तितेन सङ्कीर्तमित्यर्थः अहिपतिभिर्नागराजैः यातुधानैः राक्षसैः साध्यैः देवयोनिविशेषैः मुनीन्द्रैर्भृग्वादिभिः साध्यं इत्ताध्यं मुदिततमम् हृष्टतमं मनो येषां तादृशैः मोक्षिभिः मुमुक्षुभिः योगिभिरिति यावत् पक्षपातात् प्रणयात् सप्रणयमित्यर्थः यथा तथा प्रातः प्रारभ्यमाणा स्तुतिर्यस्य तथाभूतः यतात्मा संयतस्वरूपः विश्वेषां वन्द्यः उदयो यस्य तादृशः रविः वः युष्मान् अवतु रक्षतु । ८१ ॥

भासामिति । चक्रवालस्य मण्डलस्य चक्रवालन्तु मण्डलमित्यमरः । भासाम् आसन्नभावेन सान्निध्येन अधिकतरपटुत्वात् अधिकप्रदृष्टत्वादित्यर्थः तापात् विच्छिन्नम् अविरतं गच्छतां तुरगाणाम् अश्वानां खुरपुटानां न्यासा, निक्षेपा एव निःशङ्काः शङ्कारहिताः टङ्काः पाषाणभेदनानि अस्त्राणि तैः छेदात् खण्डनात् निःसङ्गं संस्पर्शरहितं यथा तथा वेगातिशयादिति भावः स्यन्दनाङ्गस्य रथाङ्गस्य चक्रस्येत्यर्थः भ्रमणमेव निकषणं घर्षणविशेषः तस्मात् हेतोः त्रिप्रकारं त्रिविधं यथा तथा तस्य हाटकाद्रेः परीक्षापर इव हाटकाद्रिं काञ्चनाद्रिं सुमेरुं परितः सर्वतः पर्य्यटन् परिभ्रमन् तप्तांशुः सूर्य्यः वः युष्मान् पातु रक्षतु । तापसहत्वं छेद्यत्वं निकषणीयत्वञ्च स्वर्णस्य त्रिविधा गुणा इति बोध्यम् ॥ ८२ ॥

नो शुष्कं नाकनद्या विकसितकनकाम्भोरुहभ्राजितन्तु
स्पृष्टा नैवोपभोग्या भवति भृशतरं नन्दनोद्यानलक्ष्मीः ।
नो शृङ्गाणि द्रुतानि द्रुतममरगिरेः कामधौतानि धौता-
नीद्धं धाम द्युमार्गे मृदयति दयया यत्र सोऽव्याद्दिनो वः ॥८३

ध्वान्तस्यैवान्तहेतुर्न भवति मलिनैकात्मनः पाप्मनोऽपि
प्राक्पादोपान्तभाजां जनयति न परम्पङ्कजानां प्रबोधम् ।
कर्त्ता निःश्रेयसानामपि न तु खलु यः केवलं वासराणां
सोऽव्यादेकोद्यमेच्छाविहितबहुहृद्विश्वकार्य्योऽर्य्यमा वः ॥८४

नो इति । यत्र यस्मिन् द्युमार्गे अन्तरीक्षमार्गे दयया लोकानु-ग्रहेण इद्धं दीप्तं धाम तेजः मृदयति मृदूकुर्वति सति नाकनद्या मन्दाकिन्या नो शुष्कं तु किन्तु विकसितं कनकाम्भोरुहं स्वर्णपद्मं यस्यां तथाभूतया भ्राजितं विराजितं, नन्दनोद्यानलक्ष्मीः नैव स्पृष्टा नैव दग्धा, किन्तु भृशतरम् अत्यर्थम् उपभोग्या भवति, अमरगिरेः सुमेरोः शृङ्गाणि द्रुतं झटिति नो द्रुतानि न गलितानि किन्तु कामं सम्यक् धौतानि मार्जितानि धौतानि उत्तेजितानि, स इनः सूर्य्यः वः युष्मान् अव्यात् रक्षतु ॥ ८३ ॥

ध्वान्तस्येति । यः ध्वान्तस्यैव केवलम् अन्धकारस्य न, मलिनः एकः केवलः आत्मा यस्य तादृशस्य पाप्मनोऽपि पापस्यापि अन्तहेतुः नाशकः । परं केवलं पङ्कजानां पद्मानां न, प्राक् पूर्वं पादोपान्तभाजां चरणाराधनपराणां किरणसान्निध्यवतां च प्रबोधं विकासं ज्ञानञ्च जनयति । केवलं वासराणां दिवसानां न तु, निःश्रेयसानां मङ्ग-लानामपि कर्त्ता । एकया उद्यमेच्छया उदयवासनया विहितं बहु हृद्वत् विश्वेषां जगतां कार्य्यं येन तथाभूतः सः अर्य्यमा सूर्य्यः वः युष्मान् अव्यात् रक्षतु ॥ ८४ ॥

लोठल्लोष्टाविचेष्टः श्रितशयनतलो निःसही भूतदेहः
सन्देही प्राणितव्ये सपदि दश दिशः प्रेक्षमाणोऽन्धकाराः ।
निःश्वासायासनिष्ठः परमपरवशो जायते जीवलोकः
शोकेनान्यत्र लोकाभ्युदयकृति गते यत्र सोऽर्कोऽवताद्वः ॥८५॥
क्रामल्लोलोऽपि लोकांस्तदुपकृतिकृतावास्थितः स्थैर्यकोटीं
नृणां दृष्टिं विजिह्मां विदधदपि करोत्यन्तरत्यन्तभद्राम् ।
यस्तापस्यापि हेतुर्भवति नियमिनामेकनिर्वाणदायी
भूयात्स प्रागवस्थाधिकतरपरिणामोदयोऽर्कः श्रिये वः ॥८६॥

लोठदिति । यत्र लोकानाम् अभ्युदयं करोतीति तथोक्ते अन्यत्र अन्यस्मिन् जगति अस्ताचले वा गते सति जीवलोकः लोठल्लोष्टवत् भूपतितलोष्ट इव अविचेष्टः निस्पन्दः श्रितशयनतलः शय्याशायी निःसहीभूतः अक्षमः देहो यस्य तादृशः सपदि सहसा दश दिशः अन्धकाराः सन्ति आसामिति अन्धकाराः अन्धकारवतीरित्यर्थः अर्श आदित्वादच्प्रत्ययः । प्रेक्षमाणः पश्यन् प्राणितव्ये पुनर्जीवने इति यावत् सन्देही संशयवान् निःश्वासायासे निःश्वासत्यागप्रयत्ने निष्ठः तत्परः अतएव शोकेन परमपरवशः अतिपराधीनः जायते, सः अर्कः वः युष्मान् अव्यात् रक्षतु ॥ ८५ ॥

क्रामन्निति । यः लोलः चञ्चलः सन् लोकान् जगन्ति क्रामन् लङ्घयन्नपि तेषां लोकानाम् उपकृतिरुपकारः तस्याः कृतौ साधने यत्ने वा स्थैर्यकोटिं सुस्थिरतां स्थितिमिति यावत् आस्थितः आश्रितः, नृणां मानवानां दृष्टिं चक्षुः ज्ञानञ्च विजिह्मां विवशां विहतां विदधदपि अन्तः मनसि अत्यन्तभद्राम् अत्युज्ज्वलामिति यावत् करोति, तापस्य हेतुरपि नियमिनां वेदविदाम् एकम् अद्वितीयं यत् निर्वाणं तापत्रयोन्मूलनरूपं तत् ददातीति तथाभूतः भवति, अतएव प्रागवस्थायाः पूर्वावस्थायाः लोकाक्रमणादिरूपायाः अधिक-

व्यापन्नर्त्तुर्न कालो व्यभिचरति फलं नौषधीर्वृष्टिरिष्टा
नेष्टैस्तुष्यन्ति देवा न हि वहति मरुन्निर्मलाभानि भानि।
आशाः शान्ता न भिन्दन्त्यवधिमुदधयो बिभ्रति क्ष्माभृतः क्ष्मां
यस्मिंस्त्रैलोक्यमेवं न चलति तपति स्तात् स सूर्य्यः श्रिये वः॥८७

कैलासे कृत्तिवासा विहरति विरहत्रासदेहोढकान्तः
श्रान्तः शेते महाहावब्धिजलधि विना छद्मना पद्मनाभः।
योगी योगैकतानो गमयति सकलं वासरं स्वं स्वयम्भू-
र्भूरित्रैलोक्यचिन्ताभृति भुवनविभौ यत्र भास्वान्स वोऽव्यात्॥८८

तरः दृश्यतरः परिणामश्च जगदुपकृत्यादेरिति भावः उदयः यस्मात्
तादृशः सः अर्कः वः युष्माकं श्रिये सम्पदे मङ्गलायेत्यर्थः भूयात्
अस्तु॥ ८६॥

व्यापन्नेति। यस्मिन् तपति सति कालः व्यापन्नाः विनष्टाः ऋतवः
वसन्तादयः यत्र तादृशः न भवतीति शेषः, इष्टा अभिमता यथा-
समयमिति भावः वृष्टिः ओषधीश्च न व्यभिचरति जनयतीत्य-
र्थः। देवाः इष्टैः यज्ञैः न तुष्यन्ति? अपि तु तुष्यन्त्येव, मरुत्
वायुः न हि वहति? अपि तु वहत्येवेत्यर्थः। भानि नक्षत्राणि निर्म-
लाभानि निर्मलप्रभाणि भवन्तीति शेषः आशाः दिशः शान्ताः प्रसन्नाः,
उदधयः समुद्राः अवधिं वेलां न भिन्दन्ति नातिक्रामन्ति, क्ष्माभृतः
कुलपर्वताः क्ष्मां पृथिवीं बिभ्रति धारयन्ति, किं बहुना एवम् इत्थं
त्रैलोक्यं त्रिभुवनं न चलति न अवसीदति सर्व एव स्वं स्वं व्यापारं
करोतीति भावः स सूर्य्यः वः युष्माकं श्रिये अभ्युदयाय स्तात्
भवतु॥ ८७॥

कैलासे इति। यत्र भुवनविभौ लोकवर्त्ती भूरि प्रभूतं यथा स्यात्त-
था त्रैलोक्यस्य त्रिभुवनस्य चिन्ताभृति कार्य्यनिर्वाहार्थं चिन्तयति
सतीत्यर्थः कृत्तिवासा हरः विरहत्रासेन विच्छेदाशङ्कया देहेन ऊढा

एतद्यन्मण्डलं खे तपति दिनकृतस्ता ऋचोऽर्चींषि यानि
द्योतन्ते तानि सामान्ययमपि पुरुषो मण्डलेऽणुर्यजूंषि ।
एवं यं वेद वेदत्रितयमयमयं वेदवेदी समग्रो
वर्गः स्वर्गापवर्गप्रकृतिरविकृतिः सोऽस्तु सूर्य्यः श्रिये वः ॥८९॥
नाकौकःप्रत्यनीकक्षतिपटुमहसां वासवाग्रेसराणां
सर्वेषां साधुपातां जगदिदमदितेरात्मजत्वे समेऽपि ।

कान्ता येन तथाभूतः हरगौरीरूपैकशरीर इति भावः कैलासे विहरति क्रीडति । पद्मनाभः नारायणः अधिजलधि समुद्रे विभक्त्यर्थे अव्ययीभावः । छद्मना छलेन विना निश्चिन्तभावेनेति भावः श्रान्तः सन् जगत्कार्य्यदर्शनादिति भावः महाहौ नागराजे अनन्ते शेते निद्राति । स्वयम्भूर्ब्रह्मा योगस्य समाधेः उद्योगे एकतानः एकाग्रः तत्पर इत्यर्थः सकलं स्वं निजं वासरं चतुर्युगसहस्ररूपमिति भावः, चतुर्युगसहस्रन्तु ब्रह्मणो दिवसो मुनेरिति पुराणम् । गमयति यापयति स भास्वान् सूर्य्यः वः युष्मान् अव्यात् रक्षतु ॥ ८८ ॥

एतदिति । खे आकाशे यदेतत् दिनकृतः सूर्य्यस्य मण्डलं तपति, ता ऋचः ऋग्वेदाः, यानि अर्चींषि मयूखाः द्योतन्ते राजन्ते, तानि सामानि सामवेदाः, अयमपि मण्डले यः अणुः सूक्ष्मः पुरुषः अस्तीति शेषः, एषः यजूंषि यजुर्वेदाः, एवम् इत्थं यं वेदत्रितयमयं त्रिवेद्यात्मकं समग्रः सकलः वेदवेदी वेदवित् वर्गः वेद जानाति, स्वर्गस्य अपवर्गस्य मुक्तेश्च प्रकृतिः मूलकारणं, प्रकृतिः पञ्चभूतेषु प्रधाने मूलकारणे इत्यमरः । अविकृतिः विकाररहितः एकरूप इत्यर्थः स सूर्य्यः वः युष्माकं श्रिये मङ्गलाय अस्तु भवतु ॥ ८९ ॥

नाकौक इति । नाकौकसां स्वर्गवासिनाम् प्रत्यनीकाः असुराः तेषां क्षतौ विनाशे पटु समर्थं महः तेजः येषां तेषां

येनादित्याभिधानं निरतिशयगुणे नात्मनि न्यस्तमस्तु
स्तुत्यः त्रैलोक्यवन्द्यैस्त्रिदशमुनिगणैः सोऽंशुमान् श्रेयसे वः ॥ ९० ॥

भूमिं धाम्नोऽभिवृष्ट्या जगति जलमयीं पावनीं संस्मृतावा
ग्नेयीं दाहशक्तौ मुहुरपि यजमानात्मिकां प्रार्थितानाम् ।
लीलामाकाश एवामृतकरघटितां ध्वान्तपक्षस्य पर्व-
ण्येवं सूर्योऽष्टभेदां भव इव भवतः पातु बिभ्रत् स्वमूर्त्तिम् ॥ ९१ ॥

वासवः इन्द्रः अपेश्वरः अपगतो येषां सर्वेषां इदं जगत् साधु सम्यक् पातां पालयतां देवानां मध्ये अदितेः कश्यपपत्न्याः आत्मजत्वे पुत्रत्वे समेऽपि अभिन्नेऽपि येन निरतिशयगुणेन आत्मनि आदित्याभिधानम् अदितेरपत्यं पुमान् आदित्य इत्यभिधानं न्यस्तम् अर्पितं स्फीतमिति यावत् । त्रैलोक्यानां वन्द्यैः त्रिदशमुनिगणैः देवर्षिभिः स्तुत्यः स्तवनीयः सः अंशुमान् सूर्य्यः वः युष्माकं श्रेयसे अस्तु भवतु ॥ ९० ॥

भूमिमिति । धाम्नां तेजसाम् अभिवृष्ट्या अभितोवर्षणेन भूमिं जगति भूमौ जलमयीं, संस्मृतौ सम्यक् स्मरणे पावनीं पवित्रकारिणीं स्मर्त्तृणामिति भावः पवनसम्बन्धिनीञ्च दाहशक्तौ दहनशक्तिविषये आग्नेयीं मुहुरपि पुनः पुनश्च प्रार्थितानाम् अभिलषितानां कामानामित्यर्थः सम्बन्धविवक्षया अधिकरणे षष्ठी । प्रार्थितेष्वित्यर्थः यजमानात्मिकां याज्ञिकस्वरूपां याज्ञिका इष्टेन कामं पूरयन्तीति भावः आकाश एव लीलां विलासरूपाम् आकाश एव सततसञ्चरणात् तन्मयीमिति भावः ध्वान्तपक्षस्य कृष्णपक्षस्य पर्वणि अमावास्यायामित्यर्थः अमृतकरघटितां चान्द्रीमिति यावत् अतएव अष्टभेदां स्वमूर्त्तिं बिभ्रत् भव इव हर इव सूर्य्यः भवतः युष्मान् पातु रक्षतु ॥ ९१ ॥

प्राक्कालोन्निद्रपद्माकरपरिमलनाविर्भवत्पादशोभो
भक्त्या व्यक्तोरुखेदोन्नति दिवि विनतासूनुना नीयमानः ।
सप्ताश्वाप्तापरान्तान्यधिकमधरयन् यो जगन्ति स्तुतोऽलं
देवैर्देवः स पायादपर इव मुरारातिरब्जां पतिर्वः ॥ ८२ ॥
यः स्रष्टापां पुरस्तादचलवरसदस्युन्नतेर्हेतुरेको
लोकानां यस्त्रयाणां स्थित उपरिपदे दुर्विलङ्घ्येन धाम्ना ।
सद्यः सिद्धौ प्रसन्नस्तुतिशुभचतुराशामुखः स्ताद्विभक्तो
वेधा वेधा इवाविष्कृतकमलरुचिः सोऽर्चिषामाकरो वः ॥८३

प्रागिति । प्राक्काले प्रातःकाले उन्निद्राणां विकसितानां पद्माकराणां पद्मसमूहानां तडागानां वा परिमलनेन स्पर्शजनितसौरभेण आविर्भवन्ती जायमाना पादानां मयूखानां शोभा यस्य तादृशः पद्मसौरभवन्मयूख इति यावत् पक्षे प्रातःकाले उन्निद्राया प्रबुद्धायाः पद्मायाः लक्ष्म्याः करेण हस्तेन यत् परिमलनं संवाहनं तेन आविर्भवन्ती पादयोः चरणयोः शोभा यस्य तादृशः । भक्त्या व्यक्ता उर्वी महती खेदस्य परिश्रमस्य उद्गमतिरुदयो यस्मिन् तत् यथा तथा दिवि आकाशे विनतासूनुना अरुणेन पक्षे गरुडेन नीयमानः वाह्यमानः । सप्तभिरश्वैः आप्तः प्राप्तः अपरान्तः पाश्चात्यदिगन्तः येषां तानि पक्षे सप्ताश्वेन सूर्येण आप्तः आक्रान्तः अपरान्तः पाश्चात्यभागोऽपि येषां तानि उदयाचलादारभ्य अस्ताचलपर्यन्तानीति भावः जगन्ति अधिकं सम्यक् अधरयन् परिभवन् अतएव देवैरलमतिशयेन स्तुतः अपरः मुरारातिरिव विष्णुरिव अब्जां पतिः दिवसेश्वरो देवः सः युष्मान् पायात् रक्षतु । उत्प्रेक्षालङ्कारः ॥ ८२ ॥

य इति । अपां जलानां स्रष्टा जनकः, आदित्याज्जायते वृष्टिरिति श्रुतेः, सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु बीजमवासृजदिति मानवाच्च । पुरस्तात्

साद्रिद्यूर्वीनदीका दिशति दश दिशो दर्शयन् प्राग् दृशो यः
सादृश्यं दृश्यते नो सदशशतदृशि त्रैदशे यस्य देशे ।
दीप्तांशुर्वः स दिश्यादशिवयुगदशा दर्शितद्वादशात्मा
संशास्त्यश्वांश्च यस्याशयविदतिशयं दन्दशूकाशनाद्यः ॥९४॥

पूर्ववर्त्ती यः अचलवरः स एव सद्मः सभा तस्मिन् स्थित इति शेषः उन्नतेः अभ्युदयस्य जगतामिति शेषः एकः मुख्यः हेतुः कारणम् । यः दुर्विलङ्घ्येन दुरतिक्रमेण धाम्ना तेजसा लोकेन च त्रयाणां लोकानाम् उपरिपदे स्थितः । सद्यः प्रसन्नया प्रीतिप्रदया द्युत्या प्रभया शुभानि सुप्रसन्नानि चतसृणाम् आशानां दिशां मुखानि यस्य तथोक्तः पक्षे प्रसन्ना द्युतिर्येषां तानि शुभानि सुन्दराणि चतुराशासु चतुर्दिक्षु मुखानि यस्य तथोक्तः चतुर्मुखत्वादिति भावः । आविष्कृता कमलेषु पद्मेषु रुचिरनुरागो येन तथोक्तः पक्षे आविष्कृता कमले विष्णोर्नाभिकमले इति भावः रुचिर्वासाभिलाषः येन तादृशः अतएव वेधा द्विप्रकारेण विभक्तः वेधा इव ब्रह्मेव सः अर्चिषां तेजसाम् आकरः सूर्य्यः वः युष्माकं सिद्धौ स्यात् भवतु सिद्धिदो भवत्वित्यर्थः । उत्प्रेक्षालङ्कारः ॥ ९३ ॥

साद्रीति । यः अद्रिभिः पर्वतैः दिवा आकाशेन उर्व्या पृथिव्या नदीभिश्च सह वर्त्तमानाः दश दिशः प्राक् प्रथमं दर्शयन् प्रकटयन् दृशः नयनानि दिशति स्वव्यापारक्षमाः करोतीत्यर्थः सदशशतदृशि सेन्द्रे त्रैदशे देशे सुरलोके इत्यर्थः यस्य सादृश्यं साम्यं नो दृश्यते समो नास्तीति भावः । यस्य आशयवित् अभिप्रायज्ञः दन्दशूकाशनस्य गरुडस्य आद्यः अग्रजः अरुणः अतिशयम् अत्यर्थं दृढप्रयत्नं यथा तथा अश्वान् संशास्ति सम्यक् चालयति, स दर्शिता द्वादश आत्मानः येन तथाभूतः दीप्तांशुः सूर्य्यः वः युष्माकम् अशिवस्य अमङ्गलस्य युगदशा द्वितीयदशा सङ्कटदशा इति यावत् दिश्यात् विदध्यात् ॥ ९४ ॥

तीर्थानि व्यर्थकानि ह्रदनदसरसीनिर्झराम्भोजिनीनां
नोद्यन्तो नुदन्ति प्रतिदिनमशुभं श्वभ्रपातानुबन्धि।
आपो नाकापगाया अपि कलुषमुषो मज्जतां नैव यत्र
त्रातुं यातेऽन्यलोकान् स दिशतु दिवसस्यैकहेतुर्हितं वः॥८५॥
एतत् पातालपङ्कप्लुतमिव तमसा साकमुद्गाढमासी-
दप्रज्ञाताप्रतर्क्यं निरवगति तथालक्षणं सुप्तमन्तः।
यादृक सृष्टेः पुरस्तान्निशि निशि निखिलं जायते तादृगेव
त्रैलोक्यं यद्वियोगादवतु रविरसौ सर्गतुल्योदयो वः॥८६॥

तीर्थानीति। यत्र अन्यलोकान् अपराणि जगन्ति त्रातुं पालयितुं याते गते सति ह्रदनदसरसीनिर्झराम्भोजिनीनां ह्रदानाम् अकृत्रिमपयसा वेष्टितजलाशयानां नदानां सरसीनां सरोवराणां निर्झराणां पद्मिनीनाञ्च तीर्थानि स्थानानि व्यर्थकानि विफलानि भवन्तीति शेषः कार्य्याभावादिति भावः। उद्यन्तः समुद्गताः प्रतिदिनं श्वभ्रपातानुबन्धि श्वभ्रे गह्वरे पातः पतनम् अनुबध्नाति जनयतीति तथोक्तम् अशुभम् अमङ्गलं न नुदन्ति न अपनयन्ति लोका अन्धकारे इमाः समुद्ररूपे गह्वरे पतन्तीति भावः। नाकापगायाः मन्दाकिन्याः आपोऽपि जलान्यपि मज्जताम् अवगाहमानानां नैव कलुषमुषः पापहारिण्यः भवन्तीति शेषः स दिवसस्य एकहेतुः अद्वितीयकारणं सूर्य्यः वः युष्माकं हितं दिशतु करोतु॥८५॥

एतदिति। यस्य वियोगात् अभावात् अनुदयादिति यावत् निशि निशि प्रतिरात्रम् एतत् निखिलं त्रैलोक्यं सृष्टेः पुरस्तात् प्राक् यादृक् तमसा तिमिरेण साकं सह उद्गाढम् आवृतं सत् पातालपङ्कैः प्लुतमिव व्याप्तमिव अप्रज्ञातम् अप्रतर्क्यं निरवगति दुर्बोधञ्च आसीत् तथालक्षणं तादृक्लक्षणयुतम् अन्तःसुप्तं निद्रितम् अतएव

द्वीपे योऽस्ताचलोऽस्मिन् भवति खलु स एवापरत्रोदयाद्रिः
या यामिन्युज्ज्वलेन्दुद्युतिरिह दिवसोऽन्यत्र दीप्तातपः सः ।
यद्वश्यौ देशकालाविति हि नियमतो नोभयं देशकाला-
वव्यात् स्वप्रभुत्वाहितभुवनहितो हेतुरह्नामिनो वः ॥ ८७ ॥

व्यग्रैरुग्रग्रहोडुग्रसनगुरुतरैर्नोसमग्रैरुदग्रैः
प्रत्यग्रैरीषदुग्रैरुदयगिरिगतो गोगणैर्गौरयन् गाम् ।
उद्गूमार्चिर्विलीनामरनगर नगग्रामगर्भामिवाह्नां
अग्रे श्रेयो विधत्ते ग्लपयतु गहनं स ग्रहग्रामणीर्वः ॥ ८८ ॥

तादृगेव जायते, असौ सर्गतुल्यः स्पृहणीयः उदयो यस्य तथाभूतः रविः वः युष्मान् अवतु रक्षतु ॥ ८६ ॥

द्वीपे इति । अस्मिन् द्वीपे जम्बूद्वीपे यः अस्ताचलः अस्तपर्वतः भवति, अपरस्य द्वीपे स एव अस्ताचल एव उदयाद्रिः उदयाचलः । इह द्वीपे उज्ज्वला इन्दोश्चन्द्रस्य द्युतिर्यस्यां तादृशी या यामिनी रजनी, अन्यत्र द्वीपे दीप्तः आतपः सौरालोकः यत्र तादृशः दिवसः । देशकालौ स्थानसमयौ यस्य वश्यौ वशंवदौ इति हि इत्य-स्मादेव कारणात् देशकालौ नियमतः सिद्धान्ततः उभयं न स्त इति शेषः अयमेव पूर्वाचलः नास्ताचलः अयमेव दिवसः, न रजनी इत्येवं देशकालयोर्निश्चयो नास्ति, सूर्य्यस्य उदयेन अस्तगमनेन च देशकाल-व्यवस्थेति भावः । स्वस्य आत्मनः प्रभुत्वेन सामर्थ्येन आहितं जनितं भुवनानां हितं येन तथाभूतः सः अह्नां हेतुः दिवसकरः इनः सूर्य्यः वः युष्मान् अव्यात् रक्षतु ॥ ८७ ॥

व्यग्रैरिति । यः उदयगिरिगतः उदयाचलस्थः सन् व्यग्रैः विसृमरैः उग्राणाम् उज्ज्वलानां राज्ञामिति भावः ग्रहाणाम् उडूनां नक्षत्राणाञ्च ग्रसने तिरोधाने गुरुतरैः महत्तरैः सामर्थ्यवद्भिरिति यावत् नो समग्रैः असम्पूर्णैरित्यर्थः प्राथमिकत्वादिति भावः उदग्रैः

योनिः साम्नां विधाता मधुरिपुरजितो धूर्जटिः शङ्करोऽसौ
मृत्युः कालोऽलकायाः पतिरपि धनदः पावको जातवेदाः
इत्थं संज्ञा डवित्थादिवदमृतभुजां या यदृच्छाप्रवृत्ता-
स्तासामेकोऽभिधेयस्तदनुगुणगणो यः स सूर्योऽवताद्वः ।९९

उद्गतार्यैः ईषत् अल्पं उष्णैः तीक्ष्णैः नातितीक्ष्णैरिति यावत् गोमयैः मयूखनिचयैः उद्गतानां धूमानाम् अर्चिर्भिरिव शिखाभि-रिव तिमिरैरिति भावः विलीनाः विलयं गताः तिरोहिता इति यावत् अमरनगराणि सुरपुराणि नगाः पर्वताः ग्रामाः जनप-दाश्च गर्भे अभ्यन्तरे यस्याः तथोक्तां गां पृथिवीं, स्वर्गेषुपशुवाग्वज्र-दिङ्नेत्रघृणिभूजले । लक्ष्यदृष्ट्या स्त्रियां पुंसि गौरित्युभयत्राप्यमरः । गौरयन् धवलयन् उज्ज्वलयन्नित्यर्थः अग्रे प्रथमम् उदयमात्रमेवेत्यर्थः श्रेयः मङ्गलं नमतामिति शेषः विधत्ते करोति, स द्युग्रामणीः ग्रहाग्रेसरः सूर्यः वः युष्माकं गच्छनं विपदं ग्लपयतु शमयतु ॥९८॥

योनिरिति । विधाता ब्रह्मा साम्नां वेदानां योनिः उत्पत्तिक्षेत्रं, मधुरिपुः नारायणः अजितः अपराजितः कैरपि जेतुं न शक्य इति यावत् असौ धूर्जटिः हरः शङ्करः मङ्गलकरः, कालः मृत्युः अन्तक इति यावत्, अलकायाः पतिरपि कुवेरोऽपि धनदः, जातवेदाः अग्निः पावकः शुद्धिजनकः इत्थम् अमृतभुजां देवानां डवि-त्थादिवत् यदृच्छाप्रवृत्ताः स्वेच्छयोच्चरिताः याः संज्ञाः आख्याः, तासां संज्ञानां एकः अद्वितीयः अभिधेयः वाच्यः तदनुगुणः तत्तत्संज्ञानां अनुगुणः अनुकूलः अन्वर्थ इति यावत् गुणो यस्य तादृशः यः, सः सूर्यः वः युष्मान् अवतात् रक्षतु । यथा डवित्थडित्थादिसंज्ञाशब्दा वक्तुरिच्छामात्रेण प्रयुक्ता नान्वर्थताम् आपद्यन्ते तथा ब्रह्मादिदेवानां तत्तदाख्या लोकानां स्वेच्छया प्रयुक्ताः न तु अन्वर्थाः, सूर्यस्तु तत्तद्-गुणयोगात् तत्तदाख्यामर्हतीति स एव देवेषु श्रेयानिति भावः ॥९९॥

देवः किं बान्धवः स्यात्प्रियसुहृदथवाचार्य्य आहोस्विदार्य्यो
रक्षा चक्षुर्नु दीपो गुरुरुत जनको जीवितं बीजमोकः ।
एवं निर्णीयते यः क इव न जगतां सर्वदा सर्वदोऽसौ
सर्वाकारोपकारी दिशतु दशशताभीषुरभ्यर्थितं वः ॥१००॥
श्लोका लोकस्य भूत्यै शतमिति रचिताः श्रीमयूरेण भक्त्या
युक्तश्चैतान् पठेद्यः सकृदपि पुरुषः सर्वपापैर्विमुक्तः ।
आरोग्यं सत्कवित्वं मतिमतुलबलं कीर्त्तिमायुःप्रकर्षं
विद्यामैश्वर्य्यमर्थं सुखमपि लभते सोऽत्र सूर्य्यप्रसादात् ॥१०१॥

इति महाकविश्रीमयूरभट्टकृतं सूर्य्यशतकं समाप्तम् ।

---

देव इति । यः देवः बान्धवः किम्, अथवा प्रियसुहृत्, वा आचार्य्यः, आहोस्वित् अथवा आर्य्यः साधुः, रक्षा परित्राणं, चक्षुः, दीपः नु, उत अथवा गुरुः, जनकः पिता, जीवितं जीवनं, बीजं मूलकारणं, ओकः स्थानम् आश्रय इति यावत् स्यात् किम्? एवम् इत्थं क इव न निर्णीयते न निश्चीयते न आख्यायते इति यावत् जनैरिति शेषः सर्व एव निर्णीते इत्यर्थः । सर्वदा जगतां सर्वदः सर्वमनोरथदायी सर्वाकारेण सर्वप्रकारेण उपकरोतीति तथाभूतः असौ दशशताभीषुः सहस्रकिरणः वः युष्माकम् अभ्यर्थितं वाञ्छितं दिशतु ददातु ॥ १०० ॥

श्लोका इति । श्रीमयूरेण कविनेति शेषः लोकस्य जगतः भूत्यै मङ्गलाय इति उक्तरूपाः शतं श्लोकाः पद्यानि रचिताः यः पुरुषः भक्त्या, युक्तः भक्तिमान् सन् सकृदपि एकवारमपि किं पुनर्बहुवारमित्यपिशब्दार्थः । एतान् श्लोकान् पठेत्, स सर्व-

# शान्तिशतकम्।

---

नमस्यामो देवान् ननु हतविधेस्तेऽपि वशगा
विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः।
फलं कर्मायत्तं किममरगणैः किञ्च विधिना
नमस्तत् कर्मभ्यो विधिरपि न येभ्यः प्रभवति॥ १॥

पापैः विमुक्तः सन् सूर्य्यस्य प्रसादात् अत्र संसारे आरोग्यं नतकवित्वं मतिं प्रज्ञाम् अतुलं बलं कीर्त्तिम् आयुःप्रकर्षं दीर्घमायुरित्यर्थः विद्याम् ऐश्वर्य्यम् अर्थम् धनं सुखमपि सुतञ्च लभते प्राप्नोति॥ १०१॥

इति वि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता सूर्य्यशतकव्याख्या समाप्ता।

---

नमस्याम इति। देवान् सुरान् नमस्यामः वन्दामहे। ननु तेषां नमने न फलमित्याह नन्विति, ननु भोः तेऽपि देवाः हतविधेर्दुर्दैवस्य वशगाः वशवर्त्तिनः अतस्ते न किमपि कर्त्तुं प्रभवन्तीति भावः। तर्हि विधिः दैवं वन्द्यः नमस्यः, तदपि नेत्याह स इति, सोऽपि विधिरपि प्रतिनियतं सुनिश्चितं यत् कर्म सुकृतं दुष्कृतं वा तन्मात्रस्यैव फलदः न तु ततो न्यूनाधिकं कर्त्तुं प्रभवतीति भावः। फलं वन्द्यमिति चेत् तदपि नेत्याह फलमिति, फलं कर्मायत्तं सुकृतदुष्कृतकर्माधीनमित्यर्थः। अतस्तस्यापि न प्रभुत्वमिति भावः, अतः अमरगणैः देवगणैः नमस्कृतैरिति शेषः किम्? न किमपि प्रयोजनं विधिना च वन्दितेन किम्? न किमपि प्रयोजनमित्यर्थः। तत् तस्मात् कर्मभ्यः सुकृतदुष्कृतरूपेभ्यः नमः, विधिरपि दैवमपि येभ्यः कर्मभ्यः न प्रभवति दैवमपि कर्मा-

यदि शान्तौ मनो देयं यदि मुक्तिपदे रतिः ।
तदा शिह्लनमिश्रस्य पद्यमाराध्यतां धिया ॥ २ ॥

सन्तोषसन्ततिकरं विदुषां कवीनां
सांसारिकाप्रतिमदुःखविनाशवीजम् ।
यत्नेन शान्तिशतकं विदधे विवेकी
श्रीशिह्लनः प्रकृतिसुन्दरशुद्धबुद्धिः ॥ ३ ॥

धीर्नमिति भावः । शिखरिणीवृत्तं, रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणीति तल्लक्षणात् ॥ १ ॥

यदीति । यदि शान्तौ शान्तिमार्गे मनः देयं, यदि मुक्तिपदे रतिरभिलाषः अस्तीति शेषः, तदा धिया बुद्ध्या शिह्लनमिश्रस्य पद्यम आराध्यताम् । अनुष्टुब्वृत्तम् ॥ २ ॥

सन्तोषेति । प्रकृत्या स्वभावेन कयाचित् नार्य्या वा सुन्दरी शुद्धा निर्मला बुद्धिर्यस्य तथाभूतः अतएव विवेकी वैराग्यवान् श्रीशिह्लनः कविरिति शेषः यत्नेन विदुषां कवीनां सन्तोषसन्ततिकरं सातिशयप्रीतिदं सांसारिकं संसारभवम् अप्रतिमं असमं यत् दुःखं तस्य विनाशवीजं क्षयकारणं शान्तिशतकं नाम सन्दर्भं विदधे रचितवान् । प्रसिद्धिरियं शिह्लननामा कविः कस्याञ्चिद् वेश्यायामासक्त आसीत् । एकदा पितृश्राद्धं मे श्वो भावीति तद्दिने तव सकाशं नागमिष्यामीति तामुक्त्वा गृहं गतः यथाविधि श्राद्धं समाप्य सायं यथापूर्वं कामाविष्टचेताः तामेव वेश्यां प्रति समुत्सुकमनाः श्राद्धीयद्रव्यावशिष्टं किञ्चिदुपादेयं द्रव्यं गृहीत्वा नदीपारस्थितं वेश्यालयं प्रति गच्छन् कमपि पारगमनोपायमदृष्ट्वा तमपि एकं शवं जलोपरि भासमानं काष्ठमिति मत्वा तदुपरि आरुह्य नदीमुत्ततार । उत्तीर्य्य च परिचितं वेश्यालयं तस्या-गमनाभावनिश्चयात् आहृतद्वारं दृष्ट्वा प्राचीरसं[illegible] प्रविविक्षुः प्राचीरगतं कञ्चनापि गर्त्ते प्रविशतः कस्यचित् सर्पस्य पुच्छमवलोक्य

आत्मज्ञानविवेकनिर्मलधियः कुर्वन्त्यहो दुष्करं
यन्मुञ्चन्त्युपभोगभाञ्ज्यपि धनान्येकान्ततो निःस्पृहाः ।
न प्राप्तानि पुरा न सम्प्रति न च प्राप्तौ दृढप्रत्यया
वाञ्छामात्रपरिग्रहाण्यपि वयं त्यक्तुं न तानि क्षमाः ॥ ४ ॥
धन्यानां गिरिकन्दरोदरभुवि ज्योतिः परं ध्यायतां
आनन्दाश्रुजलं पिबन्ति शकुना निःशङ्कमङ्के स्थिताः ।

तदेवावलम्ब्य वाटीमध्यं प्राविशत् । प्रविष्टन्तु तं तादृशे समये दृष्ट्वा सा वाराङ्गना तं कथं त्वया रुद्धद्वारे गृहे प्रविष्टः कथं वा घोरां रजन्यां नदीमुत्तीर्णम् इति पृष्टा तदुक्तं सर्वं वृत्तान्तं श्रुत्वा बहिरागत्य प्राचीरस्थितगर्तमध्यात् लम्बमानं मृतं सर्पं नदीतीरे च स्थितं शवं दृष्ट्वा ईदृशं साहसं त्वया मत्कृते कृतं यदि परमार्थचिन्तायामीदृशोऽध्यवसायः क्रियते तदा परमा गतिर्लभ्यत इति नितरां तिरश्चकार । ततश्च तस्य तादृशो विवेको जातः यथा तां परित्यज्य शान्तिमार्गे समुत्सुकोऽभवदिति । वसन्ततिलकं वृत्तं, उक्तं वसन्ततिलकं तभजा जगौ ग इति तल्लक्षणात् ॥ २ ॥

आत्मज्ञानेति । आत्मज्ञानेन कोऽयमात्मेति ज्ञानेन यो विवेकः तेन निर्मला विशुद्धा धीर्बुद्धिर्येषां तादृशाः जनाः एकान्ततः अतिशयेन निःस्पृहाः वीतरागाः सन्तः उपभोगभाञ्जि उपभोगक्षमाणि अनायासलभ्यानि भोग्यानि धनान्यपीत्यर्थः यत् मुञ्चन्ति त्यजन्ति तत् दुष्करम् अन्यैः कर्त्तुमशक्यं कुर्वन्ति, अहो आश्चर्यं वयं पुरा पूर्वं न प्राप्तानि नोपार्जितानि, सम्प्रति च प्राप्तौ येषामिति शेषः न दृढप्रत्ययाः न दृढनिश्चयाः सन्तीति शेषः तानि वाञ्छामात्रेण मनोरथमात्रेण परिग्रहो येषां तथोक्तानि धनान्यपि त्यक्तुं न क्षमाः न शक्ताः । शार्दूलविक्रीडितम् । सूर्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितमिति तल्लक्षणात् ॥ ४ ॥

धन्यानामिति । गिरिकन्दरोदरभुवि पर्वतगुहाभ्यन्तरे परं ज्योतिः

अस्माकन्तु मनोरथोपरचितप्रासादवापीतट-
क्रीड़ाकाननकेलिमण्डपजुषामायुः परं क्षीयते ॥ ५ ॥
विशीर्णः प्रारम्भो वपुरपि जराव्याधिविधुरं
गतं दूरे विप्रस्वजनभरणं वाञ्छितमपि ।
इदानीं व्यामोहादहह ! विपरीते हतविधौ
विधेयं यत्तत्त्वं स्फुरति मम नाद्यापि हृदये ॥ ६ ॥
बीभत्साः प्रतिभान्ति किन्न विषयाः किन्तु स्पृहायुष्मती
देहस्यापचयो मतौ निविशते गाढ़ो गृहेषु ग्रहः ।

पश्यतां साक्षात् कुर्वतां धन्यानां पुण्यवताम् अङ्के क्रोड़े निःशङ्कं निर्भयं स्थिताः शकुनाः पक्षिणः आनन्दाम्बुजलं पिबन्ति, तु किन्तु अस्माकं मनोरथेन उपरचितानि कल्पितानि प्रासादवापीतटक्रीड़ाकाननेषु हर्म्यसरोवरतटोद्यानेषु यानि केलिमण्डपानि क्रीड़ागृहाणि तानि जुषन्ति सेवन्ते इति तथोक्तानां सतां परं केवलम् आयुः जीवनकालः क्षीयते क्षयं गच्छति। शार्दूलविक्रीड़ितं वृत्तम् ॥ ५ ॥

विशीर्ण इति। हतविधौ हतदैवे विपरीते प्रतिकूले सति प्रारम्भः कार्य्येषु समुद्योगः विशीर्णः निष्फलतां गत इति यावत्. वपुः शरीरमपि जरया वार्द्धकेन व्याधिना च विधुरं व्याकुलं, सुतरां वाञ्छितमपि विप्राणां ब्राह्मणानां स्वजनानाञ्च भरणं दूरे गतम् असामर्थ्यादिति भावः अहह खेदे इदानीं व्यामोहात् विशेषेण जातात् मोहात् ज्ञानवैकल्यादिति भावः यत् तत्त्वं विधेयम् अन्वेषणीयं तत् अद्यापि मम हृदये न स्फुरति न प्रकाशते किमद्य कर्त्तव्यं तदहं नावधारयितुं शक्नोमीति निष्कर्षः। शिखरिणीवृत्तम् ॥ ६ ॥

बीभत्सा इति। विषयाः भोग्यवस्तू[illegible] [illegible]: कुत्सिताः किं न प्रतिभान्ति न स्फुरन्ति ? [illegible] अपि तु प्रतिभान्त्ये-वेत्यर्थः किन्तु आयुष्मती अतिदीर्घा [illegible] स्पृहा आमनाथ

ब्रह्मोपास्यमिति स्फुरत्यपि हृदि व्यावर्त्तिका वासना
का नामेयमतर्क्यहेतुगहना दैवी सतां यातना॥ ७॥
अजानन् दाहार्त्तिं विशति शलभो दीपदहनं
न मीनोऽपि ज्ञात्वा वृतवडिशमश्नाति पिशितम्।
विजानन्तोऽप्येतान् वयमिह विपज्जालजटिलान्
न मुञ्चामः कामानहह! गहनो मोहमहिमा॥ ८॥

तेष्विति शेषः। मतौ बुद्धौ देहस्य अपायः अन्तः क्षय इति यावत् निश्चीयते देहोऽयं नश्वर इति मतावाविर्भवतीत्यर्थः किन्तु गृहेषु पक्षः आसक्तिः गाढः अतिप्रबलः। गृहासक्तिर्न निवारयितुं शक्यते इति भावः। ब्रह्म उपास्यम् इति बुद्धिरपि यद्यपि हृदि स्फुरति विकाशते किन्तु वासना विषयलालसा व्यावर्त्तिका बुद्धेः तत आकर्षिणीत्यर्थः। अतः अतर्क्यः तर्कयितुमशक्यो हेतुर्यस्याः अतएव गहना निविड़ा दुर्बोधेत्यर्थः इयं सतां साधूनां यातना दुर्विपाको नाम सम्भावनायां दैवदुर्विपाकोऽयमिति सम्भाव्यते इति निष्कर्षः। स्पृहायाः गृहेषु पक्षस्य च हेतुं विनापि प्रवृत्तेः विभावना, स्पृहाया अभावहेतौ सत्यपि गृहेषु पक्षाभावहेतौ सत्यपि तत्तत्फलादर्शनात् विशेषोक्तिस्तेनानयोः सन्देहसङ्करः। उक्तञ्च दर्पणे। विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते इति, सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधेति च। अङ्गाङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थितौ सन्दिग्धत्वे च भवति सङ्करस्त्रिविधो मत इति च। शार्दूलविक्रीडितं वृत्तम्॥ ७॥

अजानन्निति। शलभः पतङ्गविशेषः दाहार्त्तिं दाहजनितां पीड़ाम् अजानन् दीपदहनं दीपाग्निं विशति, मीनोऽपि विधितं मांसं वृतवडिशम् अकण्टकमिति यावत् न ज्ञात्वा अश्नाति भक्षति, वयम् इह संसारे एतान् कामानिति शेषः विपज्जालेन जटिलान् व्याप्तानिति यावत् विजानन्तः विशेषेण विदन्तोऽपि न त्यजन्त इति

क्षान्तं न क्षमया गृहोचितसुखं त्यक्तं न सन्तोषतः
सोढ़ा दुःसहशीतवाततपनक्लेशा न तप्तं तपः।
ध्यातं वित्तमहर्निशं न च पुनर्विष्णोः पदं शाश्वतं
तत् तत् कर्म्म कृतं यदेव मुनिभि स्तैः फलैर्वञ्चितम् ॥९॥
कृत्वा शस्त्रविभीषिकां कतिपयग्रामेषु दीनाः प्रजा
मथ्नन्तो विटजल्पितैरुपहता क्षोणीभुजस्ते किल।

कामाः भोगाः तान् न मुञ्चामः न त्यजामः अहह आश्चर्य्यं मोहस्य अज्ञानस्य महिमा माहात्म्यं गहनः दुर्बोधः। अत्र मोहमाहात्म्यरूपकारणेन कामत्यागाभावरूपकार्य्यस्य समर्थनात् कारणेन कार्य्यसमर्थनरूपोऽर्थान्तरन्यासः। तदुक्तं दर्पणे। सामान्यं वा विशेषेण विशेषस्तेन वा पुनः। कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते। साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः इति। शिखरिणीवृत्तम् ॥८॥

क्षान्तमिति। क्षमया क्षमागुणेन न क्षान्तं न सोढम् अस्माभिरिति शेषः वयं क्षमाशीला इति लोकानाम् अत्याचारान् सोढवन्त इति न, असामर्थ्येनैव क्षान्तमिति भावः। गृहोचितं सुखं विविधभोग्यवस्तुभोगजनितमिति भावः त्यक्तं दुर्लभत्वादिति भावः, सन्तोषतः वीतरागत्वजनितपरितोषेण न त्यक्तमिति शेषः, दुःसहाः सोढुमशक्या ये शीतवाततपनानां क्लेशाः सोढाः भोगार्थितयेति भावः तपः चान्द्रायणादिकं न तप्तं नानुष्ठितम् एतादृक्क्लेशेन तपश्चरणमुचितं किन्तु क्लेश एव कृतः न तप इति भावः। अहर्निशं दिवारात्रं वित्तं धनं ध्यातं चिन्तितं, शाश्वतं सनातनं विष्णोः पदं न च ध्यातमिति शेषः मुनिभिः यदेव क्षमादिकं कृतम् अस्माभिरपि तत्तत् कर्म कृतं किन्तु तैस्तैः फलैः तत्तत्क्षमादिगुणजनितैरिति भावः वञ्चितं विप्रलब्धं तत्तत् फलं न प्राप्तमस्माभिरिति भावः। अत्रापि विभावनाविशेषोक्त्योः सन्देहसङ्करः। शार्दूलविक्रीडितं वृत्तम् ॥९॥

कृत्वेति। शस्त्रैः विभीषिकां भयप्रदर्शनं कृत्वा यदि मां न

विद्वांसोऽपि वयं किल त्रिजगतीसर्गस्थितिव्यापदां
ईशस्तत्परिचर्य्यया न गणितो येरेष नारायणः ॥ १० ॥

नाथे श्रीपुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा
सेव्ये स्वस्य पदस्य दा[illegible]रि सुरे नारायणे तिष्ठति ।
यं कञ्चित् पुरुषा[illegible]मं कतिपयग्रामेशमल्पार्थदं
सेवायै मृगयामहे नरमहो मूढ़ा वराका वयम् ॥ ११ ॥

भजन्ति तदा त्वाम् अनेन प्रस्तेण निर्ङ्गनिष्ठ[illegible] ेत्येवं भीतिं दर्शयित्वेत्यर्थः कतिपयग्रामेषु दीनाः दुर्बलाः प्रजाः जनान् मग्नाः पीड़यन्तः विटानां धूर्तानां जल्पितैः चाटुवचनैः उपकृताः गर्वं प्रापिता इति भावः ये कोर्चिदिति शेषः ते किल क्षौणीभुजः भूपालाः कथ्यन्ते इति शेषः, भूभ[illegible] इति वक्तव्ये इति किलशब्देनद्योत्यते । वयमपि विद्वांसः किलेल्लोके वृथाविद्याभिमानिन इति भावः यैः अस्माभिः तेषां परिचर्य्यया सेवया त्रिजगत्याः सर्गस्थितिव्यापदां सृष्टिस्थितिसंहाराणाम् ईशः कर्त्ता एषः नारायणः न गणितः न लक्षितः न मत इति यावत् । शार्दूलविक्रीड़ितं वृत्तम् ॥ १० ॥

नाथे इति । नाथे स्वामिनि श्रीपुरुषोत्तमे श्रीमतां पुरुषाणां प्रवरे त्रिजगताम् एकाधिपे एकेश्वरे चेतसा मनसा न तु कायिकप्रयत्नेनेति भावः सेव्ये आराध्ये स्वस्य पदस्य निर्वाणस्येत्यर्थः दातरि सुरे देवे नारायणे तिष्ठति सति यं कञ्चित् पुरुषाधमम् अतिक्षुद्रं पुरुषं कतिपयग्रामेशं कतिपयग्रामाधिपतिम् अल्पार्थदं यत्किञ्चनदातारं नरं मानवं सेवायै परिचर्य्यार्थं मृगयामहे अन्विच्छामः, अहो आश्चर्यं वयं मूढ़ाः मूर्खाः वराकाः कृपणाः यत्किञ्चिद्धनार्थिन इति यावत् । अत्र मूढ़ा वराका वयमित्यस्य तादृशनरोपासनकार्य्यस्य हेतुत्वेन कीर्त्तनात् । काव्यलिङ्गमलङ्कारः । तदुक्तं दर्पणे । हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते इति । शार्दूलविक्रीड़ितं वृत्तम् ॥ ११ ॥

जन्मेदं बन्ध्यतां नीतं भवभोगोपलिप्सया ।
काचमूल्येन विक्रीतो हन्त ! चिन्तामणिर्मया ॥ १२ ॥

याच्ञाशून्यमयत्नलभ्यमशनं वायुः कृतो वेधसा
व्यालानां पशवस्तृणाङ्कुरभुजः सुस्थाः स्थलीशायिनः ।
संसारार्णवलङ्घनक्षमधियां वृत्तिः कृता सा नृणां
यामन्वेषयतां प्रयान्ति सततं सर्वे समाप्तिं गुणाः ॥ १३ ॥

यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटुं मृषा
नैषां गर्वगिरः शृणोषि न पुनः प्रत्याशया धावसि ।

जन्मेति । भवे संसारे भोगानां भोग्यवस्तूनाम् उपलिप्सया लाभेच्छया इदं जन्म बन्ध्यतां विफलतां नीतं हन्त खेदे, मया काचमूल्येन चिन्तामणिः विक्रीतः । अत्र भवभोगलोभेन जन्मनः व्यर्थतानयनं काचमूल्येन चिन्तामणिविक्रय इवेति सादृश्यप्रतीतेर्निदर्शनालङ्कारः । तदुक्तं दर्पणे, सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् । यत्र बिम्बानुबिम्बत्वं बोधयेत् सा निदर्शनेति । अनुष्टुब्वृत्तम् ॥ १२ ॥

याच्ञेति । वेधसा ब्रह्मणा व्यालानां सर्पाणां वायुः याच्ञाशून्यं प्रार्थनारहितम् अतएव अयत्नम् अनायासं यथा तथा लभ्यम् अशनम् आहारः कृतः व्यालस्यापि पवनाशनः इत्युक्तिः । पशवः तृणाङ्कुरभुजः स्थलीशायिनः वनभूमिशयनाः सुस्थाः सुखेन तिष्ठन्तीत्यर्थः । संसार एव अर्णवः समुद्रः तस्य लङ्घने क्षमा शक्ता धीर्येषां तथाभूतानाम् अनायासेन संसारं तर्तुं शक्तानामिति भावः नृणां मानवानां सा वृत्तिः जीविका परोपासनादिरूपेति भावः कृता निर्णीतेत्यर्थः वेधसेति शेषः यां वृत्तिं सततम् अन्वेषयतां मृगयतां नृणां सर्वे गुणाः विद्यादयः समाप्तिं प्रयान्ति क्षयं गच्छन्तीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ १२ ॥

यद्वेति । हे कुरङ्ग मृग ! यत् यतः त्वं धनिनां वक्त्रं वदनं

काले बालतृणानि खादसि सुखं निद्रासि निद्रागमे
तन्मे ब्रूहि कुरङ्ग ! कुत्र भवता किं नाम तप्तन्तपः ? ॥१४॥
कामं वनेषु हरिणास्तृणेन जीवन्त्ययत्नसुलभेन ।
विदधति धनिषु न दैन्यं ते खलु पशवो वयं सुधियः ॥१५॥
आस्वाद्य स्वयमेव वच्मि महतीमर्म्मच्छिदो वेदना
मा भूत् कस्यचिदप्ययं परिभवो याच्ञेति संसारिणः ।
पश्य भ्रातरियं हि यौवनजराधिक्कारकेलिस्थली
मानम्लानमसी गुणव्यतिकरप्रागल्भ्यगर्वच्युतिः ॥ १६ ॥

मुहुः पुनः पुनः न ईक्षसे न पश्यसि, मृषा मिथ्या चाटु प्रियोक्तिं न ब्रूषे धनिनां समीपे इति शेषः, एषां गर्वगिरः अहङ्कारवचनानि न शृणुषे, प्रत्याशया च पुनः न धावसि एषां समीपे इति शेषः, काले क्षुधासमये बालतृणानि नवतृणानि खादसि, निद्रागमे सुखं स्वच्छन्दं निद्रासि, तत् तस्मात् भवता कुत्र स्थाने किन्नाम किमाख्यं तपस्तप्तं चरितं तत् मे मह्यं ब्रूहि कथय । शार्दूलविक्रीडितं वृत्तम् ॥१४॥

काममिति । हरिणाः वनेषु अयत्नसुलभेन तृणेन कामं यथेच्छं जीवन्ति वर्त्तन्ते, धनिषु दैन्यं दीनतां न विदधति न प्रकटयन्ति, ते खलु पशवः, वयं सुधियः विद्वांसः ? विपरीतमिदं वयं पशवः ते एव सुधिय इति वक्तव्यमिति भावः । आर्य्यावृत्तं, यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये पञ्चदश चतुर्थके साऽर्य्येति तल्लक्षणात् ॥ १५ ॥

आस्वाद्येति । स्वयमेव महतीर्गुर्वीः मर्मच्छिदः यातनाः विकारान् याच्ञायामिति भावः आस्वाद्य अनुभूय कस्यचित् संसारिणः याच्ञा भिक्षा इति अयं परिभवः निकारः मा भूत् न भवतु कोऽपि ईदृशं निकारं न भजतामिति भावः वच्मि ब्रवीमि, हे भ्रातः ! पश्य अवलोकय, इयं याच्ञा हि भिक्षैव यौवनस्य जरा,

क्व गन्तासि ? भ्रातः ! कृतवसतयो यत्र धनिनः
किमर्थं ? प्राणानां स्थितिमनुविधातुं कथमपि ।
धनैर्याच्ञालब्धैर्ननु परिभवोऽभ्यर्थनफलं
निकारोऽग्रे पश्चाद्धनमहह ! भोस्तद्धि निधनम् ॥ १७ ॥

प्राणानां बत किं ब्रुवे कठिनतां तैरेव साविष्कृता
निष्क्रामन्ति कथञ्चिदेव हि न ये याच्ञावचोभिः समम् ।
आत्मानं पुनराक्षिपामि विदितस्थैर्योऽपि येषामहो
मिथ्याशङ्कितताद्वियोगविधुरो यत् प्रार्थये सर्वशः ॥ १८ ॥

धिक्कारस्य केलिस्थली क्रीड़ास्थानं मानस्य म्लाने मलिनीकरणे मसी, यथा गुणव्यतिकरैः गुणसमूहैः यत् प्रागल्भ्यम् औद्धत्यं तस्य गर्वच्युतिः अहङ्कारभ्रंशः । रूपकमलङ्कारः । शार्दूलविक्रीड़ितं वृत्तम् ॥ १६ ॥

क्वेति । हे भ्रातः ! क्व कुत्र गन्तासि गमिष्यसि ? यत्र धनिनः कृतवसतयः वसन्तीत्यर्थः तत्र गमिष्यामीति शेषः, किमर्थं गन्तासीति शेषः ? याच्ञया भिक्षया लब्धैः धनैः कथमपि प्राणानां स्थितिम् अनुविधातुं सम्पादयितुं गमिष्यामीति शेषः । ननु भोः अभ्यर्थनफलं भिक्षाफलं परिभवः, यतः अग्रे निकारः अपमानं पश्चात् धनम् अहह खेदे, भोः तत् निधनं हि मरणमेव अथ च निशब्देन विकारः ततश्च धनलाभ इति निधनशब्दव्युत्पत्तिरिति बोध्यम् । शिखरिणी-वृत्तम् ॥ १७ ॥

प्राणानामिति । बत खेदे प्राणानां कठिनतां निष्ठुरतां किं ब्रुवे कथयामि ? तैः प्राणैरेव सा याच्ञा आविष्कृता प्रकाशिता, ये याच्ञावचोभिः भिक्षावाक्यैः समं कथञ्चिदेव न निष्क्रामन्ति न निर्गच्छन्ति; आत्मानं पुनरेव आक्षिपामि तिरस्करोमि, यत् यतः येषां प्राणानां विदितस्थैर्योऽपि कठिनतां जानन्नपीत्यर्थः मिथ्या

अमीषां प्राणानां तुलितबिसिनीपत्रपयसां
कृते किं नास्माभिः विगलितविवेकैः व्यवसितम् ।
यदीशानामग्रे द्रविणकणमोहान्धमनसां
कृतं वीतव्रीड़ैः निजगुणकथापातकमपि ॥ १९ ॥

बीभत्सा विषया जुगुप्सिततमः कायो वयो गत्वरं
प्रायोबन्धुभिरध्वनीव पथिकैः योगो वियोगावहः ।
हातव्योऽयमसार एष विरसः संसार इत्यादिकं
सर्वस्यैव हि वाचि चेतसि पुनः कस्यापि पुण्यात्मनः ॥२०॥

अधिष्ठितेन तेषां प्राणानां वियोगेन विधुरः व्याकुलः सन् सर्वशः सर्वथा प्रार्थये भिक्षां करोमि । शार्दूलविक्रीड़ितं वृत्तम् ॥ १८ ॥

अमीषामिति । तुलितं बिसिनीपत्रस्य पद्मपत्रस्य पयः यैः तथाभूतानाम् अतिचपलानाम् अमीषां प्राणानां कृते निमित्तं विगलितविवेकैः निर्विवेकैः अस्माभिः किं न व्यवसितं न उद्युक्तं, यत् द्रविणकणस्य धनलेशस्य मोहेन अन्धं मनो येषां तेषाम् ईशानां धनिनाम् अग्रे सम्मुखे वीतव्रीड़ैः निर्लज्जैः अस्माभिः निजगुणकथा स्वगुणकीर्त्तनमेव पातकमपि कृतम् । शिखरिणीवृत्तम् ॥ १९ ॥

बीभत्सा इति । विषयाः स्रक्चन्दनवनितादयः बीभत्साः कुत्सिताः परिणामविरसा इति भावः, कायः शरीरं जुगुप्सिततमं घृणिततमं मलपूरितत्वादिति भावः, वयः यौवनम् आयुर्वा गत्वरं क्षणिकं, बन्धुभिर्योगः अध्वनि पथि पथिकैरिव प्रायः वियोगावहः विच्छेदजनकः । अतः अयम् असारः विरसः संसारः हातव्यः त्यक्तव्यः इत्यादिकं सर्वस्यैव जनस्य वाचि तिष्ठतीति शेषः । पुनः किन्तु कस्यापि पुण्यात्मनः जनस्य चेतसि मनसि तिष्ठतीति शेषः । शार्दूलविक्रीड़ितं वृत्तम् ॥ २० ॥

तडिन्मालालोलं प्रतिदिवसदत्तान्धतमसं
भवे सौख्यं हित्वा शमसुखमुपादेयमनघम् ।
इति व्यक्तोद्गारं चटुलवचसः शून्यमनसो
वयं वीतव्रीडाः शुक इव पठामः परममी ॥ २१ ॥

यदासौ दुर्वारः प्रसरति मदश्चित्तकरिणः
तदा तस्योद्दामप्रसररसरूढ़ैः व्यवसितैः ।
क्व तत् धैर्य्यालानं क्व च निजकुलाचारनिगड़ः
क्व सा लज्जारज्जुः क्व विनयकठोराङ्कुशमपि ॥ २२ ॥

भिक्षाशनं भवनमायतनैकदेशः

तड़िदिति । चटुलं चञ्चलं मनो येषां तथोक्ताश्चञ्चलचित्ताः शून्यमनसः अचेतस इति यावत् वीतव्रीड़ाः निर्लज्जाः अमी वयं भवे संसारे सौख्यं सुखं तड़िन्मालालोलं विद्युच्चपलं प्रतिदिवसं दत्तान्धतमसं जनितमोहम् अतएव हित्वा त्यक्त्वा अनघं निर्मलं शम-सुखम् उपादेयं ग्राह्यम् इतीत्थं व्यक्तः स्पष्टः उद्गारः उक्तिर्यस्मिन् तद् यथा तथा परं केवलं शुक इव पठामः वदामः न तु कार्य्यतः समाचरामः इति भावः । शिखरिणीवृत्तम् । उपमालङ्कारः ॥२१॥

यदेति । यदा असौ चित्तमेव करी हस्ती तस्य दुर्वारः निवार-यितुमशक्यः मदः प्रसरति स्फुरति तदा तस्य मदस्य उद्दामः उत्कटः यः प्रसरः स्फुरणं तस्य रसेन रागेण रूढ़ैः जातैः उद्भूतैरिति यावत् व्यवसितैः व्यापारैः तत् धैर्य्यमेव आलानं बन्धनस्तम्भः क्व ? निजः कुलाचार एव निगड़ः शृङ्खला च क्व ? सा लज्जा एव रज्जुः क्व ? तत् विनयः शिष्टाचार एव कठोरं कठिनम् अङ्कुशं ताड़नदण्ड-विशेषश्च क्व ? मत्तं चित्तं धैर्य्यादिना न नियन्तुं शक्नुवन्तीति भावः । शिखरिणीवृत्तम् ॥ २२ ॥

शय्या भुवः परिजनो निजदेहभारः ।
वासश्च जीर्णपटखण्डविबद्धकन्था
हाहा ! तथापि विषयान् न जहाति चेतः ॥२३॥
त्वामुदर ! साधु मन्ये शाकैरपि यदसि लब्धपरितोषम् ।
हतहृदयं ह्यधिकाधिकवाञ्छाशतदुर्भरं न पुनः ॥ २४ ॥
शुचां पात्रं धात्रीपरिणतिरमेध्यप्रचयभू-
रयं भूतावासो विमृश कियतीं याति न दशाम् ।
तदस्मिन् धीराणां क्षणमपि किमास्थातुमुचितं
खलीकारः कोऽयं यदहमहमेवेति रभसः ॥ २५ ॥

भिक्षेति । भिक्षया अशनं भोजनम्, आयतनस्य कस्यचित् गृहस्य एकदेशः भवनं गृहं कस्यचिज्जनस्य गृहैकदेशे तदनुपदेशेनावस्थानमिति भावः, भुवः भूतलानि शय्याः, निजदेहभारः परिजनः पुत्रकलत्रादिकं न पोष्यते इति भावः, जीर्णेन पटखण्डेन वसनखण्डेन निबद्धा ग्रथिता कन्था वासश्च, हाहेति खेदे, तथापि इत्थं दुरवस्थायामपीत्यर्थः चेतः विषयान् कामान् न जहाति न त्यजति । वसन्ततिलकं वृत्तम् ॥ २३ ॥

त्वामिति । हे उदर ! त्वां साधु भद्रं मन्ये, यत् यतः शाकैरपि लब्धः प्राप्तः परितोषो येन तथाभूतम् असि, शाकभोजनेनापि परितुष्यसीत्यर्थः । अधिकाधिकवाञ्छानां शतैः दुर्भरम् अपरितोषमित्यर्थः हतहृदयं न पुनः नैव साधु मन्ये इत्यन्वयः । आर्यावृत्तम् ॥ २४ ॥

शुचामिति । शुचां शोकानां पात्रम् आधारः, धात्र्यां भूमौ परिणतिः परिणामो यस्य तादृशः चरमे भूमिसाद्भवतीति भावः, अमेध्यप्रचयानां मलमूत्रादीनां भूः स्थानं मूत्रपुरीषादिपूर्ण इति भावः,

रेतःशोणितयोरियं परिणतिर्यद्वर्ष्म तच्चाभवत्
मृत्योरास्पदमाश्रयो गुरुशुचां रोगस्य विश्रामभूः ।
जानन्नप्यवशी विवेकविरहान्मज्जन्नविद्याम्बुधौ
शृङ्गारीयति पुत्रकाम्यति बत क्षेत्रीयति स्त्रीयति ॥ २६ ॥
क्वैतद्वक्त्रारविन्दं क्व तदधरमधु क्वायतास्ते कटाक्षाः
क्वालापाः कोमलास्ते क्व च मदनधनुर्भङ्गुरो भ्रूविलासः ।

अयं भूतावासः पञ्चभूतजनितदेह इत्यर्थः कियतीं दशां न प्राप्नोति, विमृश्य विचारय चिन्तयेति यावत्, तत् तस्मात् अस्मिन् भूतावासे धीराणां विदुषां क्षणमपि आस्थातुं यत्नं कर्त्तुं किम् उचितम्? नैवेत्यर्थः। ततः यत् अहम् अहमेव इति रभसः हर्षः, रभसो वेग-हर्षयोरित्यमरः। अहङ्कारावेग इति यावत् कोऽयं खलीकारः विडम्बनमिति यावत्। शिखरिणीवृत्तम् ॥ २५ ॥

रेत इति। रेतःशोणितयोः शुक्ररक्तयोः इयं परिणतिः परिणामः संयोगस्येति भावः। तदाह वशिष्ठ,: शुक्रशोणितसम्भवः पुत्रो मातापितृनिमित्तक इति यत् वर्ष्म शरीरं तच्च मृत्योः आस्पदं क्षेत्रं, गुरुशुचां महतां शोकानां पुत्रकलत्रादिबन्धुयोगजनितानामिति शेषः आश्रयः स्थानं तथा रोगस्य विश्रामभूः विश्रामस्थानम् अभवत्। अवशी अजितात्मा जनः जानन्नपि एतदिति शेषः विवेकविरहात् मोहादिति भावः अविद्या माया एव अम्बुधिः समुद्रः तस्मिन् मज्जन् शृङ्गारीयति आत्मनः शृङ्गारमिच्छति स्त्रीसम्भोगमभिलषतीत्यर्थः पुत्रकाम्यति आत्मनः पुत्रमिच्छति. क्षेत्रीयति आत्मनः क्षेत्रं भूमिम् इच्छति, स्त्रीयति आत्मनः स्त्रियम् इच्छति, बत खेदे। शार्दूलविक्रीड़ितं वृत्तम् ॥२६॥

क्वेति। एतत् वक्त्रारविन्दं मुखपद्मं क्व? कुत्र गतमिति शेषः, तत् अधरमधु अधरामृतं क्व? कुत्र गतमिति शेषः, ते आयताः दीर्घाः कटाक्षाः अपाङ्गविलोकनानि क्व? कुत्र गता इति शेषः, ते कोमलाः

दृष्टं खट्वाङ्गकोटौ प्रकटितदशनं मञ्जुगुञ्जत्समीरं
रागान्धानामिवोच्चैरुपहसति महामोहजालं कपालम् ॥२७

शृणु हृदय ! रहस्यं यत् प्रशस्तं मुनीनां
न खलु न खलु योषित्सन्निधिः संविधेयः ।
हरति हि हरिणाक्षी क्षिप्रमक्षिक्षुरप्रैः
पिहितशमतनुत्रं चित्तमप्युत्तमानाम् ॥ २८ ॥

मृदुलाः आलापाः वचनानि क्व ? कुत्र गता इति शेषः, सः मदनधनु-
र्भङ्गुरः कामकार्मुककुटिलः भ्रूविलासः भ्रूभङ्गिः क्व ? कुत्र गत इति
शेषः, खट्वाङ्गस्य शववहनीयपर्य्यङ्कपादपीठस्येति यावत् कोटौ अग्रे
प्रकटितदशनं विस्तृतदन्तं मञ्जु मनोज्ञं यथा तथा गुञ्जन् स्वनन्
समीरो वायुर्यस्मात् तादृशं कपालं शिरोऽस्थिखण्डं रागान्धानां
कामसक्तानाम् उच्चैः प्रबलं महामोहजालम् इदम् अनेन प्रकारेण
उपहसतीव । यदेतत् कान्तामुखकमलमतिमनोहरं तदपि एतां
दशां कालेन यास्यतीति, तत् कोऽयं युष्माकम् अनर्थो महामोह-
विलास इति हसतीवेति भावः । स्रग्धरा वृत्तं, म्रभ्नैर्यानां त्रयेण
त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति तल्लक्षणात् ॥ २७ ॥

शृण्विति । हे हृदय ! मुनीनां प्रशस्तम् उत्कृष्टं यत् रहस्यं
गूढम् अभिप्रेतमिति भावः तत् शृणु आकर्णय, योषितां नारीणां
सन्निधिः सङ्गमः न खलु न खलु नैव नैवेत्यर्थः संविधेयः कार्य्यः
कदापि न कार्य्य इत्यर्थः । हि यतः हरिणाक्षी मृगनयना योषित्
अक्षिक्षुरप्रैः नयनरूपैरस्त्रविशेषैः उत्तमानां महतामपि धीराणामपी-
त्यर्थः पिहितं परिहितं शमः शान्तिरेव तनुत्रं कवचं तादृशं शान्ति-
पूर्णमिति भावः अपि हृदयं क्षिप्रं शीघ्रं सहसेत्यर्थः हरति हि
आकर्षत्येवेत्यर्थः । रूपकमलङ्कारः । मालिनीवृत्तं, ननमयययुतेयं
मालिनी भोगिलोकैरिति तल्लक्षणात् ॥ २८ ॥

समाश्लिष्यत्युच्चैर्घनपिशितपिण्डं स्तनधिया
मुखं लालाक्लिन्नं पिबति चषकं सासवमिव ।
अमेध्यक्लेदार्द्रे पथि च रमते स्पर्शरसिको
महामोहान्धानां किमिव रमणीयं न भवति ॥ २९ ॥

इति शान्तिशतके परीतापोपशमो नाम
प्रथमः परिच्छेदः ॥ १ ॥

---

अयमविचारितचारुतया संसारो भाति रमणीयः ।
अत्र पुनः परमार्थदृशां न किमपि सारमणीयः ॥ १ ॥

समाश्लिष्यतीति । स्पर्शरसिकः कान्तास्पर्शरसज्ञः जनः स्तनधिया कुचबुद्ध्या घनपिशितपिण्डं निविड़मांसपिण्डम् उच्चैः अतिमात्रं गाढ़मिति यावत् यथा तथा समाश्लिष्यति समालिङ्गति, लालाभिः क्लिन्नम् आद्रर्तमिति यावत् मुखं सासवं सुरासहितं चषकमिव पानपात्रमिव पिबति, अमेध्यः अपवित्रः यः क्लेदः रसविशेषः तेन आर्द्रे स्तिमिते पथि योनाविति यावत् रमते क्रीड़ति च, अतः किमिव वस्तु इति शेषः महामोहान्धानां रमणीयं मनोहरं न भवति ? सर्वमेव मनोहरं भवतीत्यर्थः । शिखरिणीवृत्तम् ॥ २९ ॥

---

अयमिति । अयं संसारः अविचारिता अनालोचिता चारुता मनोज्ञता तया हेतुना रमणीयः मनोहरः भाति प्रतीयते इति भावः । पुनः किन्तु परमार्थदृशां परमार्थदर्शिनां विवेकिनामिति यावत् अत्र संसारे किमपि कमनीयः अत्यन्तरमपि सारः स्थिरांशः उत्कृष्टं वस्त्विति भावः नास्ति ॥ १ ॥

केनाप्यनर्थरुचिना कपटं प्रयुक्तं
एतत् सुहृत्तनयबन्धुमयं विचित्रम् ।
कस्यात्र कः परिजनः स्वजनो जनो वा
स्वप्नेन्द्रजालसदृशः खलु जीवलोकः ॥ २ ॥

आरम्भः संशयानामविनयभवनं पत्तनं साहसानां
दोषाणां सन्निधानं कपटशतमयं क्षेत्रमप्रत्ययानाम् ।
दुस्त्याज्यं यन्महद्भिः सुरनरवृषभैः सर्वमायाकरण्डं
स्त्रीरूपं केन लोके विषममृतमयं धर्मनाशाय सृष्टम् ॥ ३ ॥

केनेति । अनर्थरुचिना अशुभाभिलाषिणा केनापि जनेन विधात्रेति भावः एतत् सुहृत्तनयबन्धुमयं विचित्रम् अद्भुतं कपटं मायामयः संसार इति भावः प्रयुक्तं रचितम् । अत्र कपटे कस्य जनस्य कः परिजनः ? कः स्वजनः ? को वा जनः ? नैव कोऽपि कस्येत्यर्थः । जीवलोकः संसारः स्वप्नेन्द्रजालाभ्यां सदृशः खलु तुल्य एव । वसन्ततिलकं वृत्तम् ॥ २ ॥

आरम्भ इति । लोके जगति केन जनेन धर्मनाशाय नित्यनैमित्तिककाम्यकर्मरूपाणां धर्माणां नाशाय व्याघाताय संशयानाम् आरम्भः आश्रय इति यावत्, अविनयस्य दुश्चेष्टितस्य भवनं गृहं, साहसानाम् अविमृश्यकारिताजनितोद्यमानां पत्तनं नगरं, दोषाणां हिंसादीनां सन्निधानम् आवासः, कपटानां मायानां शतम् अतिशय इति भावः तन्मयम्, अप्रत्ययानाम् अविश्वासानां क्षेत्रं स्थानं, महद्भिः महामहिमशालिभिः सुरनरवृषभैः देवप्रवरैः मानवश्रेष्ठैश्च यत् दुस्त्याज्यं त्यक्तुमशक्यं स्त्रीरूपं कान्ताकारम् अमृतमयं विषं गरलं सृष्टम् ? स्त्रिय एव लोकानां धर्मनाशिन्य इति भावः । स्रग्धरावृत्तम् ॥ ३ ॥

यदा प्रकृत्यैव जनस्य रागिणो
भृशं प्रदीप्तो हृदि मन्मथानलः ।
तदात्र भूयः किमनर्थपण्डितैः
कुकाव्यहव्याहुतयो निवेशिताः ॥ ४ ॥

दधति तावदमी विषयाः सुखं
स्फुरति यावदियं हृदि मूढ़ता ।
मनसि तत्त्वविदान्तु विवेचके
क्व विषयाः क्व सुखं क्व परिग्रहाः ॥ ५ ॥

निस्वो वष्टि शतं शती दशशतं लक्षं सहस्राधिपो
लक्षेशः क्षितिपालतां क्षितिपतिश्चक्रेश्वरत्वं पुनः ।

यदेति । यदा रागिणः अनुरागवतः जनस्य हृदि मन्मथानलः कामाग्निः भृशम् अतिशयेन प्रकृत्यैव स्वभावत एव प्रदीप्तः वर्त्तते इति शेषः । तदा अत्र संसारे अनर्थपण्डितैः अनर्थेषु अकुशलेषु पण्डितैः विचक्षणैः कविभिरिति भावः भूयः पुनः कुकाव्यान्येव शृङ्गाररसवत्-पद्यान्येव हव्याहुतयः हवनीयप्रक्षेपाः किं कथं निवेशिताः कृता इति यावत् निरर्थकं तादृशकाव्यरचनं तत्फलस्य कामोद्दीपनस्य कामिनां हृदि अत एव सिद्धत्वादिति भावः । वंशस्थविलं वृत्तं, यदन्ति वंशस्थविलं जतौ जराविति तल्लक्षणात् ॥ ४ ॥

दधतीति । अमी विषयाः स्रक्चन्दनवनितादयः तावत् सुखं दधति जनयन्ति, यावत् हृदि मनसि इयं मूढ़ता मोहः स्फुरति प्रसरति । तु किन्तु तत्त्वविदां तत्त्वदर्शिनां विवेचके मनसि विषयाः क्व ? सुखं तज्जनितमिति शेषः क्व ? परिग्रहाः स्त्रियश्च क्व ? नैते सुखं जनयन्तीति भावः ॥ ५ ॥

निस्व इति । निस्वः निर्धनः शतं शतसंख्यकं धनं, शती शत-

चक्रेशः पुनरिन्द्रतां सुरपतिर्ब्रह्मास्पदं वाञ्छति
ब्रह्मा विष्णुपदं पुनःपुनरहो आशावधिं को गतः ॥ ६ ॥
यदा पूर्वं नासीदुपरि च तथा नैव भविता
तदा मध्यावस्था क्षणपरिचयो भूतनिचयः ।
अतः संयोगेऽस्मिन् परिणतिवियोगे च सहजे
किमाधारः प्रेमा किमधिकरणाः सन्तु च शुचः ॥ ७ ॥

संख्यकधनशाली दशशतं सहस्रं, सहस्राधिपः लक्षं शतसहस्रमित्यर्थः, लक्षेशः लक्षपतिः क्षितिपालतां राजत्वं, क्षितिपतिः चक्रेश्वरत्वं साम्राज्यं, चक्रेशः सम्राट् पुनः इन्द्रतां त्रिलोकाधिपत्यमित्यर्थः वष्टि कामयते । सुरपतिः इन्द्रः ब्रह्मास्पदं ब्राह्मं पदं, ब्रह्मा पुनः पुनः विष्णुपदं वाञ्छति अभिलषति, अहो आश्चर्य्यं को जनः आशावधिं सम्पूर्णकामत्वमित्यर्थः गतः प्राप्तः? न कोऽपीत्यर्थः । तस्मात् आशा न कार्य्येति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥

यदेति । यदा भूतनिचयः प्राणिवर्गः पञ्चभूतसमष्टिर्वा पूर्वं नासीत्, उपरि च परत्र च तथा तेन रूपेणेति भावः नैव भविता यादृशः इदानीं बन्धुरूपेणावतिष्ठते तादृशः परत्र नैव भविता नैव भविष्यति स्वस्वकर्मानुसारेण पृथक् पृथग्गतिकत्वादिति भावः तदा मध्यावस्थायां वर्त्तमाने इति यावत् क्षणपरिचयः अल्पकाल-सम्बन्धः न तु दीर्घकालसम्बन्ध इति भावः । अतः परिणतौ परि-णामे वियोगो यत्र तादृशे सहजे स्वाभाविके अस्मिन् संयोगे पुत्र-कलत्रादीनामिति शेषः प्रेमा प्रणयः किमाधारः कमाधारम् अवलम्ब्य प्रवर्त्तते इति भावः शुचः शोकाश्च तेषां वियोगजा इति भावः किमधिकरणाः कमाश्रयमाश्रिता इत्यर्थः सन्तु भवन्तु? न कोऽपि प्रेम्णः शोकस्य चाश्रयोऽस्तीति भावः । शिखरिणीवृत्तम् ॥ ७ ॥

इन्द्रस्याशुचिशूकरस्य च सुखे दुःखे च नास्त्यन्तरं
स्वेच्छाकल्पनया तयोः खलु सुधा विष्ठा च काम्याशनम्।
रम्भा चाशुचिशूकरी च परमप्रेमास्पदं मृत्युतः
सन्त्रासोऽपि समः स्वकर्मगतिभिश्चान्योन्यभावः समः॥८॥

कृमिकुलचितं लालाक्लिन्नं विगन्धि जुगुप्सितं
निरुपमरसप्रीत्या खादन्नरास्थि निरामिषम्।
सुरपतिमिव पार्श्वस्थं श्वा सशङ्कितमीक्षते
गणयति न हि क्षुद्रो लोकः परिग्रहफल्गुताम्॥९॥

इन्द्रस्येति। इन्द्रस्य सुरपतेः अशुचिशूकरस्य च अपवित्र-वराहस्य च सुखे दुःखे च अन्तरं प्रभेदः नास्ति सममेव तयोः सुखं दुःखञ्चेति भावः। तथाहि तयोरिन्द्रशूकरयोः स्वेच्छाकल्पनया आत्मन इच्छानुसारेण सुधा अमृतं विष्ठा पुरीषञ्च काम्याशनं खलु इष्टं भोजनमेव। रम्भा तदाख्या सुरसुन्दरी अशुचिशूकरी च परमं प्रेमास्पदं सुखभोग्येति भावः मृत्युतः मरणात् सन्त्रासोऽपि भयमपि समः तुल्यः, किं बहुना स्वस्य कर्मणां सुकृतदुष्कृतानां गतिभिः परिपाकैः अन्योन्यभावः अपरापरव्यापारश्च समः तुल्यः। सर्वस्मिन्नेव व्यापारे सर्वस्य सुखदुःखानुभवः समानः, न किञ्चिदपि तयोस्तारतम्यं नास्ति, तत् कथमुत्तमभोगार्थं प्रयासातिशयः परमार्थं विहायेति भावः। शार्दूलविक्रीडितं वृत्तम्॥ ८॥

कृमीति। श्वा कुक्कुरः कृमिकुलैः कीटनिचयैः चितं व्याप्तं लाला-क्लिन्नं श्लेष्मपूर्णं विगन्धि दुर्गन्धं जुगुप्सितं घृणितं निरामिषं निर्मांसं नरास्थि नरकङ्कालं निरुपमरसप्रीत्या अतुल्यरसास्वादेन खादन् भुञ्जानः पार्श्वस्थं पार्श्वे दण्डायमानं सुरपतिमिन्द्रमपि सशङ्कितं सभयं अमेदमाच्छिनत्तीति धियेति भावः ईक्षते अवलोकयति, हि तथाहि क्षुद्रो लोकः नीचजनः परिग्रहेण परकीयधनग्रहणेन फल्गुतां स्वस्य

अमीषां जन्तूनां कतिपयनिमेषस्थितिजुषां
वियोगे धीराणां क इह परितापस्य विषयः ।
क्षणादुत्पद्यन्ते विलयमपि यान्ति क्षणममी
न केऽपि स्थातारः सुरगिरिपयोधिप्रभृतयः ॥ १० ॥
पुत्रः स्यादिति दुःखितः सति सुते तस्यामये दुःखितः
तद्दुःखादिकमार्जने तदनये तन्मूर्खतादुःखितः ।

दैन्यं न गणयति न विचारयति परधनलिप्सायां स्वस्य दैन्यप्रकटनात् गौरवहानिः स्यादिति बुद्ध्या न जानन्तीति भावः । हरिणीवृत्तं, नसमरसैः षड्वेदैर्हयैर्हरिणी मतेति तल्लक्षणात् । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । तदुक्तं दर्पणे, सामान्यं वा विशेषेण विशषस्तेन वा यदि । कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा तत इति ॥ ९ ॥

अमीषामिति । इह संसारे कतिपयनिमेषस्थितिजुषाम् अल्पकालस्थायिनामिति यावत् अमीषां जन्तूनां प्राणिनां स्त्रीपुत्रादीनामिति भावः वियोगे धीराणां विदुषां परितापस्य शोकस्य विषयः हेतुरिति भावः कः ? न कोऽपीत्यर्थः । अमी जन्तवः प्राणिनः क्षणात् उत्पद्यन्ते जायन्ते, क्षणं क्षणमात्रेणैव विलयं नाशं यान्ति गच्छन्ति, सुरगिरिपयोधिप्रभृतयः केऽपि न स्थातारः न स्थास्यन्ति सर्वे एव विनङ्क्ष्यन्तीति भावः का कथान्येषामिति भावः । शिखरिणीवृत्तम् । अत्र तृतीयचतुर्थयोः पादयोर्हेतुत्वेन कीर्त्तनात् वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः । तदुक्तं दर्पणे, हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते इति ॥ १० ॥

पुत्र इति । पुत्रः स्यात् भवेत् ? इति दुःखितः पुत्राभावेनेति भावः जन इति शेषः । सुते पुत्रे सति जाते इति शेषः तस्य पुत्रस्य आमये रोगे सति दुःखितः भवतीति शेषः । आर्जने प्रतिपालने तत्

जातश्चेत् सगुणोऽथ तन्मृतिभयं तस्मिन्मृते दुःखितः
पुत्रव्याजमुपागतो रिपुरयं मा कस्यचिज्जायताम् ॥ ११ ॥
स्थिरापायः कायः प्रणयिषु सुखं स्थैर्य्यविमुखं
महाभोगा रोगाः कुवलयदृशः सर्पसदृशः ।
महावेशः क्लेशः प्रकृतिचपला श्रीरपि खला
यमः स्वैरी वैरी तदपि न हितं कर्म्म विहितम् ॥ १२ ॥

दासत्व दुःखादिकं भवतीति शेषः, तस्य पुत्रस्य अनये दुराचारे तस्य मूर्खतया दुःखितः भवतीति शेषः । अथ सगुणः विद्वान् जातश्चेत् तस्य मृतिभयं मरणात् भयं, मृते च तस्मिन् दुःखितः शोकार्त्तो भवतीति शेषः, अतः पुत्रव्याजं पुत्ररूपमित्यर्थः उपागतः अयं रिपुः शत्रुः कस्यचित् मा जायतां न भवतु । शार्दूलविक्रीड़ितं वृत्तम् । अत्र प्रथमद्वितीयतृतीयपादानां चतुर्थपादस्य हेतुत्वेन कीर्त्तनात् काव्यलिङ्गमलङ्कारः ॥ ११ ॥

स्थिरापाय इति । कायः देहः स्थिरः निश्चितः अपायो ध्वंसो यस्य तथाभूतः अवश्यनश्वर इति यावत्, प्रणयिषु पुत्रकलत्रादिषु सुखं स्थैर्य्यविमुखम् अस्थायीत्यर्थः, तेषां नश्वरत्वाबाध्यत्वादित्वादिति भावः, रोगाः महाभोगाः अतिविस्तराः, यद्वा महान्तः भोगाः भोग्यवस्तूनि रुजन्ति तापयन्तीति रोगाः सन्तापका इति यावत्, कुवलयदृशः नीलोत्पलाक्ष्यः कान्ताः सर्पसदृशः विषधरोपमाः । महावेशः महान् परिच्छदः क्लेशः कष्टसाध्यः यद्वा महान् आवेशः आसक्तिः संसारेष्विति भावः क्लेशः क्लेशजनकः, श्रीरपि सम्पदपि प्रकृतिचपला क्षणस्थायिनीति यावत् अतएव खला निष्ठुरा । यमः अन्तकः स्वैरी स्वेच्छाचारी वैरीः शत्रुः यदा तस्य इच्छा तदैव संहरतीति भावः, तदपि तथापि इत्थं संसारस्यासारत्वेऽपीति भावः हितं शुभङ्करं कर्म न विहितं न कृतम् ? येनेदृशी संसारयातना न स्यात् तया

अर्थप्राणविनाशसंशयकरीं प्राप्यापदं दुस्तरां
प्रत्यासन्नभयं न वेत्ति विभवं स्वं जीवितं काङ्क्षति ।
उत्तीर्णस्तु ततो धनार्थमपरां भूयो विशत्यापदं
प्राणानाञ्च धनस्य चाधमधियामन्योन्यहेतुः पणः ॥ १३ ॥
विमलमतिभिः कैरप्येतज्जगज्जनितं पुरा
विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा ।
इह हि भुवनान्यन्ये वीराश्चतुर्दश भुञ्जते
कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः ॥ १४ ॥

नाचरितमस्माभिरिति निष्कर्षः । शिखरिणीवृत्तम् । अत्र स्थित-कर्मकरणहेतावपि तदकरणात् विशेषोक्तिरलङ्कारः । तदुक्तं दर्पणे । सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधेति ॥ १२ ॥

अर्थेति । अर्थानां धनानां प्राणानाञ्च विनाशसंशयकरीं दुस्तराम् आपदं प्राप्य प्रत्यासन्नं सन्निहितं भयं यस्मात् तथाभूतं विभवं धनं न वेत्ति न गणयति, किन्तु स्वं जीवितं काङ्क्षति कामयते गच्छतु मे धनं जीवनं मे तिष्ठतु इति विचारयतीति भावः । ततः आपदः उत्तीर्णस्तु भूयः पुनः धनार्थम् अपराम् आपदं विशति प्राप्नोति । तस्मात् अधमधियां दुर्मतीनां प्राणानां धनस्य च पणः व्यवहारः अन्योन्यहेतुः परस्परकारणकः, प्राणरक्षार्थं धनत्यागः धनार्थञ्च प्राणत्याग इत्येवं प्राणधनैर्व्यवहरन्ति मन्दा इति भावः । शार्दूल-विक्रीडितं वृत्तम् । अत्र चतुर्थपादोक्तकारणेन पूर्वपदार्थरूपकार्यस्य समर्थनरूपोऽर्थान्तरन्यासः ॥ १३ ॥

विमलेति । कैरपि विमलमतिभिः निर्मलधीभिः ब्रह्मादिभिरिति भावः पुरा पूर्वम् एतत् जगत् जनितं सृष्टम् अपरैरनन्तादिभिरिति भावः विधृतं विशेषेण स्वशिरसि धृतम् । अन्यैः परशुरामादिभि-रिति भावः विजित्य तृणं यथा अतितुच्छमिवेति भावः दत्तं कश्य-

रम्यं हर्म्यतलं न किं वसतये श्राव्यं न गीतादिकं
किं वा प्राणसमासमागमसुखं नैवाधिकप्रीतये।
किन्तु प्रान्तपतत्पतङ्गपवनव्यालोलदीपाङ्कुर-
च्छायाचञ्चलमाकलय्य सकलं सन्तो वनान्तं गताः ॥१५॥

आस्तामकण्टकमिदं वसुधाधिपत्यं
त्रैलोक्यराज्यमपि नैव तृणाय मन्ये।
निःशङ्कसुप्तहरिणीकुलसङ्कुलासु
चेतः परं वलति शैलवनस्थलीषु ॥ १६ ॥

भावेति शेषः। इह संसारे अन्ये चतुर्दश वीराः मनव इति भावः भुवनानि लोकान् भुञ्जते, किन्तु कतिपयपुरस्वाम्ये यत्किञ्चिज्जनस्वाम्ये इति भावः पुंसां नराणाम् एषः मदज्वरः अहङ्कारोष्मा कः? क्षुद्राः स्वल्पेनैव माद्यन्तीति भावः। हरिणीवृत्तम् ॥ १४ ॥

रम्यमिति। रम्यं रमणीयं हर्म्यतलं वसतये वासाय किं न? अपितु वासार्थमेवेत्यर्थः। गीतादिकं श्राव्यं श्रवणीयं किं न? अपितु श्राव्यमेवेत्यर्थः। प्राणसमायाः कान्तायाः समागमसुखम् अधिकप्रीतये प्रभूतपरितोषाय किं वा न? अपितु अधिकप्रीतये एवेत्यर्थः। किन्तु सन्तः साधवः प्रान्ते पतन् यः पतङ्गः शलभः तस्य पवनेन वातेन व्यालोलः विक्षेपचञ्चलः यो दीपाङ्कुरः क्षुद्रदीपः तस्य छायावत् चञ्चलं क्षणिकमिति भावः सकलं जगत् आकलय्य विचार्य वनान्तम् अरण्यसीमानं गताः सर्वं परित्यज्येति शेषः। शार्दूलविक्रीडितं वृत्तम् ॥ १५ ॥

आस्तामिति। अकण्टकं सुशासितमिति भावः इदं वसुधाधिपत्यं भूराज्यम् आस्तां तिष्ठतु, त्रैलोक्यराज्यमपि त्रिभुवनाधिपत्यमपि तृणाय न मन्ये अतितुच्छं मन्ये इत्यर्थः, यतः चेतः चित्तं निःशङ्क

हरिणचरणक्षुण्णोपान्ताः सशाद्वलनिर्झराः
कुसुमललितैर्विष्वग्वातैस्तरङ्गितपादपाः ।
विविधविहगश्रेणीचित्रध्वनिप्रतिनादिता
मनसि न मुदं केषां दध्युः शिवा वनभूमयः ॥ १७ ॥

ते तीक्ष्णदुर्जननिकारशरैर्न भिन्ना
धीरास्त एव शमसौख्यभुजस्त एव ।
सीमन्तिनीभुजलतागहनं व्युदस्य
येऽवस्थिताः शमफलेषु तपोवनेषु ॥ १८ ॥

यथा तथा क्षुण्णैर्हरिणीकुलैः सङ्कुलासु शैलवनस्थलीषु परं केवलं वल्गति धावति । वसन्ततिलकं वृत्तम् ॥ १६ ॥

हरिणेति । हरिणानां चरणैः क्षुण्णाः दलिताः उपान्ताः यासां तथोक्ताः, शाद्वलैः सहिताः निर्झराः यासां तादृश्यः, कुसुमललितैः पुष्पसुगन्धिभिः विष्वक् समन्तात् वातैः तरङ्गिताः कम्पिताः पादपाः यासु ताः, विविधानां विहगश्रेणीनां पक्षिणां चित्रैः मनोज्ञैर्ध्वनिभिः प्रतिनादिताः शब्दिताः, शिवाः शुभकर्यः वनभूमयः केषां जनानां मनसि मुदम् आनन्दं न दध्युः न जनयेयुः ? सर्वेषामेव जनयेयुरित्यर्थः । हरिणीवृत्तम् ॥ १७ ॥

ते इति । ये सीमन्तिनीनां नारीणां भुजलता एव गहनं वनं दुःखदत्वात् वनशब्दवाच्यमिति भावः तत् व्युदस्य परिहृत्य शमफलेषु तपोवनेषु अवस्थिताः, ते जनाः तीक्ष्णानां कर्कशानां दुर्जनानां निकाराः अवमाननानि एव शराः तैः न भिन्नाः न विद्धाः न व्यथिता इति यावत् त एव धीराः विद्वांसः, त एव शमेन शान्त्या यत् सौख्यं तत् भुञ्जते इति तथाभूताः भवन्तीति शेषः । वसन्ततिलकं वृत्तम् ॥ १८ ॥

कुरङ्गाः ! कल्याणं प्रतिविटपमारोग्यमटवि !<br>
स्रवन्ति ! क्षेमं ते पुलिन ! कुशलं भद्रमुपलाः ! ।<br>
निशान्तादश्लान्तात् कथमपि विनिष्क्रान्तमधुना<br>
मनोऽस्माकं दीर्घामभिलषति युष्मत्परिचितिम् ॥ १९ ॥

वासो वल्कलमास्तरः किशलयान्योकस्तरूणां तलं<br>
मूलानि क्षतये क्षुधां गिरिनदीतोयं तृषाशान्तये ।<br>
क्रीड़ा मुग्धमृगैर्वयांसि सुहृदो नक्तं प्रदीपः शशी<br>
स्वाधीने विभवे तथापि कृपणा याचन्त इत्यद्भुतम् ॥२०॥

कुरङ्गा इति । हे कुरङ्गाः ! मृगाः ! कल्याणं कुशलम् ? युष्माकमिति शेषः, हे अटवि ! अरण्य ! प्रतिविटपं प्रतिशाखम् आरोग्यम् ? ते इति शेषः, स्रवन्ति ! नदि ! ते तव क्षेमं मङ्गलम् ? हे पुलिन ! कुशलम् ? तवेति शेषः, हे उपलाः ! शिलाः ! भद्रं मङ्गलम् ? युष्माकमिति शेषः । अधुना इदानीम् अश्लान्तात् अशुभोदर्कात् निशान्तात् गृहात् कथमपि कष्टेन विनिष्क्रान्तं विनिर्गतं गृहनिस्पृहमिति भावः अस्माकं मनः दीर्घां महतीं युष्माकं परिचितिं संसर्गम् अभिलषति इच्छति । शिखरिणीवृत्तम् ॥ १९ ॥

वास इति । वल्कलं वृक्षत्वक् वासः वसनं, किशलयानि पल्लवाः आस्तरः शय्या, तरूणां तलम् ओकः स्थानं गृहमित्यर्थः, मूलानि क्षुधां क्षतये क्षुधानिवृत्तये पर्य्याप्तानीति शेषः, गिरिनदीनां तोयं जलं तृषाशान्तये तृष्णानिवृत्तये भवतीति शेषः, मुग्धमृगैः मनोहरहरिणैः क्रीड़ा, वयांसि पक्षिणः सुहृदः मित्राणि, नक्तं रात्रौ शशी चन्द्रः प्रदीपः, इत्थं विभवे सम्पदि वसनादौ स्वाधीने स्वायत्तेऽपि कृपणाः दीना जनाः तथा तेन प्रकारेण याचन्ते भिक्षन्ते इति अद्भुतम् आश्चर्य्यम् । अत्र याच्ञाया हेतुं विना याच्ञारूपकार्य्योत्पत्तेः

शय्या शाद्वलमासनं शुचिशिला सद्म द्रुमाणामधः
शीतं निर्झरवारिपानमशनं कन्दः सहाया मृगाः ।
इत्यप्रार्थितसर्वलभ्यविभवे दोषोऽयमेको वने
दुष्प्रापार्थिनि यत् परार्थघटनायत्नैर्विना स्थीयते ॥२१॥
पूरयित्वार्थिनामाशां प्रियं कृत्वा द्विषामपि ।
पारं गत्वा श्रुतौघस्य धन्या वनमुपासते ॥ २२ ॥

विभावना, अथवाच्छाया छेतौ सत्यपि तदभावात् विशेषोक्तिरित्यनयोः सन्देहसङ्करः । शार्दूलविक्रीडितं वृत्तम् ॥ २० ॥

शय्येति । शाद्वलं तृणाच्छादिता भूमिः शय्या, शुचिशिला विशुद्धप्रस्तरः आसनं, द्रुमाणां वृक्षाणाम् अधः तलमिति भावः सद्म स्थानं, शीतं शीतलं निर्झरवारि पीयते इति पानं पानीयं, कन्दः मूलविशेषः अशनं भक्ष्यं, मृगाः सहायाः, इतीत्थम् अप्रार्थितः अयाचितः सर्वेषां लभ्यः विभवः सम्पत् यस्मिन् तादृशे दुष्प्रापाः अर्थिनः याचकाः यस्मिन् तथाभूते याचकरहिते यद्वा दुष्प्रापाः अर्थिनो धनिनो यत्र तादृशे धनिनामुपासनारहिते इति भावः वने अयम् एकः दोषः अस्तीति शेषः, यत् परार्थघटनायत्नैः परेषां धनिनाम् अर्थस्य कार्यस्य घटना अनुष्ठानं तत्र ये यत्नाः प्रयासाः तैः विना स्थीयते लोकैरिति शेषः वनवासिनः धनिनामुपासनां विना सुखेन तिष्ठन्तीत्ययमेव दोष इति तात्पर्य्यम् । शार्दूलविक्रीडितं वृत्तम् ॥ २१ ॥

पूरयित्वेति । धन्याः पुण्यवन्तः जनाः अर्थिनां याचकानाम् आशां कामं पूरयित्वा यथाप्रार्थितं धनं तेभ्यो दत्त्वेति भावः द्विषां शत्रूणामपि प्रियं कृत्वा तथा श्रुतौघस्य शास्त्रसमूहस्य पारं गत्वा सर्वाणि शास्त्रमर्माणि विदित्वेति भावः वनम् उपासते आश्रयन्ति । अनुष्टुब्वृत्तम् ॥ २२ ॥

अलमतिचपलत्वात् स्वप्नमायोपमत्वात्
परिणतिविरसत्वात् सङ्गमेनाङ्गनायाः ।
इति यदि शतकृत्वस्तत्त्वमालोचयाम-
स्तदपि न हरिणाक्षीं विस्मरत्यन्तरात्मा ॥ २३ ॥

आहारः फलमूलमात्ररुचितं शय्या मही वल्कलं
संवीताय परिच्छदः कुशसमित्पुष्पाणि पुत्रा मृगाः ।
वस्त्रान्नाश्रयदानभोगविभवा निर्यन्त्रणाः शाखिनो
मित्राणीत्यधिकं गृहेषु गृहिणां किं नाम दुःखादृते ॥२४॥

अलमिति । अतिचपलत्वात् अतिशयचञ्चलत्वात् स्वप्नमायोपमत्वात् स्वप्नेन्द्रजालसदृशत्वात् तथा परिणतिविरसत्वात् अङ्गनायाः कान्तायाः सङ्गमेन अलं न किञ्चित् प्रयोजनमित्यर्थः, सङ्गमेन प्रियाया इति पाठान्तरम् । इतीत्थं यदि शतकृत्वः शतवारं तत्त्वं याथार्थ्यम् आलोचयामः चिन्तयामः तदपि तथापि अन्तरात्मा हरिणाक्षीं कान्तां न विस्मरति । अत्र विस्मरणहेतौ सत्यपि तदभावाद् विशेषोक्तिः, विस्मरणहेतुं विनापि तत्कार्य्योत्पत्तेर्विभावनेत्यनयोः सन्देहसङ्करः । मालिनीवृत्तम् ॥ २३ ॥

आहार इति । अत्र वने रुचितं फलमूलम् आहारः, मही पृथिवी शय्या, संवीताय आच्छादनाय वल्कलं वृक्षत्वक्, कुशसमित्पुष्पाणि दर्भकाष्ठकुसुमानि परिच्छदः गृहविभवः, मृगाः पुत्राः, निर्यन्त्रणाः निर्बाधाः अक्लेशदायिनो वा वस्त्रम् अन्नम् आश्रयः तेषां दानम् अर्पणमेव भोगार्थं विभवो येषां तादृशाः शाखिनः मित्राणि सुहृदः, गृहिणां गृहेषु दुःखात् ऋते विना इत्यतः अधिकं किं नाम अस्तीति शेषः नैव किञ्चिदस्तीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ २४ ॥

विवेकः किं सोऽपि स्वरसजनिता यत्र न कृपा
स किं योगी यस्मिन् न भवति परानुग्रहरसः ।
स किं धर्मो यत्र स्फुरति न परद्रोहविरतिः
श्रुतं किं तद्वा स्यादुपशमफलं यत्र भवति ॥ २५ ॥
अग्रे कस्यचिदस्ति कश्चिदभितः केनापि पृष्ठे कृतः
संसारः शिशुभाव-यौवनजराभावावताराद्यम् ।
बालस्तं बहु मन्यतामसुलभं प्राप्तं युवा सेवतां
वृद्धस्त्वं विषयाद्वहिष्कृत इव व्यावृत्य किं पश्यसि ॥२६॥

विवेक इति । यत्र स्वरसेन स्वभावेन जनिता कृपा न अस्तीति शेषः सोऽपि विवेकः किम् ? नैव स विवेको गण्यते इति भावः । यत्र परेषाम् अनुग्रहे दयायां रसः रागः प्रीतिरिति यावत् न भवति, स योगी किम् ? नैव स योगिशब्दवाच्य इत्यर्थः । यत्र परेषां द्रोहात् अनिष्टात् विरतिर्निवृत्तिर्न स्फुरति न प्रतिभाति, स धर्मः किम् ? नैव स धर्म इत्यर्थः । यत् उपशमः फलं यस्य तादृशं न भवति, तत् श्रुतं ज्ञानं किं स्यात् ? नैव तत् ज्ञानशब्दवाच्यमित्यर्थः । शिखरिणीवृत्तम् ॥ २५ ॥

अग्रे इति । शिशुभावः शैशवं यौवनं जराभावः वार्द्धकं तेषाम् अवतारात् आविर्भावात् अयं संसारः कस्यचित् जनस्य शिशोरिति भावः अग्रे अस्ति, कश्चित् जनं युवानमिति भावः अभितः सर्वतः वर्त्तत इत्यर्थः अस्ति, केनापि जनेन स्थविरेणेत्यर्थः पृष्ठे कृतः अतिक्रान्त इत्यर्थः, बालः शिशुः तं संसारं बहु मन्यताम् आद्रियताम् अनास्वादितस्यास्वादनौचित्यादिति भावः । युवा असुलभं दुर्लभं प्राप्तं सेवतां दुर्लभलब्धस्य भोगौचित्यादिति भावः वृद्धस्त्वं विषयात् बहिष्कृत इव असीति शेषः अतः कथं व्यावृत्य मुखं परावर्त्त्येत्यर्थः किं पश्यसि ? भुक्तस्य भोगानौचित्यात् भोगाक्षमत्वाच्च तव सुखपरि-

पुत्रदारादिसंसारः पुंसां सम्मूढ़चेतसाम्।
विदुषां शास्त्रसंसारः सद्योगाभ्यासविघ्नकृत्॥ २७॥

सार्वभौमभवनं वनवासो निस्वभावभवभावनया ते।
बालिशो हि विषयेन्द्रियचौरैः मुष्यते स्वभवने च वने च॥२

स्थूलप्रावरणोऽतिपूर्वकथकः काशाम्बुलालाविलो
भग्नोरःकटिपृष्ठजानुदशनो मुग्धेऽतिथीन् वारयन्।
शृण्वन् धृष्टवधूवचांसि धनुषा संत्रासयन् वायसान्
आशापाशनिबद्धजीवविभवो वृद्धो गृहे ग्लायति॥२८॥

वर्त्तनेन विषयावलोकनं विडम्बनमात्रमिति भावः। शार्दूलविक्रीडितं वृत्तम्॥ २६॥

पुत्रेति। सम्मूढ़ं चेतः येषां तेषां पुंसां पुत्रदारादिसंसारः, दुषां पण्डितानां शास्त्रसंसारः सतः उत्कृष्टस्य योगाभ्यासस्य विघ्नकृ एकत्र विघ्नं करोतीति विघ्नकृत् अन्यत्र विघ्नं कृन्ततीति विघ्नकृत्। पुत्रादिसंसारः योगाभ्यासस्य विघ्नकरः शास्त्रसंसारः विघ्ननाशक इति यावत्। अत्र प्रकृतिश्लेषः। तदुक्तं दर्पणे, श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते। वर्णप्रत्ययलिङ्गानां प्रकृत्योः पदयोरपि। श्लेषाद्विभक्तिवचनभाषाणामष्टधा च स इति। अनुष्टुब्वृत्तम्॥ २७॥

सार्वभौमेति। निस्वभावः असारः यो भवः संसारः तस्य भावनया चिन्तनेन ते तव सार्वभौमभवनं साम्राज्यम्। हि यतः बालिशः मूर्खः संसारं ससारं मन्यमान इति भावः विषयेन्द्रियचौरैः विषयाः भोग्यवस्तूनि एव इन्द्रियचौराः चित्ततस्कराः तैः स्वभवने च वने च लुप्यते अपह्रियते॥ २८॥

स्थूलेति। स्थूलं प्रावरणं वसनं यस्य तथोक्तः अतिपूर्वकथकः अतिपूर्वकालीनवार्त्तालापो काशेन अम्बुना लालैश्च आविलः कलुषः

वनेषु दोषाः प्रभवन्ति रागिणां
गृहेषु पञ्चेन्द्रियनिग्रहस्तपः ।
अकुत्सिते कर्म्मणि यः प्रवर्त्तते
निवृत्तरागस्य गृहं तपोवनम् ॥ ३० ॥

इति शान्तिशतके विवेकोदयो नाम द्वितीयः परिच्छेदः ॥ २ ॥

---

महता पुण्यपुञ्जेन क्रीतेयं काय-नौस्त्वया ।
पारं दुःखोदधेर्गन्तुं त्वरया या न भिद्यते ॥ १ ॥

भग्ना उरः वक्षःस्थलं कटिः पृष्ठं जानुनी दशनाः दन्ताश्च यस्य तथोक्तः मुग्धः भ्रान्तचित्तः अतिथीन् गृहागतान् वारयन् दुष्टान प्रगल्भानां बहूनां वचांसि शृण्वन् धनुषा यष्ट्येति यावत् वायसान् काकान् संत्रासयन् भाययन् आशा एव पाशाः तेषां शतैः निबद्ध जीवस्य जीवनस्य विभवः व्यापार इति यावत् यस्य तथाभूतः वृद्धः गृहे ग्लायति ग्लानिं प्राप्नोति । शार्दूलविक्रीडितं वृत्तम् ॥ २९ ॥

वनेष्विति । रागिणां भोगस्पृहावतां वनेषु अपि रत्नाध्याहार्य्यः दोषाः प्रभवन्ति जायन्ते, गृहेषु पञ्चानाम् इन्द्रियाणां चक्षुरादीनां निग्रहः दमनं विषयेभ्यो विनिवर्त्तनं तपः । यः अकुत्सिते अनिन्दिते कर्म्मणि प्रवर्त्तते, निवृत्तरागस्य वीतस्पृहस्य तस्य गृहं तपोवनं भवतीति शेषः गृहे स्थित्वापि तपश्चरितुं शक्यते यदि वीतरागः स्यादिति भावः । वंशस्थविलं वृत्तम् ॥ ३० ॥

---

महतेति । त्वया महता पुण्यपुञ्जेन सुकृतराशिना दुःखोदधेः संसारतापसमुद्रस्य पारं गन्तुम् इयं कायनौः शरीररूपा तरणिः

दिवसरजनीकूलच्छेदैः पतद्भिरनारतं
वहति निकटे कालः स्रोतःसमस्तभयावहम् ।
इह हि पततां नास्त्यालम्बो न चापि निवर्त्तनं
तदिह महतां कोऽयं मोहो यदेष मदाविलः ॥ २ ॥

अवश्यं यातारश्चिरतरमुषित्वापि विषया
वियोगे को भेदस्त्यजति न जनो यत् स्वयमिमान् ।
व्रजन्तः स्वातन्त्र्यात् परमपरितापाय मनसः
स्वयं त्यक्ता ह्येते शमसुखमनन्तं विदधति ॥ ३ ॥

---

क्रीता, या नौः त्वरया शीघ्रं न भिद्यते न स्वयं भग्ना भवति, यदि-त्यपपाठः ॥ १ ॥

दिवसेति । पतद्भिः दिवसरजन्यौ एव कूले तयोश्छेदैः समस्त-भयावहं कालस्रोतः समयरूपं स्रोतः निकटे वहति, इह स्रोतसि पततां मज्जताम् आलम्बः अवलम्बनं नास्ति. निवर्त्तनञ्च अतिक्रमण-ञ्चेति यावत् न च अस्तीति शेषः, तत् तस्मात् इह संसारे महतां जनानाम् अयं मोहः भ्रमः कः ? यत् यतः एषः मोहः मदेन अनवधानतया आविलः कलुषः पूर्णः इति भावः । हरिणीवृत्तम् ॥२॥

अवश्यमिति । विषयाः कामाः चिरतरम् उषित्वापि स्थित्वापि अवश्यं यातारः विनङ्क्ष्यन्तीत्यर्थः । अतः वियोगे भेदः विशेषः कः ? यत् जनः स्वयम् इमान् विषयान् न त्यजति । विषयाः स्वयं यदि परित्यजन्ति तदासौ वियोगः सह्यते, आत्मना तु एषां त्यागेऽपि स एव वियोगः तत् कथं स्वकृतवियोगो न सह्यते इति भावः । स्वात-न्त्र्यात् स्वतः व्रजन्तः गच्छन्तः एते मनसः परमपरितापाय भवन्तीति शेषः, स्वयं त्यक्तास्तु अनन्तं शमसुखं विदधति जनयन्ति हि । शिख-रिणीवृत्तम् ॥ ३ ॥

भवारण्यं भीमं तनुगृहमिदं छिद्रबहुलं
बली कालश्चौरो नियतमसिता मोहरजनी।
गृहीत्वा ज्ञानासिं विरतिफलकं शीलकवचं
समाधानं कृत्वा स्थिरतरदृशो जागृत जनाः! ॥ ४ ॥
गृहे पर्य्यन्तस्थे द्रविणकणमोषं श्रुतवता
स्ववेश्मन्यारक्षा क्रियत इति मार्गोऽयमुचितः।
नरान् गेहाद् गेहात् प्रतिदिवसमाकृष्य नयतः
कृतान्तात् किं शङ्का न हि भवति रे जागृत जनाः! ॥ ५ ॥

[1] भवारण्यमिति। भवारण्यं संसारकाननं भीमं भयङ्करम्, इदं तनुगृहं शरीररूपं सद्म छिद्रबहुलं रन्ध्रपूर्णमित्यर्थः। बली बलवान् कालः चौरः तस्करः, मोह एव रजनी नियतं सततम् असिता तमोमयीत्यर्थः। अतः हे जनाः! ज्ञानासिं ज्ञानरूपं तरवालं विरतिः विषयनिवृत्तिरेव फलकं चर्म, शीलमेव विनय एव कवचः तं गृहीत्वा अवलम्ब्य समाधानं कृत्वा सम्यक् अवहितो भूत्वा स्थिरतरदृशः अचञ्चलदृष्टयः सर्वत्र सतर्का इति भावः सन्तः जागृत जाग्रतस्तिष्ठतेत्यर्थः। शिखरिणीवृत्तम्। अत्र पूर्वार्द्धवाक्यस्य शेषार्द्धस्य हेतुत्वेन कीर्त्तनात् काव्यलिङ्गमलङ्कारः॥ ४ ॥

गृहे इति। पर्य्यन्तस्थे ग्रामप्रान्तवर्त्तिनि गृहे कस्यचिदिति शेषः द्रविणकणमोषं यत्किञ्चिद्धनचौर्य्यं श्रुतवता जनेन स्ववेश्मनि स्वगृहे आरक्षा सम्यक् रक्षणं रक्षणप्रयास इति यावत् क्रियते इत्ययं मार्गः पन्थाः रीतिरिति यावत् उचितः युक्तः। किन्तु रे जनाः! गेहात् गेहात् प्रतिगृहात् प्रतिदिवसं नरान् आकृष्य नयतः चोरयत इत्यर्थः कृतान्तात् शङ्का न भवति किम्? रे जनाः! जागृत अस्मात् चौरादवहिता भवतेति भावः। शिखरिणीवृत्तम् ॥ ५ ॥

के यूयं नो वयमिति च वः के भवामो भवाब्धौ
कर्मोर्मीणां विषमवलनैः फेनवत् पुञ्जिताः स्मः ।
तत् क्षेपीयःक्षयिणि विषये चित्तमाधाय धीराः
सर्वारम्भैर्विशत जगतामन्तरात्मन्यनन्ते ॥ ६ ॥

सूक्तिं कर्णसुधां व्यनक्तु सुजनस्तस्मिन्न मोदामहे
ब्रूतां वाचमसूयको विषमुचं तस्मिन्न खिद्यामहे ।
या यस्य प्रकृतिः स तां वितनुतां किं नस्तया जायते
कुर्मस्तत् खलु कर्म जन्मनिगडच्छेदाय यज्जायते ॥ ७ ॥

के इति । भवाब्धौ संसारसागरे यूयं नः अस्माकं के? न केऽपीत्यर्थः, वयमपि वः युष्माकं के भवामः? न केऽपीत्यर्थः ; कर्मोर्मीणां कर्माण्येव ऊर्मयस्तरङ्गाः तासां विषमवलनैः उत्कट-वलनैः फेनवत् फेना इव पुञ्जिताः मिलिताः स्मः । तत् तस्मात् हे धीराः ! क्षेपीयः शीघ्रं क्षयिणि विनश्वरे विषये विभवे चित्तम् आधाय विषयं विनश्वरं ज्ञात्वेति भावः सर्वारम्भैः सर्वैः प्रयत्नैः जगताम् अन्तरात्मनि अनन्ते विशत प्रविशत । मन्दाक्रान्तावृत्तं, मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्ममिति तल्लक्षणात् ॥ ६ ॥

सूक्तिमिति । सुजनः साधुः कर्णसुधां श्रोत्रामृतं सूक्तिं शोभनाम् उक्तिं सन्तोषकरं वाक्यमित्यर्थः व्यनक्तु प्रकटयतु वदत्विति यावत् तस्मिन् वचने इति शेषः न मोदामहे न हृष्यामः । असूयकः विद्वेषी जनः विषमुचं गरलवर्षिणीं वाचं ब्रूतां वदतु निन्दत्विति भावः तस्मिन् निन्दावचने न खिद्यामहे न दुःखिताः भवाम इत्यर्थः । यस्य जनस्य या यादृशीत्यर्थः प्रकृतिः स्वभावः, स जनः तां प्रकृतिं वितनुतां प्रकटयतु तया तेषां प्रकृत्या नः अस्माकं किं जायते? न किमपीत्यर्थः स्तवनिन्दयोर्नास्माकं हानिवृद्धी इति भावः । इदानीं जन्म एव निगडः शृङ्खलं तस्य छेदाय अपुनर्भवायेत्यर्थः यत् जायते प्रभवति

मन्निन्दया यदि जनः परितोषमेति
नन्वप्रयत्नसुलभोऽयमनुग्रहो मे।
श्रेयोऽर्थिनो हि पुरुषाः परितुष्टिहेतोः।
दुःखार्जितान्यपि धनानि परित्यजन्ति॥ ८॥

स्वधर्मपीडामपहाय योऽयं मत्पापशुद्ध्यर्थमिह प्रवृत्तः।
नचेत् क्षमामप्यहमस्य कुर्यां मत्तः कृतघ्नो वद कीदृशोऽन्यः॥ ९॥

तत् कर्म खलु तदेव कर्मेत्यर्थः ईश्वराराधनमिति भावः क्रमः।
शार्दूलविक्रीडितं वृत्तम्॥ ७॥

मन्निन्दयेति। यदि जनः मम निन्दया परितोषम् एति प्राप्नोति, ननु भोः अयं मे मम अप्रयत्नसुलभः अनायासलभ्यः अनुग्रहः। लोकाः आयासेन यत्नेन च लोकान् परितोषयितुं चेष्टन्ते, विनायासं यदि लोकैः केवलनिन्दयैव परितुष्यते तदतीव मे अनुग्रह इति भावः। हि यतः श्रेयोऽर्थिनः मङ्गलार्थिनः पुरुषाः परेषां तुष्टिहेतोः सन्तोषार्थं दुःखार्जितानि अपि धनानि परित्यजन्ति। वसन्ततिलकं वृत्तम्॥ ८॥

स्वधर्मेति। योऽयं मन्निन्दकः पुरुष इति शेषः स्वस्य धर्मपीडां धर्महानिमित्यर्थः अपहाय अनपेक्ष्येति भावः परदारं परद्रव्यं परीवादं परस्य च। परीहासं गुरोः स्थाने चापल्यञ्च विवर्जयेदिति शास्त्रम्। इह संसारे मम पापशुद्ध्यर्थं पापसंशोधनाय प्रवृत्तः उद्यतः, अस्य क्षमामपि अहं न कुर्यां चेत्, तदा मत्तः अन्यः कृतघ्नः कीदृशः? वद। उपजातिवृत्तं, स्यादिन्द्रवज्रा यदि तौ जगौ ग इति, उपेन्द्रवज्रा प्रथमाक्षरे गुराविति, अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता इ' तल्लक्षणात्॥ ९॥

कश्चित् पुमान् क्षिपति मां प्रतिकूलवाक्यैः
सोऽहं क्षमाभवनमेत्य मुदं प्रयामि ।
शोकं व्रजामि पुनरेव यतस्तपस्वी
चारित्रतः स्खलितवानिति मन्निमित्तम् ॥ १० ॥

नन्वात्मन्यवधीयतां गृहसुखाद्वैराग्यमाधीयतां
बन्धुभ्यो व्यवधीयतां सुरसरित्तीरे सदा स्थीयताम् ।
भिक्षार्थं व्यवसीयतां प्रतिदिनं सत्कर्म सञ्चीयतां
कोपश्चेतसि क्षीयतां परतरं ब्रह्मानुसन्धीयताम् ॥ ११ ॥

यत् क्षान्तिः समये स्मृतिः शिव शिवेत्युक्तौ मनोनिर्वृतिः
भैक्षे चाभिरुचिर्धनेषु विरतिः शश्वत्समाधौ रतिः ।

कश्चिदिति । कश्चित् पुमान् मां प्रतिकूलवाक्यैः कर्कशवाक्यैः क्षिपति निन्दति चेदिति शेषः, तदा सोऽहं निन्दितोऽहं क्षमाभवनं क्षमारूपम् आश्रयम् एत्य प्राप्य मुदम् आनन्दं प्रयामि गच्छामि, यतः अयं तपस्वी वराकः मन्निन्दक इति भावः चारित्रतः सुचरित्रात् स्खलितवान् भ्रष्टोऽभवदिति शोकं पुनः शोकम् व्रजामि शोचामि च दुःखमनुभवामि चेत्यर्थः । वसन्ततिलकं वृत्तम् ॥ १० ॥

नन्विति । ननु भोः आत्मनि स्वस्मिन् अवधीयताम् अवधानेन स्थीयतां, गृहसुखात् वैराग्यं वीतरागत्वम् आधीयताम् अवलम्ब्यतां, बन्धुभ्यः व्यवधीयतां निःसङ्गेन स्थीयतामित्यर्थः, सुरसरितः गङ्गायाः तीरे सदा स्थीयताम् उष्यतां, भिक्षार्थं व्यवसीयतां चेष्ट्यतां, प्रतिदिनं सत्कर्म सञ्चीयतां, चेतसि स्थित इति शेषः कोपः क्षीयतां त्यज्यतां, परतरं परात्परं ब्रह्म परमात्मा अनुसन्धीयताम् आराध्यताम् । शार्दूलविक्रीडितं वृत्तम् ॥ ११ ॥

यदिति । समये अभ्युदयकाले इति भावः यत् क्षान्तिः क्षमा शिव शिव इत्युक्तौ स्मृतिः स्मरणं, मनसः निर्वृतिः सन्तोषः, भैक्षे

एकान्ते वसतिर्गुरौ प्रतिनतिः सद्भिः समं सङ्गतिः
सत्ये प्रीतिरनङ्गनिर्जितिरसौ सन्मुक्तिमार्गे स्थितिः ॥१२॥
सम्भोगाद्विषयामिषस्य परितस्तैमित्यमस्ताखिल-
ज्ञानोन्मेषतया कथं तव भवेदात्मास्पदं देहिनः ।
साध्यं तद्धि तदेव साधनमितो व्यावृत्तिरेवामिषात्
तस्यां ज्योतिरुपैत्यनिम्ननमिदं दोषत्रयं धक्ष्यति ॥ १३ ॥

भिक्षान्ने अभिरुचिः अभिलाषः, धनेषु विरतिः स्पृहाभावः, शश्वत् सततं समाधौ ब्रह्मचिन्तने रतिरनुरागः, एकान्ते निर्जने वसतिः अवस्थानं, गुरौ गुरुजने प्रतिनतिः प्रणतिः, सद्भिः समं सह सङ्गतिः सङ्गः, सत्ये सत्यवचने प्रीतिः तथा अनङ्गस्य कामस्य निर्जितिः पराजयः, असौ सति मुक्तिमार्गे स्थितिः, मुक्तिमार्गे अवस्थितस्य शमादयो गुणा जायन्ते इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ १२ ॥

सम्भोगादिति । परितः समन्तात् विषय एव आमिषं भोग्यवस्तु आमिषं भोग्यवस्तुनीत्यमरः । तस्य सम्भोगात् सम्यगास्वादनात् अस्तः अपगतः अखिलः समग्रः ज्ञानोन्मेषः यस्य तस्य भावः तत्ता तया हेतुना तव स्तैमित्यं अचाञ्चल्यं कथम् आत्मास्पदम् आत्माश्रयं भवेत् नैव भवेदित्यर्थः एतादृगवस्थायां चित्तस्थैर्यं न कथमपि भवतीति भावः । इतः अस्मात् आमिषात् विषयादिति भावः व्यावृत्तिरेव निवृत्तिरेवेति यत् तद्धि तदेव साध्यं साधनीयं तदेव साधनं हेतुश्च परमार्थविबोधस्येति भावः । तस्यां निवृत्त्यां सत्याम् अनिम्नं कालर्राहतं स्वयमेव प्रज्वलदित्यर्थः ज्योतिः परमतत्त्वरूपमिति भावः उपैति समीपमागच्छति आविर्भवतीति भावः, तच्च दोषत्रयम् आध्यात्मिकाधिदैविकाधिभौतिकरूपं त्रिविधं तापमित्यर्थः धक्ष्यति भस्मीकरिष्यति । शार्दूलविक्रीडितं वृत्तम् ॥ १३ ॥

बुद्धेरगोचरतया न गिरां प्रचारो
दूरे गुरुप्रथितवस्तुकथावतारः।
तत्त्वं क्रमेण विदुषां करुणावदाते
श्रद्धावतां हृदि पदं स्वयमादधाति ॥ १४ ॥

दुःखाङ्गारकतीव्रः संसारोऽयं महानसो गहनः।
इह विषयामिषलालस! मानसमार्जार! मा निपत ॥१५॥

अरे चेतोमीन! भ्रमणमधुना यौवनजले
त्यज त्वं स्वच्छन्दं युवतिजलधौ पश्यसि न किम्।
तनूजालीजालं स्तनयुगलतुम्बीफलयुतं
मनोभूः कैवर्त्तः क्षिपति परितस्त्वां प्रति मुहुः ॥ १६ ॥

बुद्धेरिति। बुद्धेः अगोचरतया अगम्यतया गिरां वाचां प्रचारः प्रसरः न भवति अत्रेति च शेषः, गुरुणा मीमांसाचार्य्येण प्रथितं सिद्धान्तिकं यत् वस्तु तस्य कथायाः प्रस्तावस्य अवतारः आविष्करणं दूरे तिष्ठतीति शेषः अतिदुर्गमत्वादिति भावः। ननु तर्हि कथं तत्त्वज्ञानमित्यत आह तत्त्वमिति, श्रद्धावतां विश्वासवतां विदुषां धीराणां करुणया दयया अवदाते विशुद्धे हृदि तत्त्वं तत्त्वज्ञानमिति यावत् स्वयं क्रमेण पदम् आदधाति अर्पयति। वसन्ततिलकं वृत्तम् ॥ १४ ॥

दुःखेति। अयं दुःखैरेव अङ्गारकैः तीव्रः दारुणः संसारः गहनः महान् महानसः पाकस्थानं, हे विषय एव आमिषं मांसं तत्र लालसः तत्सम्बुद्धौ, मानसमार्जार! चित्तविड़ाल! इह महानसे मा निपत न पतितो भव। आर्य्यावृत्तम् ॥ १५ ॥

अरे इति। अरे चेतोमीन! चित्तमत्स्य! त्वं अधुना यौवनजले भ्रमणं चापल्यमिति यावत् त्यज, युवतिजलधौ किं स्वच्छन्दं सुखं न पश्यसि? मनोभूः कामः कैवर्त्तः धीवरः, कैवर्त्ते दासधीवरावित्यमरः। त्वां प्रति तव ग्रहणार्थमिति भावः मुहुः पुनः पुनः स्तनयो-

विषमविषधराणां दोषदंष्ट्रोत्कटानां
विषमविषविमर्द्दव्यक्तदुश्चेष्टितानाम् ।
विरम विरम चेतः ! सन्निधानादमीषां
सुखकणमणिहेतोः साहसं मास्म कार्षीः ॥ १७ ॥
एकीभूय स्फुटमिव किमप्याचरद्भिः प्रलीनैः
एभिर्भूतैः स्मर कति कृताः स्वान्त ! ते विप्रलम्भाः ।
तस्मादेषां त्यज परिचयं चिन्तय स्वव्यवस्थाम्
आभाषस्ते किमु न विदितः खण्डितः पण्डितः स्यात् ॥१८॥

युगलमेव तुम्बीफलं तेन युतं तनूरेव जालो लता सैव जालम् आनायः तत् क्षिपति । रूपकमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ १६ ॥

विषमेति । हे चेतः ! दोषा एव दंष्ट्राः ताभिः उत्कटानां दारुणानां विषमेण उत्कटेन विषविमर्द्देन गरलसङ्गेन व्यक्तं प्रकटं दुश्चेष्टितं येषां तथाभूतानाम् अमीषां विषयाः कामा एव विषधराः व्यालाः तेषां सन्निधानात् संसर्गात् विरम विरम निवर्त्तस्व निवर्त्तस्व, दुःखस्य कणः बिन्दुरेव मणिः यत्किञ्चित्सुखमित्यर्थः तस्य हेतोः कारणात् साहसम् अविमृश्यकारितां मास्म कार्षीः न कुरु । मालिनीवृत्तम् ॥ १७ ॥

एकीभूयेति । हे स्वान्त ! चित्त ! स्वान्तं हृन्मानसं मन इत्यमरः । एभिः भूतैः क्षित्यादिभिः पञ्चभिः एकीभूय एकत्वमापद्य मिलित्वेत्यर्थः प्रलीनैः गूढं स्थितैरिति यावत् स्फुटमिव स्पष्टमपीत्यर्थः किमपि अनिर्वचनीयं तवानिष्टमिति शेषः आचरद्भिः सद्भिः ते तव कति विप्रलम्भाः वञ्चनानि न कृताः ? बहवः कृता इत्यर्थः स्मर मनसि चिन्तय, तस्मात् कारणात् एषां भूतानां परिचयं सङ्गं त्यज, स्वस्य आत्मनः व्यवस्थां सुखस्थितिमिति यावत् चिन्तय, आभाषः अभिप्रायः तव सर्वनाशहेतुरिति भावः ते तव किं विदितः न ज्ञातो न ? न

धूर्तैरिन्द्रियनामभिः प्रणयितामापादयद्भिः स्वयं
सम्भोक्तुं विषयामिषं किल पुमान् सौख्याशया वञ्चितः ।
तैः शेषे कृतकृत्यतामुपगतैरौदास्यमालम्बितं
सम्प्रत्येष विधेर्नियोगवशगः कर्मान्तरैर्बध्यते ॥ १९ ॥

दैवे समर्प्य चिरसञ्चितमीहजालं
स्वस्थाः सुखं वसत किं परयाचनाभिः ।
मेरुं प्रदक्षिणयतोऽपि दिवाकरस्य
ते तस्य सप्त तुरगा न कदाचिदष्टौ ॥ २० ॥

तवात्र सम्यक् दोष इत्याह खण्डित इति, पण्डितः विद्वान् जनः खण्डितः प्रतारितः स्यात् एषां विप्रलोभने इति भावः का कथान्येषा-मविदुषामिति भावः । मन्दाक्रान्तावृत्तम् ॥ १८ ॥

धूर्त्तैरिति । इन्द्रियनामभिः इन्द्रियाख्यैर्धूर्त्तैः विषयामिषं विषयरूपं भोग्यवस्तु सम्भोक्तुं स्वयं प्रणयितां आपादयद्भिः सद्भिः पुमान् सौख्याशया सुखलाभेच्छया वञ्चितः किल, शेषे परिणामे कृतकृत्यताम् उपगतैः सिद्धकामैः सद्भिः औदास्यं ताटस्थ्यं यथा विषयेभ्य इति शेषः आलम्बितम् अवलम्बितम् अशक्तत्वादिति भावः, सम्प्रति एष पुमान् विधेर्दैवस्य नियोगवशगः आज्ञावर्त्ती सन् कर्मा-न्तरैः कर्मविशेषफलैरिति यावत् बध्यते । शार्दूलविक्रीडितं वृत्तम् ॥१९॥

दैवे इति । चिरं सञ्चितं प्राक्तनम् ईहजालम् चेष्टितसमूह कर्मसङ्घमिति यावत् दैवे समर्प्य दैवाधीनम् अदृष्टायत्तमिति यावत् मत्वेत्यर्थः स्वस्थाः सुस्थिराः सन्तः सुखं वसत, यूयमिति शेषः । सान्त्वनान् मल्लिक्तिरियम् । मेरुं प्रदक्षिणयतः प्रदक्षिणीकुर्वतोऽपि पर्यटतोऽपीति यावत् दिवाकरस्य ते एव सप्त तुरगाः अश्वाः सन्तीति शेषः कदाचित् अष्टौ न आसन्निति शेषः । कोऽतिवर्त्तते दैवं तदुद्योगायासेन किमिति भावः । विशेषेण सामान्यसमर्थनरूपो-

आकाशमुत्पततु गच्छतु वा दिगन्तम्
अम्भोनिधिं विशतु तिष्ठतु वा यथेष्टम्।
जन्मान्तरार्जितशुभाशुभकृन्नराणां
छायेव न त्यजति कर्मफलानुबन्धः॥ २१॥

उपशमफलाद्विद्यावीजात् फलान्तरमिच्छतां
भवति विफलो यत् प्रारम्भस्तदत्र किमद्भुतम्।
नियतविषया ह्येते भावा न यान्ति विपर्ययं
जनयति यतः शालेर्वीजं न जातु यवाङ्कुरम्॥ २२॥

ऽर्थान्तरन्यासः। तदुक्तं दर्पणे, सामान्यं वा विशेषेण विशेषस्तेन वा यदि। कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते। साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा तत इति। वसन्ततिलकं वृत्तम्॥ २०॥

आकाशमिति। आकाशम् उत्पततु उड्डयतां, दिगन्तं वा गच्छतु, अम्भोनिधिं समुद्रं विशतु वा यथेष्टं तिष्ठतु जन इति शेषः, नराणां जन्मान्तरार्जितः शुभाशुभं सुकृतदुष्कृतं करोतीति तथोक्तः कर्मफलानुबन्धः छायेव न त्यजति नरानिति शेषः। वसन्ततिलकं वृत्तम्॥ २१॥

उपशमेति। अत्र संसारे उपशमः शान्तिरेव फलं यस्य तादृशात् विद्या एव वीजं तस्मात् फलान्तरम् अन्यत् उपशमव्यतिरिक्तमिति यावत् फलम् इच्छताम् अभिलषतां, प्रारम्भः समुद्योगः विफलः भवतीति यत् तत् किम् अद्भुतम् आश्चर्य्यम्? नैवेत्यर्थः। एते भावाः पदार्थाः नियतः निर्द्धारितः विषयो येषां तादृशाः नियतफलका इति यावत् विपर्य्ययं वैपरीत्यं न यान्ति यस्य यत् फलं स तदेव प्रसूते नान्यदिति भावः। यतः शालेर्धान्यस्य वीजं जातु कदाचित् यवाङ्कुरं न जनयति नोत्पादयति। विशेषेण ...समर्थनरूपोऽर्थान्तरन्यासः। हरिणीवृत्तम्॥ ॥

यद्येते साधूनामुपरि विमुखाः सन्ति धनिनो
न चैषावज्ञैषामपितु निजवित्तव्ययभयम्।
अतः खेदो नास्मिन् परममनुकम्पैव भवति
स्वमांसत्रस्तेभ्यः क इह हरिणेभ्यः परिभवः॥ २३॥

तस्मादनन्तमजरं परमं विकाशि
तद्ब्रह्म वाञ्छत बुधा यदि चेतनास्ति।
यस्यानुषङ्गत इमे भुवनाधिपत्य-
भोगादयः कृपण एव सतां विभान्ति॥ २४॥

इति शान्तिशतके कर्त्तव्यतोपदेशो नाम तृतीयः
परिच्छेदः॥ ३॥

यदीति। एते धनिनः साधूनाम् अर्थिनामिति शेषः उपरि यत् विमुखाः सन्ति, एषां धनिनाम् एषा वैमुख्यमिति यावत् अवज्ञा अव-मानना अर्थिनामुपरीति शेषः न च नैव, अपितु केवलमित्यर्थः निज-वित्तस्य व्ययात् भयम्। अतः अस्मिन् वैमुख्ये खेदः दुःखं न कर्त्तव्य इति शेषः, परं किन्तु अनुकम्पा दया एव भवति तेषां प्रतीति शेषः, इह संसारे स्वमांसात् त्रस्तेभ्यः भीतेभ्यः हरिणेभ्यः कः परिभवः? नैव परिभवः प्रत्युत तेषां मांसस्य अपहरणे तेषां प्रति दया एव कृता स्यादिति भावः। क इहेत्यत्र क इवेति पाठान्तरम्। शिखरिणी-वृत्तम्॥ २३॥

तस्मादिति। हे बुधाः विद्वांसः! यदि चेतना चैतन्यम् अस्ति युष्माकमिति शेषः तस्मात् तदेत्यर्थः यस्य अनुषङ्गतः अनुषङ्गात् किञ्चित्-सङ्गेनेति भावः किञ्चिदानुकूल्येनेति भावः एव सतां साधूनाम् इमे क्षयिणः नश्वराः भुवनाधिपत्यभोगादयः राज्यसम्पत्प्रभृतयः विभान्ति भायन्ते, तत् अनन्तम् अजरं परमं विकाशि ज्योतिर्मयमित्यर्थः ब्रह्म वाञ्छत अभिलषत। वसन्ततिलक वृत्तम्॥ २४॥

लक्ष्मीर्निर्वृतिमेति हीनचरितैर्यैरेव तद्धिक्चया
किं नाद्यैव करोमि तामनुचरीं रामां सकामामिव।
ब्रह्माण्डे निपतत्यपि स्खलति न प्रायेण येषां मनः
तेषामार्यमनस्विनामनुपदं गन्तास्मि नाहं यदि ॥ १ ॥
लब्धाः श्रियः सकलकामदुघास्ततः किं ?
सन्तर्पिताः प्रणयिनो विभवैस्ततः किम् ?।
न्यस्तं पदं शिरसि विद्विषतां ततः किं ?
कल्पं स्थितं तनुभृतां तनुभिस्ततः किम् ? ॥ २ ॥
निष्क्रान्ताः किमु कन्दरोदरभुवः क्षीणास्तरूणां त्वचः
किं शुष्काः सरितः स्फुरद्गिरिगुरुग्रावस्खलद्वीचयः।

लक्ष्मीरिति। यैरेव हीनचरितैः दुश्चरितैः लक्ष्मीः श्रीः सम्पदित्यर्थः निर्वृतिं सन्तोषं स्थितिमिति यावत् एति प्राप्नोति, तेषां हीनचरितानां धिक्चया अभ्यासेन तां लक्ष्मीं सकामां सानुरागां रामामिव कान्तामिव अद्यैव किम् अनुचरीं किङ्करीं न करोमि न कर्तुं शक्नोमि ? अपि तु करोम्येवेत्यर्थः। ब्रह्माण्डे निपतत्यपि येषां मनः प्रायेण न स्खलति न विफलीभवतीत्यर्थः यदि अहं तेषाम् आर्य्याणां साधूनां मनस्विनां धीराणाम् अनुपदं पदस्य पश्चात् न गन्तास्मि। आर्य्यपद्धतेरनुसरणार्थी अहम् नैव लक्ष्मीं गणयामीति भावः। शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥

लब्धा इति। सकलकामदुघाः सर्वकामप्रसविन्यः श्रियः सम्पदः लब्धाः प्राप्ताः, ततः किम् ? विभवैः प्रणयिनः बन्धवः सन्तर्पिताः प्रोषिताः ततः किं तेन किम् ? विद्विषतां शत्रूणां शिरसि पदं न्यस्तं दत्तं ततः किं तेन किम्। तनुभृतां देहिनां तनुभिः शरीरैः कल्पं स्थितम् आभवयं जीवितं ततः किम् तेन किम्। वसन्ततिलकं वृत्तम् ॥ २ ॥

प्रत्युत्थानमितस्ततः प्रतिदिनं कुर्वद्भिरुद्ग्रीविभिः
यद्द्वारार्पितदृष्टिभिः क्षितिभुजां विद्वद्भिरप्यास्यते ॥ ३ ॥
कामं जीर्णपलाशसंहतिकृतां कन्थां वसानो वने
कुर्यामम्बुभिरप्ययाचितसुखैः प्राणानुबन्धस्थितिम् ।
साङ्गग्लानि सवेपितं सचकितं स्वान्तर्निदाघज्वर
वक्तुं न त्वहमुत्सहे सकृपणं देहीति दीनं वचः ॥ ४ ॥
सत्यं वक्तुमशेषमस्ति सुलभा वाणी मनोहारिणी

निष्कन्दा इति । कन्दरायाः गिरिगुहायाः उदरभुवः अभ्यन्तर-भूमयः निष्कन्दाः कन्दो मूलविशेषः तद्रहिताः किम् ? तरूणां त्वचः वल्कलानि क्षीणाः विनष्टाः किम् ? स्फुरत्सु गिरीणां गुरुषु महत्सु ग्रावसु शिलासु स्खलन्त्यः वीचयः तरङ्गाः यासां तादृश्यः सरितः नद्यः शुष्काः किम् ? यत् विद्वद्भिरपि प्रतिदिनम् इतस्ततः प्रत्युत्थानं कुर्वद्भिः उद्ग्रीवैः उन्नमितग्रीवैः क्षितिभुजां धनिनामिति यावत् द्वारे अर्पिता दृष्टिर्यैः तथोक्तैः सद्भिः आस्यते स्थीयते । कन्दवल्कल-नदीजलानां सद्भावेऽपि विद्वांसः कथं धनिनः सेवन्ते इति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ३ ॥

काममिति । वने जीर्णानां पलाशानां पत्राणां संहत्या कृतां रचितां कन्थां वसानः आच्छादयन् सन् अयाचितसुखैः अयाचनया सुखजनकैः अम्बुभिर्जलैरपि कामं स्वच्छन्दं यथा तथा प्राणानाम् अनुबन्धेन संयमेन स्थितिं कुर्यां तु किन्तु साङ्गग्लानि अङ्गानां ग्लानिर्म्लानित्वं तत्सहितं सत्करोमीति यावत् सवेपितं सकम्पं सचकितं सभयम् अवमानभयादन्यैरलक्षितमिति भावः स्वस्य आत्मनः अन्तः अन्तरात्मनीत्यर्थः निदाघज्वरः सन्तापव्यथा यस्मिन् तत् सकृपणं सकातरं देहीति दीनं दैन्यसूचकं वचः वक्तुं धनिसमीपे इति भावः अहं न उत्सहे न पारयामीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥

दातुं दानवरं शरण्यमभयं स्वच्छं पिपासुभ्यो जलम्।
पूजार्थं परमेश्वरस्य विमलः स्वाध्याययज्ञः परं
क्षुद्व्याधेः फलमूलमस्ति शमनं क्लेशात्मकैः किं धनैः॥ ५॥

सन्ति स्वादुफला वनेषु तरवः स्वच्छं पयो निर्झरं
वासो वल्कलमाश्रयो गिरिगुहा शय्या लतावल्लरी।
आलोकाय निशासु चन्द्रकिरणाः सख्यं कुरङ्गैः सह
स्वाधीने विभवेऽप्यहो नरपतिं सेवन्त इत्यद्भुतम्॥ ६॥

सत्यमिति। सत्यं वक्तुं सत्यकथनायेत्यर्थः सुशुभा मनोहारिणी वाणी वाक् अशेषं कामम् अस्ति विद्यते सत्या मनोहरा च वाक् न दुर्लभेति भावः। शरण्यं शरणे साधु प्राणिनां रक्षणसमर्थमिति यावत् अभयं निर्भयत्वं दानवरं दानश्रेष्ठं दातुं दानार्थम् अस्तीत्यन्वयः। पिपासुभ्यः दातुमिति शेषः स्वच्छं निर्मलं जलं निर्झरोदकमिति भावः अस्तीत्यन्वयः। परमेश्वरस्य पूजार्थं विमलः विशुद्धः स्वाध्यायः वेदाध्ययनमेव यज्ञः परं पर्याप्तं यथा तथा अस्तीत्यन्वयः, तथा फलमूलं क्षुद्व्याधेः क्षुधारूपरोगस्य शमनं निवर्त्तकम् अस्ति, तस्मात् क्लेशात्मकैः कष्टमयैः धनैः किम्? न किमपि प्रयोजनमित्यर्थः। अत्र क्लेशात्मकधनस्य प्रयोजनरूपं हेतुं विनापि तदर्जनप्रयास इति विभावनालङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥ ५॥

सन्तीति। वनेषु तरवः स्वादु सुस्वादं फलं येषां तादृशाः सन्ति, स्वच्छं निर्मलं निर्झरं पयः, वल्कलं वासः वसनं, गिरिगुहा आश्रयः वासस्थानं, लतावल्लरी लतासमूहः शय्या, निशासु रात्रिषु आलोकाय चन्द्रकिरणाः, कुरङ्गैः मृगैः सह सख्यं लभ्यते इति सर्वत्रान्वयः। इत्थं विभवे सम्पदि स्वाधीने स्वायत्तेऽपि नरपतिं धनिनमिति भावः सेवन्ते आराधयन्ति जना इति शेषः इति अद्भुतम्

पाणिः पात्रं पवित्रं भ्रमणपरिगतं भैक्ष्यमक्षय्यमन्नं
वस्त्रं विस्तीर्णमाशादशकममलिनं तल्पमस्वल्पमुर्वी ।
येषां निःसङ्गताङ्गीकरणपरिचिति स्वान्तसन्तोषिणस्ते
धन्याः संन्यस्तदैन्यव्यतिकरनिकराः कर्म निर्मूलयन्ति ॥७॥

महाशय्या भूमिर्मसृणमुपधानं भुजलता
वितानञ्चाकाशं व्यजनमनुकूलोऽयमनिलः ।
स्फुरच्चन्द्रो दीपः स्वधृतिवनितासङ्गमुदितः
सुखं शान्तः शेते विगतभवभीतिर्नृप इव ॥ ८ ॥

आश्चर्यम् । अत्रापि हेतुं विना कार्य्योत्पत्तेर्विभावना । शार्दूल-
विक्रीड़ितं वृत्तम् ॥ ६ ॥

पाणिरिति । येषां पाणिः हस्तः पवित्रं विशुद्धं पात्रं भ्रमणपरिगतं
भ्रमणलब्धं भैक्ष्यं भिक्षोपार्जितम् अक्षयं क्षयरहितं भिक्षाया नित्य-
लभ्यत्वादिति भावः अन्नम् आहारः, अमलिनं सततनिर्मलम् आशा-
दशकं दश दिश इत्यर्थः विस्तीर्णं वस्त्रं वसनम्, उर्वी पृथ्वी अस्वल्पम्
अतिमहत् तल्पं शय्या अस्तीति शेषः निःसङ्गतायाः सङ्गराहित्यस्य
अङ्गीकरणेन परिचितिः परिचयो यस्य तादृशं यत् स्वान्तं मनः तेन
सन्तोषिणः ते धन्याः पुण्यवन्तः सन्न्यस्तः सम्यक् त्यक्तः दैन्यव्यति-
कराणां दैन्यसम्बन्धानां निकरः समूहः यैः तथाभूताः सम्यक्त्यक्त-
दीनभावा इत्यर्थः सन्तः कर्म सुकृतदुष्कृतरूपमिति निर्मूलयन्ति त्यज-
न्तीत्यर्थः मुक्तिं लभन्ते इति भावः । स्रग्धरावृत्तं, म्रभ्नैर्यानां त्रयेण
त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति तल्लक्षणात् ॥ ७ ॥

महाशय्येति । भूमिः भूतलं महती शय्या, भुजलता मसृणं
कोमलम् उपधानं शिरोरक्षणस्थानम्, आकाशं वितानं चन्द्रातपः,
अनुकूलः अयम् अनिलः वायुः व्यजनं, स्फुरन् दीप्यमानश्चन्द्रः दीपः,
अतः स्वधृतिरात्मतुष्टिरेव वनिता तस्याः सङ्गेन मुदितः शान्तो दान्तः

धैर्य्यं यस्य पिता क्षमा च जननी शान्तिश्चिरं गेहिनी
सत्यं सूनुरयं दया च भगिनी भ्राता मनःसंयमः ।
शय्या भूमितलं दिशोऽपि वसनं ज्ञानामृतं भोजनं
यस्यैते हि कुटुम्बिनो वद सखे ! कस्मात् भयं योगिनः ? ॥९॥
धिक् धिक् तान् क्रिमिनिर्विशेषवपुषः स्फूर्ज्जन्महासिद्धयो
निष्पन्दीकृतशान्तयोऽपि च तमःकारागृहेष्वासते ।
तं विद्वांसमिह स्तुमः करपुटीभिक्षाग्रशाकेऽपि वा ।
बाला वक्त्रसरोजिनीमधुनि वा यस्या विशेषो रसः ॥१०॥

विगता भवात् संसारात् भीतिः यस्य तादृशः सन् स्वपं [illegible] सुखं शेते । उपमालङ्कारः । शिखरिणीवृत्तम् ॥ ८ ॥

धैर्य्यमिति । यस्य पिता धैर्य्यं, जननी माता क्षमा, गेहिनी भार्य्या चिरं सन्ततस्थायिनीत्यर्थः शान्तिः, अयं सूनुः पुत्रः, सत्यं भगिनी दया, मनसः संयमः वशीकरणं भ्राता, भूमितलं शय्या, दिशः वसनं वस्त्रं ज्ञानमेव अमृतं भोजनम् आहारः, यस्य जनस्य एते धैर्य्यादयः कुटुम्बिनः परिजनाः सन्ति हि, हे सखे ! तस्य योगिनः कस्मात् भयम् ? वद कथय । नैव कुतोऽपि भयमित्यर्थः । रूपकमलङ्कारः । शार्दूलविक्रीड़ितं वृत्तम् ॥ ९ ॥

धिगिति । स्फूर्ज्जन्ती महती सिद्धिर्येषां तथाभूताः सम्यक् सिद्धिलाभार्हा इति भावः निष्पन्दीकृता निश्चलीकृता शान्तिर्येषां तथोक्ताः अपि अतीवशान्तप्रकृतयोऽपीति भावः ये जनाः तमांसि मोहा एव कारागृहाणि तेषु आसते तिष्ठन्ति, तान् क्रिमिनिर्विशेषवपुषः क्रिमितुल्यदेहानिति यावत् धिक् धिक् पुनःपुनर्निन्दामीत्यर्थः धिङ्निर्भर्त्सननिन्दयोरित्यमरः । यस्य करपुटी अञ्जलिः तत्र स्थिते भिक्षाग्रशाकेऽपि वा, बालायाः नवीनायाः कान्तायाः वक्त्रं वदनमेव सरोजिनी कमलमित्यर्थः तस्या मधुनि वा अविशेषः अभिन्नः

मातर्लक्ष्मि ! भजस्व कञ्चिदपरं मत्काङ्क्षिणी मास्म भू-
र्भोगेभ्यः स्पृहयालवस्तव वशाः का निःस्पृहाणामसि ।
सद्यः स्यूतपलाशपत्रपुटिकापात्रे पवित्रीकृते
भिक्षाशक्तुभिरेव सम्प्रति वयं वृत्तिं समीहामहे ॥ ११ ॥

जिह्वे ! लोचननासिके ! श्रवण ! हे त्वक् ! चापि नो वार्य्यसे
सर्वेभ्योऽस्तु नमः कृताञ्जलिरहं सप्रश्रयं प्रार्थये ।
युष्माकं यदि सम्मतं तदधुना नात्मानमिच्छाम्यहं
होतुं भूमिभुजां निकारदहनज्वालाकराले गृहे ॥ १२ ॥

रसः स्वादः अभूदिति शेषः, इह संसारे तं विद्वांसं शान्तिनं स्तुमः प्रशंसामः । शार्दूलविक्रीडितं वृत्तम् ॥ १० ॥

मातरिति । हे मातः लक्ष्मि ! अपरं मद्भिन्नमित्यर्थः कञ्चित् जनं भजस्व सेवस्व आश्रयेत्यर्थः मत्काङ्क्षिणी मदर्थिनी मास्म भूः न भव, भोगेभ्यः स्पृहयालवः भोगार्थिन इत्यर्थः जना इति शेषः तव वशाः वशवर्त्तिनः भवन्तीति शेषः, निःस्पृहाणां जनानां त्वं कासि ? नैव कापीत्यर्थः निःस्पृहास्त्वां न गणयन्तीति भावः । सम्प्रति वयं पवित्रीकृते विशोधिते सद्यः स्यूतैः ग्रन्थिबद्धैरिति भावः पलाशैः पत्रैः या पत्रपुटिका ठोङोति प्रसिद्धा सैव पात्रं तस्मिन् भिक्षाशक्तुभिः भिक्षोपार्जितशक्तुभिरेव न त्वन्याकाङ्क्षेति भावः वृत्तिं जीविकां समीहामहे सम्यक् चेष्टामहे । शार्दूलविक्रीडितं वृत्तम् ॥ ११ ॥

जिह्वे इति । हे जिह्वे रसने ! हे लोचननासिके च ! हे श्रवण ! कर्ण ! हे त्वक् स्पर्शेन्द्रिय ! न चापि वार्य्यसे निषिध्यसे युष्माकं स्वस्वव्यापारादिति भावः, सर्वेभ्यः युष्मभ्यं नमः अस्तु, अहं कृताञ्जलिः सन् सप्रश्रयं सविनयं प्रार्थये याचे युष्मानिति शेषः, यदि युष्माकं सम्मतम् अभिमतं स्यादिति शेषः तत् तदा अधुना साम्प्रत,

गतः कालो यत्र प्रणयिनि मयि प्रेमकुटिलः
कटाक्षः कालिन्दीलघुलहरिवृत्तिः प्रभवति ।
इदानीमस्माकं जरठकमठीपृष्ठकठिना
मनोवृत्तिस्तत् किं व्यसनिनि ! मुधैव ग्लपयसि ॥ १३ ॥

यदासीदज्ञानं स्मरतिमिरसंस्कारजनितं
तदा जातं रामामयमिदमशेषं जगदपि ।
इदानीमस्माकं पटुतरविवेकाञ्जनजुषां
समीभूता दृष्टिस्त्रिभुवनमपि ब्रह्म मनुते ॥ १४ ॥

भूमिभुजां राज्ञां धनिनामिति भावः निकारः अवमाननमेव इन्धनः वह्निः तस्य ज्वालाभिः शिखाभिः कराले भीषणे विविधनिकारपूर्णे इति भावः गेहे आत्मानं होतुं प्रक्षेप्तुं नाहम् इच्छामि । युष्माकं शान्तिश्चेत् परमार्थचिन्तायां कालं नेष्यामीति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ १२ ॥

गत इति । हे व्यसनिनि ! अपकारिणि ! नारीसम्बोधनमिदम् । अत्र यस्मिन् प्रणयिनि अनुरागवति मयि कालिन्द्याः यमुनायाः ये लघवः स्वल्पा लहर्यः तरङ्गः तद्वत् वृत्तिः वर्त्तनं यस्य तादृशः चञ्चल इति भावः प्रेम्णा कुटिलः वक्रः कटाक्षः प्रभवति प्रभुत्वं कृतवानित्यर्थः स कालः गतः अतिक्रान्तः । इदानीं अस्माकं मनोवृत्तिः जरठा स्थविरा या कमठी कच्छपी तस्याः पृष्ठमिव कठिना निष्ठुरा जातेति शेषः, तत् तस्मात् किं कथं मुधैव व्यर्थमेव ग्लपयसि ग्लानिं नयसि अस्मानिति शेषः । शिखरिणीवृत्तम् ॥ १२ ॥

यदेति । यदा स्मरः काम एव तिमिरं तमः तस्य संस्कारस्य आवेशेन जनितम् अज्ञानम् आसीत् तदा इदम् अशेषं समस्तमपि जगत् रामामयं नारीमयं जातम् । इदानीं पटुतरः उज्ज्वलतरः यो विवेकः स एवाञ्जनं तज्जुषां तत्सेविनाम् अस्माकं समीभूता समलोष्ट-

गतः कालो यत्र द्विचरणपशूनां चितिभुजां
पुरः स्वस्तीत्युक्त्वा विषयसुखमास्वादितमभूत् ।
इदानीमस्माकं तृणमिव समस्तं कलयता-
मपेक्षा भिक्षायामपि किमपि चेतस्त्रपयति ॥ १५ ॥
पूर्वं तावत् कुवलयदृशां लोललोलैरपाङ्गैः
आकर्षद्भिः किमपि हृदयं पूजिता यौवनश्रीः ।
सम्प्रत्यन्तर्निहितसदसद्भावलब्धप्रबोध-
प्रत्याहारैर्विशदहृदये वर्त्तते कोऽपि भावः ॥ १६ ॥
गङ्गातीरे हिमगिरिशिलाबद्धपद्मासनस्य
ब्रह्मध्यानाभ्यसनविधिना योगनिद्रां गतस्य ।

ध्यानेनेति भावः इष्टिः त्रिभुवनमपि ब्रह्म अनुते वेत्ति । शिखरिणी-वृत्तम् ॥ १४ ॥

गत इति । यत्र यस्मिन् द्विचरणाः द्विपदाः पशवः तेषां क्षितिभुजां राज्ञां धनिनामिति यावत् पुरः अग्रतः स्वस्ति शुभमस्तु इति उक्त्वा विषयसुखं सम्पत्सुखम् आस्वादितम् अभूत् स कालः गतः अतीतः । इदानीं समस्तं जगदिति शेषः तृणमिव कलयतां पश्यताम् अस्माकं भिक्षायामपि अपेक्षा स्पृहा किमपि अनिर्वचनीयं यथा तथा चेतः चित्तं त्रपयति लज्जयति । शिखरिणीवृत्तम् ॥ १५ ॥

पूर्वमिति । पूर्वं तावत् किमपि अनिर्वचनीयं यथा तथा हृदयं आकर्षद्भिः कुवलयदृशां नीलोत्पलाक्षीणां लोललोलैरतिचपलै-रपाङ्गैः यौवनस्य श्रीः पूजिता सन्तर्पिता । सम्प्रति अन्तर्निहितः अन्तर्गतः यः सदसद्भावः तेन लब्धः यः प्रबोधः ज्ञानं तेन प्रत्याहाराः बाह्यविषयेभ्यः इन्द्रियसंयमाः तैः विशदे निर्मले हृदये कोऽपि अनिर्वचनीयः भावः आशयः वर्त्तते । मन्दाक्रान्तावृत्तम् ॥ १६ ॥

गङ्गेति । गङ्गातीरे हिमगिरेः शिलायां बद्धं पद्मासनं येन

किं तैर्भाव्यं मम सुदिवसैर्यत्र ते निर्विशङ्काः
सम्प्राप्स्यन्ते जठरहरिणा गात्रकण्डूविनोदम् ॥ १७ ॥

कदा भिक्षाभक्तैः करकलितगङ्गाम्बुतरलैः
शरीरं मे स्थास्यत्युपरतसमस्तेन्द्रियसुखम् ।
कदा ब्रह्माभ्यासस्थिरतनुतयारण्यविहगाः
पतिष्यन्ति स्थाणुभ्रमहतधियः स्कन्धशिरसि ॥ १८ ॥

रथ्यान्तश्चरतस्तथा धृतजरत्कन्थाञ्चलस्याध्वगैः
सत्रासञ्च सकौतुकञ्च सकृपं दृष्टस्य तैर्नागरैः ।
निर्व्याजीकृतचित्सुधारसमुदा निद्रायमाणस्य मे
निःशङ्कं करटः कदा करपुटीभिक्षां विलुण्ठिष्यति ॥ १९ ॥

तथाभूतस्य ब्रह्मध्यानस्य अभ्यसनविधिना अभ्यासव्यापारेण योगनिद्रां गतस्य मम तैः सुदिवसैः किं भाव्यं यत्र येषु दिवसेषु ते जरठहरिणाः वृद्धमृगाः निर्विशङ्काः निर्भयाः सन्तः गात्रकण्डूनां विनोदम् उपशमजं सुखं सम्प्राप्स्यन्ते गात्रघर्षणादिति भावः । मन्दाक्रान्तावृत्तम् ॥ १७ ॥

कदेति । कदा उपरतं निवृत्तं समस्तम् इन्द्रियसुखं यस्य तादृशं मे मम शरीरं करेण कलितं धृतं यत् गङ्गायाः अम्बु जलं तेन तरलैः चञ्चलैः तन्मिश्रितैरिति भावः भिक्षाभक्तैः भिक्षान्नैः स्थास्यति जीविष्यति । कदा ब्रह्मणः अभ्यासेन चिन्तनानुशीलनेन स्थिरा निश्चला तनुर्यस्य तस्य भावः तत्ता तया हेतुना ममेति शेषः अरण्यविहगाः वन्यपक्षिणः स्थाणुभ्रमेण शुष्कतरुकाण्डबोधेन हृता धीर्येषां तथोक्ताः सन्तः स्कन्धशिरसि स्कन्धाग्रे ममेति शेषः पतिष्यन्ति । शिखरिणीवृत्तम् ॥ १८ ॥

रथ्येति । कदा करटः काकः रथ्यान्तः मार्गमध्ये चरतः भ्रमतः तथा धृतं गृहीतं जरत्कन्थायाः अञ्चलं येन तादृशस्य तैः नागरैः नगरवासिभिः अध्वगैः पथिकैः सत्रासञ्च सभयञ्च सकौतुकञ्च सकृपञ्च

एणाक्षीस्पृहयालुता न कथमप्यास्ते विवेकोदया-
न्नित्यं प्रच्युतिशङ्कया क्षणमपि स्वर्गे न मोदामहे।
अप्यन्येषु विनाशिवस्तुविषयाभोगेषु तृष्णा न मे
स्वर्णद्याः पुलिने परं हरिपदध्यानं मनो वाञ्छति॥ २०

अयि बोधाम्बुधौ भावः स्वच्छोऽयं विश्वबुद्बुदः
विलीन उदितो वेत्ति विकल्पपटलं मनः॥ २१॥

अहङ्कार! क्वापि व्रज वृजिन! हे मा त्वमिह भूः
अभूमिर्दर्पाणामहमपसर त्वं पिशुन! हे।

दृष्टस्य निर्व्याजीकृता अकपटत्यर्थः या चित्सुधा ज्ञानामृतं तस्याः रसेन आस्वादेन या मुत् तया निद्रायमाणस्य बाह्यज्ञानरहितस्येति भावः मे मम करपुटीभिक्षां करपुटवर्त्ति भिक्षान्नं निःशङ्कं यथा तथा विलुण्ठिष्यति हरिष्यति? शार्दूलविक्रीडितं वृत्तम्॥ १९॥

एणाक्षीति। विवेकोदयात् ज्ञानोदयात् कथमपि एणाक्षीषु हरिणाक्षीषु स्पृहयालुता अभिलाषः न आस्ते न तिष्ठति। प्रच्युति-शङ्कया भ्रंशभयेन स्वर्गेऽपि नित्यं सततं क्षणमपि न मोदामहे न हृष्यामः स्वर्गलाभेऽपि नास्माकं स्पृहास्तीति भावः। अन्येष्वपि विनाशिवस्तून्येव विषयाः तेषाम् आभोगेषु विलासेषु मे मम न तृष्णा नाकाङ्क्षा अस्तीति शेषः, परं केवलं स्वर्णद्याः पुलिने मनः हरिपदध्यानं वाञ्छति अभिलषति शार्दूलविक्रीडितं वृत्तम्॥२०॥

अयीति। अयि भोः मनः अहं बोधाम्बुधौ ज्ञानार्णवे विश्वमेव बुद्बुदं जलस्फोटः यस्य तादृशः अयं स्वच्छो निर्मलो भावः विलीनः विलयं गतः उदितः वा इत्थं विकल्पपटलं संशयनिचयं वेत्ति जानाति बुध्यते इति यावत्। अनुष्टुब्वृत्तम्॥ २१॥

अहङ्कार इति। हे अहङ्कार! क्वापि कुत्रापि व्रज गच्छ, वृजिन! पाप! त्वम् इह मा भूः इति भावः मा [illegible] इति यावत्,

अरे क्रोध ! स्थानान्तरमनुसरानन्यमनसां
त्रिलोकीनाथो नो हृदि वसतु देवो हरिरसौ ॥ २२ ॥

मातर्माये ! भगिनि कुमते ! हे पितर्मोहजाल !
व्यावर्तध्वं भवतु भवतामेष दीर्घो वियोगः ।
सद्यो लक्ष्मीरमणचरणभ्रष्टगङ्गाप्रवाह-
व्यामिश्रायां दृषदि परमब्रह्मदृष्टिर्भवामि ॥ २३ ॥

आदित्यस्य गतागतैरहरहः संक्षीयते जीवितं
व्यापारैर्बहुकार्य्यकारणशतैः कालोऽपि न ज्ञायते ।
दृष्ट्वा जन्मजरावियोगमरणं त्रासश्च नोत्पद्यते
पीत्वा मोहमयीं प्रमोदमदिरामुन्मत्तभूतं जगत् ॥ २४ ॥

अहं दर्पाणां दम्भानाम् अभूमिः अभाजनं, हे पिशुन ! खलभाव ! त्वम् अपसर अपगच्छ । अरे क्रोध ! स्थानान्तरम् अनुसर गच्छ । त्रिलोकीनाथः असौ देवो हरिः अनन्यमनसां नास्ति अन्यो मनसि येषां तादृशानां नो अस्माकं हृदि वसतु । शिखरिणीवृत्तम् ॥ २२ ॥

मातरिति । हे मातः माये ! हे भगिनि कुमते ! हे पितः मोहजाल ! व्यावर्त्तध्वम् अपगच्छत यूयमिति शेषः, एषः भवतां दीर्घः महान् वियोगः विच्छेदः भवत्विति शेषः । सद्यः साम्प्रतं लक्ष्मीरमणस्य विष्णोः चरणात् भ्रष्टा या गङ्गा तस्याः प्रवाहेण स्रोतसा व्यामिश्रायां युक्तायां दृषदि शिलायाम् उपविश्येति शेषः परमब्रह्मणि दृष्टिर्यस्य तथाभूतः भवामि । मन्दाक्रान्तावृत्तम् ॥ २३ ॥

आदित्येति । आदित्यस्य सूर्यस्य गतागतैः उदयास्तमयैः अहरहः प्रतिदिनं जीवितम् आयुः संक्षीयते संक्षयं गच्छति, बहूनि कार्य्याणि कारणानां शतानि च येषु तादृशैः व्यापारैः कालोऽपि गच्छतीति शेषः न ज्ञायते नावबुध्यते । जन्मजरावियोगमरणं दृष्ट्वा त्रासश्च भयञ्च न उत्पद्यते लोकानामिति शेषः । अतः मोहमयीं

मातर्मेदिनि! तात मारुत! सखे ज्योतिः! सुबन्धो जल!
भ्रातर्व्योम! निबद्ध एष भवतामस्तु प्रणामाञ्जलिः।
युष्मत्सङ्गवशोपजातसुकृतोद्रेकस्फुरन्निर्मल-
ज्ञानापास्तसमस्तमोहमहिमा लीये परे ब्रह्मणि ॥ २५ ॥

आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला
रागग्राहवती वितर्कविहगा धैर्य्यद्रुमध्वंसिनी।
मोहावर्त्तसुदुस्तरा प्रकटितप्रोत्तुङ्गचिन्तातटी
तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः ॥२६॥

प्रबोधमदिरां विषयसम्भोगजानन्दसुधां पीत्वा जगत् उन्मत्तभूतम् इति मन्ये इति शेषः। शार्दूलविक्रीडितं वृत्तम् ॥ २४ ॥

मातरिति। हे मातः मेदिनि! तात मारुत! हे सखे ज्योतिः! हे सुबन्धो जल! हे भ्रातः व्योम! आकाश! भवतां समीपे इति शेषः एष प्रणामाञ्जलिः निबद्धः अस्तु कृताञ्जलिर्भवतः प्रणमामीत्यर्थः। युष्माकं सङ्गवशेन संसर्गहेतुना उपजातम् उत्पन्नं यत् सुकृतं तस्य उद्रेकेण उद्भवेन स्फुरत् प्रसरत् निर्मलं यत् ज्ञानं तेन अपास्तः निराकृतः समस्तः मोहस्य महिमा यस्य तादृशः अहं परे ब्रह्मणि परमात्मनि लीये लयं गच्छामि विलीनो भवामीत्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ २५ ॥

आशेति। मनोरथः अभिलाषः जलं यस्याः तथोक्ता, तृष्णाः वासना एव तरङ्गाः तैः आकुला पर्य्याकुलेत्यर्थः, रागः प्रेम एव ग्राहः जलजन्तुभेदः तद्वती, वितर्काः वादाः विहगाः यस्यां तादृशी, धैर्य्यमेव द्रुमः वृक्षः तस्य ध्वंसिनी उत्पाटिनी मोह एव आवर्त्तः भ्रमि-विशेषः तेन सुदुस्तरा तर्त्तुं अशक्या, प्रकटिता प्रकटा प्रोत्तुङ्गा अत्युन्नता चिन्ता एव तटी यस्याः तथाविधा, आशा नाम नदी अस्तीति शेषः। विशुद्धमनसः योगीश्वराः योगिप्रवराः तस्याः नद्याः

इतो न किञ्चित् परतो न किञ्चित्
यतो यतो यामि ततो न किञ्चित् ।
विचार्य्य पश्यामि जगन्न किञ्चित्
स्वात्मावबोधादधिकं न किञ्चित् ॥ २७ ॥

संसारमृगतृष्णायां त्वं मनो! धावसि किं मुधा ।
अनाविलमिदं ब्रह्मसरः किं नावगाहसे ॥ २८ ॥

इति शान्तिशतके ब्रह्मप्राप्तिर्नाम
चतुर्थः परिच्छेदः ।

---

पारगताः उत्तीर्णा इत्यर्थः सन्तः नन्दन्ति आनन्देन वर्त्तन्ते । रूपकमलङ्कारः । शार्दूलविक्रीड़ितं वृत्तम् ॥ २६ ॥

इत इति । इतः अस्मिन् लोके न किञ्चित् अस्तीति शेषः परतः परलोके न किञ्चित् अस्तीति शेषः यतः यतः यत्र यत्र यामि गच्छामि ततः तत्र न किञ्चित् प्राप्यते इति शेषः, विचार्य्य विविच्य जगत् न किञ्चित् न किमपि पश्यामि इति शेषः स्वात्मावबोधात् स्वात्मज्ञानात् अधिकम् अतिरिक्तं न किञ्चित् सारमस्तीति शेषः पश्यामि अवधारयामीति यावत् । उपजातिवृत्तम् ॥ २७ ॥

संसारेति । हे मनः! त्वं मुधा वृथा संसार एव मृगतृष्णा मरीचिका तां किं कथं धावसि गच्छसि ? इदम् अनाविलम् अकलुषं निर्म्मलमिति यावत् ब्रह्मसरः परमात्मरूपं सरोवरं किं कथं न अवगाहसे न प्रविशसि ? रूपकमलङ्कारः । अनुष्टुब्वृत्तम् ॥ २८ ॥

इति बि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता शान्तिशतकव्याख्या समाप्ता ।

---

# वृन्दावन शतकम् ।



नमस्तस्मै कस्मैचिदपि पुरुषायाद्भुत महा
महिम्ने विभ्राजत्कनकरुचिधाम्ने स्वकृपया ।
असङ्कोचेनैव श्वपचनिखिलेभ्यः स्वयमहो
ददौ यस्तद्भक्तिं विमलतरनानारसमयीम् ॥ १ ॥
यस्मिन्न प्रविशेन्मनोऽपि महतां का तत्त्ववार्ता पुनः
शास्त्राणां ज्ञपितञ्च यद्भगवता भक्त्यैव भक्तोद्धवे ।
तद्वृन्दावनमुन्मदेन रसिकवृन्देन केनाप्यहो
नित्यक्रीडतया गृहीतमिह के विद्युर्न गौरप्रियाः ॥ २ ॥

नम इति । यः स्वयं श्वपचनिखिलेभ्यः चाण्डालसमूहेभ्यः विमलतरनानारसमयीं तद्भक्तिं तस्मिन् भक्तिः तां यद्वा सा पवित्रा भक्तिः ताम् असङ्कोचेनैव सङ्कोचं विना कथं म्लेच्छेभ्यः ईदृशी भक्तिर्दीयते इति कुण्ठितभावं विनेत्यर्थः ददौ अहो आश्चर्यं तस्मै अद्भुतः महान् महिमा यस्य तादृशाय स्वकृपया स्वानुकम्पया विभ्राजत् विराजत् कनकरुचि सुवर्णोज्ज्वलं धाम तेजः यस्य तथाभूताय गौराङ्गायेति यावत् कस्मैचिदपि पुरुषाय नमः । शिखरिणीवृत्तं, रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणीति तल्लक्षणात् ॥ १ ॥

यस्मिन्निति । यस्मिन् महतां महापुरुषाणां मनोऽपि न प्रविशेत् मनसोऽप्यगम्यं यदिति भावः, शास्त्राणां तत्त्वस्य वार्त्ता पुनः का ? नैव शास्त्रतत्त्वं यत् स्पृशतीति यावत् ततश्च वचसोऽप्यगम्यं यदिति भावः, यच्च भगवता कृष्णेन भक्त्या भावविशेषेणैव भक्तोद्धवे भक्तिमति उद्धवे ज्ञापितं केनापि उन्मदेन उद्दामप्रेम्णा रसिकवृन्देन

गुणैः सर्वैर्हीनोऽप्यहमखिलजीवाधमतमो-
ऽप्यशेषैः दोषाग्रैरपि च वलितो दुर्मतिरपि ।
प्रसादात्तस्यैवाविदमहह राधां व्रजपतेः
कुमारं श्रीवृन्दावनमपि स गौरो मम गतिः ॥ ३ ॥

श्रीवृन्दावनकेलिरङ्गसहजं सौन्दर्य्यशोभावयो-
वैदग्ध्यादिचमत्कृतेः परतरं विश्रान्तिधामाद्भुतम् ।
तन्मे मोहनदिव्यनागरवरद्वन्द्वं मिथो जीवनं
गौरश्यामलमुज्ज्वलोन्मदरसाविष्टं हृदि स्फूर्जतु ॥ ४ ॥

रसिकमिथुनेन राधाकृष्णाभ्यामिति भावः नित्यक्रीडतया नित्य-विहारस्थानतया गृहीतम् अङ्गीकृतं तत् वृन्दावनम् इह संसारे के गौरप्रियाः चैतन्यभक्ताः न विद्युः न जानीयुः ? सर्वेऽपि विद्युरित्यर्थः । शार्दूलविक्रीडितं वृत्तं, सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीडितं वृत्तमिति तल्लक्षणात् ॥ २ ॥

गुणैरिति । अहं सर्वैः गुणैर्हीनोऽपि अखिलेषु समस्तेषु जीवेषु मध्ये अधमतमोऽपि अशेषैः समस्तैः दोषाग्रैः महादोषैः वलितः युक्तोऽपि दुर्मतिरपि यस्यैव प्रसादात् आदौ प्रथमं राधां व्रजपतेः कुमारं नन्दनन्दनं श्रीवृन्दावनमपि अविदम् अज्ञासिषं स गौरः चैतन्यदेवः मम गतिः अस्त्विति शेषः । शिखरिणीवृत्तम् ॥ ३ ॥

श्रीवृन्दावनेति । श्रीवृन्दावने केलिरङ्गः क्रीडाविलासः सहजः स्वभावो यस्य तथोक्तं, सौन्दर्य्यं शोभा श्रीः वयः यौवनं तेषां वैदग्ध्यादिचमत्कृतेः नैपुण्यादिचमत्कारस्य परतरम् उत्कृष्टतरम् अद्भुत विचित्रं विश्रान्तिधाम विश्रामस्थानं मिथः परस्परम् अन्योन्याधीनमिति यावत् जीवनं यस्य तत् उज्ज्वलेन उन्मदेन उत्कटेन रसेन प्रेम्णा आविष्टं युक्तं पूर्णमिति यावत् गौरश्यामलं गौरकृष्णं तत् मोहनं जगतामिति भावः दिव्यं नागरवरद्वन्द्वं रसिकश्रेष्ठ

इह भ्रामं भ्रामं जगति न हि गन्धोऽपि कलितो
यदीयस्तत्रैवाखिलनिगमदुर्लक्ष्यसरणौ ।
अपारे श्रीवृन्दावनमहिमपीयूषजलधौ
महाश्चर्य्योन्मीने मधुरिमणि चित्तं लगतु मे ॥ ५ ॥

जयति जयतो वृन्दारण्यान्यूनसिन्धोः
अनुपममिव सारं शारदाकोट्यकथ्यम् ।
खगमृगतरुवल्लीकुञ्जवापीतडाग-
स्थलगिरिह्रदिनीनामद्भुतैः सौभगाद्यैः ॥ ६ ॥

युगलं राधाकृष्णाविति भावः मे मम हृदि स्फूर्जतु स्फुरतु ।
शार्दूलविक्रीडितं वृत्तम् ॥ ४ ॥

इहेति । इह जगति भ्रामं भ्रामं भ्रमित्वा भ्रमित्वा पुनः पुनर्भ्रमणेनापीत्यर्थः यदीयः यत्सम्बन्धी गन्धोऽपि न कलितः न आघ्रातः, अखिलनिगमैः सर्ववेदैः दुर्लक्ष्या दुर्गमा सरणिः पद्धतिः यस्य तादृश श्रुतिरपि प्राप्तुमशक्ये इति यावत् अपारे अनन्ते इत्यर्थः महान्ति आश्चर्य्याणि अद्भुतव्यापारा एव उद्धताः मीनाः यस्मात् तथाभूते श्रीवृन्दावनमहिमा एव पीयूषजलधिः अमृतसागरः यस्मिन् तादृशे मधुरिमणि माधुर्य्यात्मके वस्तुनीति शेषः मे मम चित्तं लगतु मग्नं भवत्वित्यर्थः । शिखरिणीवृत्तम् ॥ ५ ॥

जयतीति । जयतः सर्वोत्कर्षेण वर्त्तमानस्य वृन्दारण्यमेव अन्यूनसिन्धुः महासमुद्रः तस्य खगाः पक्षिणः मृगाः पशवः तरवः वृक्षाः वल्लयः लताः कुञ्जाः लतादिपिहितस्थानानि वाप्यः दीर्घिकाः तडागाः सरांसि स्थलानि भूभागाः गिरयः पर्वताः ह्रदिन्यः सरितः तासाम् अद्भुतैः विचित्रैः सौभगाद्यैः सौन्दर्य्यादिभिः अनुपममिव निरुपममिव शारदाकोटीनां वाग्देवीनिचयानामपीति यावत्

वृन्दारण्ये चर चरण ! दृक् ! पश्य वृन्दावनस्थान्
जिह्वे ! वृन्दावनगुणगणान् कीर्त्तय श्रोत्र ! दृष्टान् ।
वृन्दाटव्या भज परिमलं घ्राण ! गात्र ! त्वमस्मिन्
वृन्दारण्ये लुठ पुलकितं कृष्णकेलिस्थलीषु ॥ ७

महोज्ज्वलरसोन्मदप्रणयसिन्धुनिःस्यन्दिनी
महामधुरराधिकारमणखेलनानन्दिनी ।
रसेन समधिष्ठिता भुवनवन्द्यया वृन्दया
चकास्तु हृदि मे हरेः परमधाम वृन्दाटवी ॥ ८ ॥

अकथ्यम् अनिर्वचनीयं सारं सारभूतं वस्तु राधाकृष्णरूपमिति भावः जयति सर्वोत्कर्षेण वर्त्तते ॥ ६ ॥

वृन्दारण्ये इति । चरण ! वृन्दारण्ये चर पर्य्यट, हे दृक् नयन ! वृन्दावनस्थान् पश्य अवलोकय, हे जिह्वे ! वृन्दावनस्य गुणगणान् कीर्त्तय, हे श्रोत्र ! कर्ण ! दृष्टान् श्रुतानिति भावः वृन्दावनस्य गुणानित्यनेनान्वयः । धारयेति शेषः । हे घ्राण ! वृन्दाटव्याः वृन्दावनस्य परिमलं सौरभं भज आजिघ्र, हे गात्र ! त्वम् अस्मिन् वृन्दारण्ये कृष्णस्य केलिस्थलीषु विहारस्थानेषु पुलकितं रोमाञ्चितं सत् लुठ लुण्ठनं कुरु । मन्दाक्रान्तावृत्तं, मन्दाक्रान्ताम्बुधिरसनगैर्म्भनौ तौ गयुग्ममिति तल्लक्षणात् ॥ ७ ॥

महेति । महान् यः उज्ज्वलरसः शृङ्गाररसः, शृङ्गारः शुचिरुज्ज्वल इत्यमरः । तेन उन्मदः उत्कटः यः प्रणयसिन्धुः प्रेमसागरः तस्य निःस्यन्दिनी निःस्राववती महामधुरया राधिकारमणस्य कृष्णस्य खेलनया विहारेण आनन्दिनी आनन्दपूर्णेत्यर्थः रसेन रागेण भुवनवन्द्यया जगत्पूज्यया वृन्दया वृन्दावनाधिष्ठात्र्या देव्या समधिष्ठिता समाश्रिता हरेः कृष्णस्य परमधाम परमं निकेतनं वृन्दाटवी मे मम हृदि चकास्तु स्फुरतु । पृथ्वीवृत्तमिदम् ॥ ८ ॥

जन्मनि जन्मनि वृन्दावनभुवि वृन्दारकेन्द्रवन्द्यायाम् ।
अपि तृणगुल्मकभावे भवतु ममाशासमुल्लासः ॥ ९ ॥

हरिपदपङ्कजसंवाहेन रसमनुभूय पूर्णोऽपि ।
यत्रोद्धव आशास्ते तृणतां तन्नौमि राधिकाविपिनम् ॥१०॥

राधावल्लभपादपल्लवजुषां सद्धर्मनीतायुषां
नित्यं सेवितवैष्णवाङ्घ्रिरजसां वैराग्यजीवस्पृहाम् ।
हन्तैकान्तरसप्रविष्टमनसामप्यस्ति यद् दूरतः
तद्राधाकरुणावलोकमचिराद्विन्दन्तु वृन्दावने ॥ ११ ॥

जन्मनीति । जन्मनि जन्मनि प्रतिजन्म वृन्दारकेन्द्रैः देवेन्द्रैः वन्द्यायां पूज्यायां वृन्दावनभुवि तृणगुल्मकभावेऽपि मम आशायाः समुल्लासः सम्यक् तृप्तिः भवतु तृणगुल्मभावोऽपि मम श्लाघ्य इति भावः । आर्य्यावृत्तं, यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि । अष्टादश द्वितीये पञ्चदश चतुर्थके सार्य्येति तल्लक्षणात् ॥ ९ ॥

हरीति । हरेः कृष्णस्य पदपङ्कजयोः पादपद्मयोः संवाहेन सेवनेन रसम् अनुभूय आस्वाद्य पूर्णोऽपि परितृप्तोऽपि उद्धवः यत्र तृणताम् आशास्ते आकाङ्क्षति, तत् राधिकाविपिनं वृन्दावनं नौमि स्तौमि । आर्य्यावृत्तम् ॥ १० ॥

राधेति । राधावल्लभस्य पादपल्लवजुषां चरणपल्लवसेविनां, सद्धर्मैः नीतं गमितम् आयुर्जीवनकालो येषां तथोक्तानां, नित्यं सततं सेवितं वैष्णवानां विष्णुभक्तानाम् अङ्घ्रिरजः पदरजो यैः तथाभूतानाम् एकान्तं रसे प्रेमणि प्रविष्टं मनो येषां तथाभूतानां वैराग्येण वीतरागत्वेन जीवे जीवने स्पृहयन्तीति तथोक्तानां अपि यत् दूरतः तिष्ठतीति शेषः तादृशानामपि दुरधिगममिति भावः तस्मिन् वृन्दावने तत् राधायाः करुणावलोकं कृपादृष्टिम् अचिरात् विन्दन्तु लभन्ताम् पानमानीति शेषः । शार्दूलविक्रीडितं वृत्तम् ॥ ११ ॥

राधानन्दकिशोरौ निरवधिरससागरे निमग्नौ
निजकेलिधाम वृन्दावनमुदीक्ष्यैव सौख्यमाप्नुतः ॥ १२ ॥
उद्दामप्रमदोज्ज्वलैकरसया भक्त्या विधूतीकृते
व्यक्तं कस्यचिदेव चित्तभवने तत्तद्द्विषां भोगवत् ।
यस्मिन् दिव्यविचित्रकेलि मिथुनं तच्छ्यामगौरं विधु-
ज्योत्स्नावत् परिचाययेत् तदिह किं विन्देय वृन्दावनम् ॥१३॥
विशुद्धाद्वैतैकप्रणयरसपीयूषजलधेः
घनीभूतद्वीपे समुदयति वृन्दावनमहो ।
मिथःप्रेमोद्घूर्णद्रसिकमिथुनक्रीड़मनिशं
तदेवाध्यासीनं प्रविशति पदे क्वापि मधुरे ॥ १४ ॥

राधेति । निरवधिरससागरे असीमप्रेमपयोनिधौ निमग्नौ राधानन्दकिशोरौ राधाकृष्णौ निजकेलिधाम वृन्दावनम् उदीक्ष्यैव दृष्ट्वैव सौख्यम् आप्नुतः लभेताम् ॥ १२ ॥

उद्दामेति । उद्दामेन उत्कटेन प्रमदेन आनन्देन उज्ज्वलः एकः मुख्यः अद्वितीय इति यावत् रसः स्वादो यत्र तथाभूतया भक्त्या अनुरागविशेषेण विधूतीकृते विशेषेण धौते विशुद्धे इति यावत् कस्य-चिदेव नतु सर्वस्येति भावः चित्तभवने तत्तद्द्विषाम् अभक्तानामिति भावः भोगवत् विषयभोगानुराग इवेति भावः व्यक्तं प्रकटं दिव्यः विचित्रः अद्भुतः केलिः यस्य तथाभूतं विधुज्योत्स्नावत् चन्द्रचन्द्रिकावत् मिलितमिति भावः तत् श्यामगौरं मिथुनं राधाकृष्णयुगलमित्यर्थः यस्मिन् परिचाययेत् परिचितं करोमि, इह संसारे तत् वृन्दावनं किं विन्देय लभेय ? तादृशवृन्दावनलाभोऽतीवदुष्करसाध्य इति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ १३ ॥

विशुद्धेति । विशुद्धः पवित्रः अद्वैतः अद्वितीयः एकः मुख्यः प्रणयरसः प्रेमरस एव पीयूषम् अमृतं तस्य जलधिः तस्य घनीभूते

नाहं वेद्मि कथं नु माधवपदाम्भोजद्वयी ध्यायते
का वा श्रीशुकनारदाद्यकलिते मार्गेऽस्तु मे योग्यता ।
तस्माद्भद्रमभद्रमेव यदि नामास्तां ममैकं परं
राधाकेलिनिकुञ्जमञ्जुलतरं वृन्दावनं जीवनम् ॥ १५ ॥
यत्सीमानमपि स्पृशन्न निगमो दूरात् परं लक्षतः
किञ्चिद्गूढतया यदेव परमानन्दोत्सवैकावधिः ।
यन्माधुर्य्यकणोऽप्यवेदि न शिवस्वायम्भुवाद्यैरहं
तद् वृन्दावननाम धाम विशदं विन्दामि राधापतेः ॥१६॥

द्वीपे वृन्दावनं समुदयति सम्यक् राजते अहो आश्चर्यं मिथः परस्परं प्रेम्णा उद्घूर्णन्तौ प्रसरन्तौ रसिकमिथुनस्य नागरयुगलस्य राधाकृष्णस्येति भावः क्रीडा यस्मिन् तथोक्तं तदेव वृन्दावनं क्वापि कस्मिंश्चिदपि मधुरे मनोहरे पदे स्थाने मनोरूपे इति भावः अध्यासीनम् अधिष्ठितं सत् प्रविशति अन्तर्विकाशयतीति यावत् । शिखरिणीवृत्तम् ॥ १४ ॥

नाहमिति । नु भोः कथं केन प्रकारेण माधवस्य कृष्णस्य पदाम्भोजद्वयी पादपद्मयुगलं ध्यायते चिन्त्यते तदहं न वेद्मि न जानामि । ननु शुकनारदादीनाम् उपदेशपद्धतिरस्ति तद्दृष्ट्या ध्यानविधिः शिक्ष्यतामित्यत आह का वेति, श्रीशुकनारदाद्यैः कलिते निरूपिते मार्गे पथि मे मम का वा योग्यता अस्तु ? नैव कापि तद्वबोधे सामर्थ्यमिति यावत् । तस्मात् भद्रम् अभद्रं वा यदि नाम आस्तां भवतु परं किन्तु मम राधायाः केलिनिकुञ्जेन क्रीडाकुञ्जेन मञ्जुलतरम् अतिमनोहरं वृन्दावनम् एकम् अद्वितीयं जीवनं जीवनोपायः । शार्दूलविक्रीडितं वृत्तम् ॥ १५ ॥

यदिति । निगमः वेदः यस्य सीमानमपि न स्पृशन् लक्षतः दूरात् अतिदूरादित्यर्थः परं तिष्ठतीति शेषः श्रुतिरपि यन्महिमानं

कदानु वृन्दावनकुञ्जमण्डले
भ्रमं भ्रमं हैमहरिन्मणिप्रभम् ।
संस्मृत्य संस्मृत्य तदद्भुतप्रियं-
द्वयं द्वयं विस्मृतिमेतु मेऽखिलम् ॥ १७ ॥
छिद्येत खण्डश इदं यदि मे शरीरम्
घोरा विपद्विततयो यदि वा पतन्ति ।
हा हन्त हन्त न तथापि ममेह भूयात्
वृन्दावनादितरतीर्थपदे पिपासा ॥ १८ ॥

न वेत्तीति भावः, यदेव किञ्चित् गूढतया अतिरहस्यत्वेन परमस्य महतः आनन्दोत्सवस्य एकः अद्वितीयः अवधिः सीमा, शिव-स्वायम्भुवाद्यैः हरविरिञ्चिप्रभृतिभिरपि यस्य माधुर्यकणोऽपि न अवेदि न ज्ञातः, अहं विशदं निर्मलं तत् वृन्दावननाम वृन्दा-वनाख्यं राधापतेः कृष्णस्य धाम निलयं विन्दामि लभे । शार्दूल-विक्रीडितं वृत्तम् ॥ १६ ॥

कदेति । नु भोः कदा वृन्दावनस्य कुञ्जमण्डपे निकुञ्जगृहे भ्रमं भ्रमं भ्रान्त्वा भ्रान्त्वा हैमहरिन्मणिप्रभं काञ्चननीलमणिप्रभं तत् अद्भुतम् आश्चर्यं प्रियद्वयं कान्तयुगलं राधाकृष्णाविति भावः संस्मृत्य संस्मृत्य पुनः स्मृत्वेत्यर्थः मे मम अखिलं समग्रं द्वयं द्वैतज्ञानमित्यर्थः विस्मृतिम् एतु गच्छतु अपगच्छत्विति यावत् । वंशस्थविलं वृत्तं, वदन्ति वंशस्थविलं जतौ जराविति तल्लक्षणात् ॥ १७ ॥

छिद्येतेति । यदि इदं मे मम शरीरं खण्डशः खण्डं खण्डं छिद्येत, यदि वा घोरा भीषणा विपदां विततयः विस्ताराः पतन्ति, तथापि हा हन्त हन्त अतिखेदसूचकमिदं इह अस्मिन् संसारमध्ये वृन्दावनात् इतरतीर्थपदे भिन्नपुण्यक्षेत्रे मम पिपासा अभिलाषा न भूयात् न भवतु । वसन्ततिलकं वृत्तम् ॥ १८ ॥

स्वयं पतितपत्रकाण्यमृतवत् क्षुधा भक्षयन्
कदा मिहिरनन्दिनीशुचिपयोऽञ्जलीभिः पिबन्।
कदा मधुरराधिकारमणरासकेलिस्थलीं
विलोक्य रससेवधिमधिवसामि वृन्दावनम्॥ १९॥
भूमिर्यत्र सुकोमला बहुविधप्रद्योतिरत्नच्छटा
नानाचित्रमनोहरा खगमृगाद्याश्चर्यरागान्विता।
वल्लीभूरुहजातयोऽद्भुततमा यत्र प्रवालादिभिः
तन्मे नन्दकिशोरकेलिभवनं वृन्दावनं जीवनम्॥ २०॥

स्वयमिति। कदा क्षुधा स्वयं पतितपत्रकाणि विगलितानि पर्णानि अमृतवत् सुधावत् भक्षयन् कदा मिहिरनन्दिन्याः यमुनायाः शुचि विशुद्धं पयः जलम् अञ्जलीभिः पिबन् मधुरं मनोहरं राधिकारमणस्य कृष्णस्य रासकेलिस्थलीं रासक्रीड़ाक्षेत्रं विलोक्य दृष्ट्वा रससेवधिं रसनिधिं वृन्दावनम् अधिवसामि? पृथ्वीवृत्तं, द्वितीयमपि कुण्डले गुरुघड्टमद्वादशवलद्ग्रमथ प्रिये गुरु गभीरनाभिहृदे। सपञ्चदशमान्तिमं तदनु यत्र कान्ते यतिर्गिरीन्द्रफलभृत्कुलैर्भवति सुभ्रु पृथ्वीति सेति तल्लक्षणात्॥ १९॥

भूमिरिति। यत्र भूमिः सुकोमला मृदुला अकठिनेत्यर्थः बहुविधा प्रद्योतिनी समुज्ज्वला रत्नच्छटा रत्नसमूहो यस्यां तादृशी नानाचित्रैः विविधविचित्रैः पदार्थैः मनोहरा खगानां पक्षिणां मृगाणाञ्च आश्चर्य्येण रागेण अनुरागेण अन्विता युक्ता पक्षिमृगप्रियेत्यर्थः तथा यत्र वल्ल्यः लता एव भूरुहजातयः वृक्षजातयः प्रवालादिभिः पल्लवादिभिः आदिशब्देन पुष्पफलानि गृह्यन्ते। अद्भुततमाः अत्याश्चर्य्याः, तत् नन्दकिशोरस्य कृष्णस्य केलिभवनं क्रीड़ाक्षेत्रं वृन्दावनं मे मम जीवनं गतिरिति यावत् अस्त्विति शेषः। शार्दूलविक्रीड़ितं वृत्तम्॥ २०॥

साक्षादिवास्ते पुरुषोत्तमाङ्घ्रिसेवारसादप्यधिको रसौघः ।
स्यन्देत वृन्दाविपिनेऽप्यदृष्टो राधाप्रियो यो भुवनस्य साक्षी२१

जागर्त्ति दुन्दुभिरवः परमोऽत्र राधा
वृन्दावनं वनमतिप्रकटं पुराणे ।
तस्याविशेषमसमेद्धमहानुराग-
मूर्त्तेस्तदङ्गनमिहैत्य हरिं क्व पश्ये ॥ २२ ॥

मिलन्तु चिन्तामणिकोटिकोटयः
स्वयं वहिर्दृष्टिमुपैतु वा हरिः ।
तथापि वृन्दावनधूलिधूसरं
न देहमन्यत्र कदापि यातु मे ॥ २३ ॥

साक्षादिति । वृन्दाविपिने पुरुषोत्तमस्य कृष्णस्य अङ्घ्रिसेवारसात् चरणसेवनानुरागात् अपि अधिकः रसौघः रसराशिः साक्षादिव मूर्त्तिमानिव आस्ते तिष्ठति, यः भुवनस्य साक्षी राधाप्रियः कृष्णः सः अदृष्टोऽपि स्यन्देत येनेति शेषः हृदये स्फुरेदिति भावः । इन्द्रवज्रा-वृत्तं, स्यादिन्द्रवज्रा यदि तौ जगौ ग इति तल्लक्षणात् ॥ २१ ॥

जागर्त्तीति । अत्र परमः महान् दुन्दुभिरवः जागर्त्ति सततं कर्णकुहरे प्रविशतीति भावः पुराणे राधायाः वृन्दावनं नाम वनम् अतिप्रकटम् अतिप्रसिद्धम् । इह संसारे असमः अतुल्यः इद्धः दीप्तः महान् अनुराग एव मूर्त्तिर्यस्य तस्य वृन्दावनस्य अविशेषं सर्वत्र सम-मिति भावः तत् अङ्गनं चत्वरम् एत्य प्राप्य क्व कुत्र कदा हरिं कृष्णं पश्ये अवलोकयामि । अत्र पश्ये इत्यात्मनेपदं कवेः प्रमाद-विजृम्भितमिति बोध्यम् । वसन्ततिलकं वृत्तम् ॥ २२ ॥

मिलन्त्विति । चिन्तामणीनां कोटिकोटयः बहुकोटय इति यावत् मिलन्तु लब्धा भवन्तु, स्वयं वा हरिः दृष्टिम् उपैतु गच्छतु दृष्टो भवतु

कृपयतु मयि वृन्दारण्यराज्ञी मनाग-
प्यतिबहुलकृपोरुस्नेहभावादुदिष्णु।
फलतु तदनुकम्पाकल्पवल्लीफलं तत्
प्रभवतु वसतिर्मे तत्प्रियारामसीम्नि ॥ २४ ॥

तेनाकारि समस्त एव भगवद्धर्मोऽपि तेनाद्भुतः
सर्वस्मात् पुरुषार्थतोऽपि परमः कश्चित् करस्थीकृतः।
तेनाधायि समस्तमूर्द्धनि पदं ब्रह्मादयस्तं नम-
न्त्यादेहान्तमधारि येन वसतौ वृन्दावने निश्चयः ॥२५॥

वेत्यर्थः। तथापि मे मम वृन्दावनस्य धूलिभिः धूसरं देहं कदापि अन्यत्र न यातु न गच्छतु। वंशस्थविलं वृत्तम् ॥ २३ ॥

कृपयत्विति। वृन्दारण्यराज्ञी मयि मनागपि स्वल्पमपि कृपयतु अनुकम्पयतु, अतिबहुलया अतिप्रभूतया कृपया यः उरुः महान् स्नेहः तद्भावात् उदिष्णु उदितमित्यर्थः तस्याः अनुकम्पाकल्पवल्ली-फलं फलतु तत् तेन तदनुकम्पाकल्पतरुफलेन मे मम तस्याः वृन्दा-रण्यराज्ञेः प्रियः यः आरामः उपवनम्, आरामः स्यादुपवनमित्य-मरः। तस्य सीम्नि सीमायां मे मम वसतिः प्रभवतु प्रकर्षेण अस्तु। मालिनी वृत्तं, ननमयययुतेयं मालिनीभोगिलोकैरिति तल्लक्षणात् ॥ २४ ॥

तेनेति। येन आदेहान्तं देहावसानपर्य्यन्तं वृन्दावने वसतौ निश्चयः अधारि धृतः कृत इति यावत्, तेन समस्त एव भगवद्धर्मः वैष्णवधर्मः अकारि कृतः, तेन सर्वस्मात् पुरुषार्थतः पुरुषार्थात् धर्मार्थकाममोक्षलक्षणादपि परमः उत्कृष्टः अद्भुतः कश्चित् धर्म इति शेषः करस्थीकृतः करतलवर्त्तीकृतः, तेन समस्तानां जगतः मूर्द्धनि शिरसि पदम् अधायि दत्तं (किं बहुना) ब्रह्मादयः देवाः तं नमन्ति। शार्द्दूलविक्रीडितं वृत्तम् ॥ २५ ॥

पुलिने पुलिने हि कलिन्दजाया
विचरंश्चापि तले तले तरूणाम् ।
सघनीभूतसुसौख्यकन्दवृन्दा-
विपिने हन्त कदा दिनानि नेष्ये ॥ २६ ॥

गौरश्यामलमिथुनं खेलति कन्दर्पलीलया यत्र ।
राधामाधवनाम्ना प्रथितं तन्नौमि काननं किमपि ॥२७॥

खगवृन्दं पशुवृन्दं द्रुमवल्लीवृन्दमुन्मदप्रेम्णा ।
प्रीणयदमृतरसेन ख्यातं वृन्दावनं नमत ॥ २८ ॥

ऊषरमपि हरिभक्तेः नाना दुर्मार्गनिष्ठमप्यधमम् ।
वृन्दाविपिनमचिन्त्यप्रभावमुन्मादयेत् प्रेम्णा ॥ २९ ॥

पुलिने इति । घनीभूताः अविरला इत्यर्थः सुसौख्याः सुष्ठु सुखदाः सुस्वादा इति भावः ये कन्दाः मूलविशेषाः तैः सह वर्त्तमाने वृन्दाविपिने वृन्दारण्ये कन्दाहारेण वृत्तिः सुखादेति भावः कलिन्दजायाः यमुनायाः पुलिने पुलिने प्रतिसैकतमित्यर्थः तथा तरूणां वृक्षाणां तले तले च विचरन् भ्रमन् सन् कदा दिनानि नेष्ये अति-वाहयिष्यामीत्यर्थः । हन्त खेदे ॥ २६ ॥

गौरेति । यत्र गौरश्यामलमिथुनं राधाकृष्णयुगलमित्यर्थः कन्दर्प-लीलया कामरङ्गेण खेलति विहरति, राधामाधवयोः नाम्ना प्रथितं विख्यातं तत् किमपि अनिर्वचनीयं काननं नौमि । आर्य्या-वृत्तम् ॥ २७ ॥

खगेति । खगानां पक्षिणां वृन्दं समूहं पशूनां वृन्दं वह्रुं द्रुमाणां वृक्षाणां वल्लीनां लतानाञ्च वृन्दम् उन्मदः उत्कटः प्रेमा यत्र तादृशेन अमृतरसेन प्रीणयत् तोषयत् ख्यातं प्रसिद्धं वृन्दावनं नमत यूयमिति शेषः । वाक्यवान् प्रत्युपदेशः । आर्य्यावृत्तम् ॥ २८ ॥

ऊषरमिति । ऊषरं लवणमयमपि नाना दुर्मार्गैः कुत्सितैः

भक्त्यैकयान्यत्र कृतार्थमानिनो धीरास्तदेतन्न वयं विदामः ।
श्रीराधिकामाधववल्लभं नः परन्तु वृन्दावनमेव संश्रयः ॥३०॥
दोषाकरोऽहं गुणलेशहीनः सर्वाधमो दुर्लभवस्तुकाङ्क्षी ।
वृन्दाटवीमुज्ज्वलभक्तिसारवीजं कदा प्राप्य भवामि पूर्णः ॥३१
शुद्धोज्ज्वप्रेमरसामृताब्धेः अनन्तपारस्य किमप्युदारम् ।
राधाभिरामं प्रचकास्ति सारं तदेव वृन्दाविपिनं गतिर्मे ॥३२

पथिभिः निष्ठा निष्पत्तिर्यस्य तादृशमपि अधममपि वृन्दाविपिनं हरिभक्तेः हरिभक्त्युद्दीपनादिति भावः अचिन्त्यप्रभावं प्रेममूर्त्या भक्तिरसेन उन्मादयेत् उन्मत्तं करोतीत्यर्थः लोकमिति शेषः । आर्य्यावृत्तम् ॥ २९ ॥

भक्त्येति । धीराः विद्वांसः बहव इति शेषः एकया एकरूपयेत्यर्थः भक्त्या अन्यत्र तीर्थादाविति शेषः कृतार्थमानिनः भवन्तीति शेषः आत्मानं कृतार्थं मन्यन्ते इत्यर्थः, वयन्तु तत् एतत् कृतार्थमानित्वमिति भावः न विदामः न बुध्यामहे । श्रीराधिकामाधवयोः वल्लभं प्रियं वृन्दावनमेव परं नः अस्माकं संश्रयः गतिः ॥ ३० ॥

दोषाकर इति । दोषाकरः बहुदोषनिलयः गुणलेशेन स्वल्पेनापि गुणेन हीनः सर्वाधमः सर्वेषु जनेषु अधमः नीचः दुर्लभस्य वस्तुनः काङ्क्षी अभिलाषी अहम् उज्ज्वलस्य भक्तिसारस्य वीजं वृन्दाटवीं प्राप्य कदा पूर्णः चरितार्थ इत्यर्थः भवामि ? इन्द्रवज्रावृत्तम् ॥ ३१ ॥

शुद्धेति । अनन्तपारस्य शुद्धः निर्मलः यः उज्ज्वलप्रेमरसः स एवामृताब्धिः सुधासिन्धुः तस्य किमपि अनिर्वचनीयम् उदारं महत् राधाभिरामं राधारञ्जनं, राधाभिधं यदिति पाठे राधाख्यमित्यर्थः स च न समीचीनः, वृन्दारण्यस्य राधाभिधानत्वे प्रमाणाभावादिति वोध्यं सारं यदिति शेषः प्रचकास्ति प्रकर्षेण राजते, तदेव वृन्दाविपिनं मे मम गतिः आश्रयः । उपजातिवृत्तम् ॥ ३२ ॥

सर्वसाधनहीनोऽपि वृन्दारण्यैकसंश्रयः ।
यः कोऽपि प्राप्नुयादेव राधाप्रियरसोत्सवम् ॥ ३३ ॥
त्यजन्तु स्वजनाः कामं देहवृत्तिश्च माभवत् ।
न वृन्दावनसीमातः पदं मे चलतु क्वचित् ॥ ३४ ॥

स मे न माता स च मे पिता न
स मे न बन्धुः स च मे सखा न
स मे न मित्रं स च मे गुरुर्न
यो मे न वृन्दावनवासमादिशेत् ॥ ३५ ॥

तच्छास्त्रं मम कर्णमूलमपि न स्वप्नेऽपि यायादहो
श्रीवृन्दाविपिनस्य यत्र महिमा नात्यद्भुतः श्रूयते ।

सर्वेति । सर्वैः साधनैः उपायैः हीनोऽपि यः कोऽपि वृन्दारण्यम् एकः संश्रयः यस्य तथाभूतः भवतीति शेषः स राधायाः प्रियः कृष्णः तस्य रसः आस्वाद एव उत्सवः तं प्राप्नुयादेव लभेतैव । अनुष्टुब्वृत्तम् ॥ ३३ ॥

त्यजन्त्विति । स्वजनाः कामं सम्यक् त्यजन्तु मामिति शेषः, देहवृत्तिश्च जीवनोपायश्च मा भवतु न भवतु । वृन्दावनसीमातः वृन्दारण्यसीमायाः सकाशात् मे मम पदं क्वचित् कुत्रापि न चलतु न गच्छतु । बन्धुभिस्त्यक्तोऽपि अनशनात् सम्भावितप्राणात्ययोऽपि वृन्दावनं न त्यक्ष्यामीति भावः । अनुष्टुब्वृत्तम् ॥ ३४ ॥

सेति । यः मे मह्यं वृन्दावने वासं न आदिशेत् नोपदिशेत् स जनः मे मम माता न, स जनः मे मम पिता न, स जनः मे मम बन्धुर्न, स च जनः मे मम सखा न, स जनः मे मम न मित्रं सुहृत्, स च जनः मे मम गुरुर्न । तादृशान् जनान् मात्रादिरूपेण न गणयामीति भावः । उपजातिवृत्तम् ॥ ३५ ॥

तदिति । अहो आश्चर्यं यत्र शास्त्रे श्रीवृन्दाविपिनस्य वृन्दा-

ते मे दृष्टिपथं न यान्तु नितरां सम्भाषतामाप्नुयुः
ये वृन्दावनवैभवे श्रुतिगते नोल्लासिनो नोऽखिलाः ॥३६॥

अलमलमिह योषिद्दम्भसङ्गरङ्गैः
अलमलमिह वित्तापत्यविद्यायशोभिः ।
अलमलमिह नानासाधनायासदुःखै-
र्भवत भवत वृन्दारण्यमाश्रित्य धन्याः ॥ ३७ ॥

वैकुण्ठं कोटिकोटिप्रगुणितमपि नो यत्र जातिश्रमात्रां
प्राप्नोत्यस्मिन्भगाश्रे लवमपि लभते शुद्धभावोज्ज्वलायाः ।

यनस्य वस्तदुभवः अतिविचित्रः महिमा माहात्म्यं न श्रूयते, तत् शास्त्रं स्वप्नेऽपि मम कर्णदूरमपि कर्णसमीपमपि कर्णमिति दूरे तिष्ठत्विति भावः न यायात् न गच्छतु, ये जनाः वृन्दावनवैभवे वृन्दारण्यमाहात्म्ये श्रुतिगते श्रुते सति न उल्लासिनः प्रेमरसावेशा-दिति भावः ते मे मम दृष्टिपथं न यान्तु न गच्छन्तु, ये च उल्लासिनः एवेत्यर्थः ते अखिलाः सर्वे मे सम्भाषताम् आलापताम् आप्नुयुः प्राप्नुवन्तु तैः सह आलापं करोमीति भावः । शार्दूलविक्रीडितं वृत्तम् ॥ ३६ ॥

अलमिति । इह संसारे योषितः कान्ता एव गर्दभ्यः तासां सङ्गेन ये रङ्गाः आनन्दाः तैः अलम् अलं न किञ्चित् प्रयोजन-मित्यर्थः, इह संसारे वित्तापत्यविद्यायशोभिः धनपुत्रविद्याकीर्त्तिभिः अलम् अलं न किमपि प्रयोजनमित्यर्थः, इह संसारे नाना साधनानि सिद्धेरुपायाः तेषु आयासदुःखैः प्रयासजनितक्लेशैः अलम् अलं न किमपि प्रयोजनमित्यर्थः । वृन्दारण्यम् आश्रित्य धन्याः कृतार्थाः भवत भवत यूयमिति शेषः । मालिनीवृत्तम् ॥ ३७ ॥

वैकुण्ठमिति । कोटिकोटिप्रगुणितमपि बहुकोटिसंख्याभिः

कुर्य्याच्चेत् भक्तिकोटीर्भगवति न तथाप्यद्भुतप्रेममूर्त्तेः
श्रीराधाया अभक्तैः क्वचिदपि न कलितां नौमि वृन्दाटवीं ताम् ॥ ३८ ॥

इदमपि भविता किं यत्र कुत्रापि वृन्दा-
पदमपि मम जातं श्रोत्रवीथीमकस्मात् ।
मधुरमधुरराधामाधवानङ्गखेला-
वनमुपनयदन्तर्दास्यति प्रेममूर्च्छाम् ॥ ३९ ॥
कदा नु वृन्दावनवीथिकास्वहं
परिभ्रमन् श्यामलगौरमद्भुतम् ।

प्रकर्षेण गुणितमपि वर्द्धितमपीत्यर्थः यत्र यत्समीपे जाले गवाक्षे शेते इति जालेशं त्र्यसरेणुर्नाम प्रमाणम् । उक्तञ्च मनुसंहितायां, जालान्तरगते भानौ यत्किञ्चिद् दृश्यते रजः । प्रथमं तत्प्रमाणानां त्र्यसरेणुं प्रचक्षते इति तन्मात्रां तत्परिमाणम् अतिक्षुद्रभावमिति भावः तथा प्रोन्मीलतः उच्छलतः सौभगाब्धेः प्रेमसागरस्य लवमपि विन्दुमपि न लभते न प्राप्नोति, तथा शुद्धभावेन उज्ज्वलाः याः भक्तिकोटय इति शेषः ताः भक्तिकोटीः भगवति कृष्णे कुर्य्यात् जनयेत् चेत्, तथापि अद्भुतप्रेममूर्त्तेः श्रीराधाया न भक्तिं कुर्य्यादिति शेषः अतः अभक्तैः क्वचिदपि न कलितां न मनसि धृतां तां वृन्दाटवीं नौमि स्तौमि । स्रग्धरावृत्तं, म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति तल्लक्षणात् ॥ ३८ ॥

इदमिति । यत्र कुत्रापि इदं वृन्दापदं वृन्दाख्यानम् अकस्मात् सहसा मम श्रोत्रवीथीं श्रवणमार्गं यातं गतं भविता किम् ? ननु वृन्दावनशब्दश्रवणे किं फलमित्यत आह मधुरेति मधुरम् अतिमनोहरं राधामाधवयोः अनङ्गखेला वनं कामक्रीडावनं वृन्दावनमिति भावः मुखं अदिति शेषः अन्तः मनसि प्रेमणा भक्तिरसेन मूर्च्छां मोहं दास्यति जनयिष्यति । मालिनीवृत्तम् ॥ ३९ ॥

कदेति । नु भोः कदा अहं वृन्दावनवीथिकासु वृन्दावनवर्त्मसु

किशोरमूर्त्तिद्वयमेकजीवनं
पुरः स्फुरद्वीक्ष्य पतामि मूर्च्छितः ॥ ४० ॥

किमेतादृग्भाग्यं मम कलुषमूर्त्तेरपि भवे-
न्निवासो देहान्तावधि यदिह वृन्दावनभुवि ।
तयोः श्रीदम्पत्योः नवनवविलासैर्विहरतोः
पदज्योतिःपूरैरपितु मम सङ्गोऽपि भविता ॥ ४१ ॥

भूतं स्थावरजङ्गमात्मकमहो यत्र प्रविष्टं किम-
प्यानन्दैकघनाकृतिस्वमहसा नित्योत्सवं भासते ।
मायान्धीकृतदृष्टिभिस्तु कलितं नानाविरूपात्मना
तद्वृन्दाविपिनं कदाधिवसतः स्यान्मे तनुश्चिन्मयी ॥४२॥

परिभ्रमन् पर्यटन् मनु अद्भुतम् आश्चर्यं श्यामगौरम् एकजीवनम् अभिन्नप्राणं पुरः अग्रतः स्फुरत् परिदृश्यमानमिव राजत् किशोर-मूर्त्तिद्वयम् अभिनवयुवयुगलं वीक्ष्य दृष्ट्वा मूर्च्छितः मोहं गतः पतामि ? वंशस्थविलं वृत्तम् ॥ ४० ॥

किमिति । कलुषमूर्त्तेः पापदेहस्य मम एतादृक् भाग्यम् अदृष्ट-मपि किं भवेत् ? यत् इह वृन्दावनभुवि वृन्दारण्यभूमौ देहान्तावधि आमरणं निवासः स्यादिति शेषः । अपितु किञ्च नवनवविलासैः नूतनैर्नूतनैः रङ्गैः विहरतोः क्रीडतोः तयोः श्रीदम्पत्योः राधाकृष्ण-योरिति भावः पदज्योतिःपूरैः पदाङ्कितरजोनिचयैः मम सङ्गः संसर्गः अपि भविता किं भविष्यति ? शिखरिणीछन्दः ॥ ४१ ॥

भूतमिति । अहो आश्चर्यं यत्र प्रविष्टं स्था[illegible]त्मकं भूतं प्राणिवर्ग इत्यर्थः किमपि अनिर्वचनीयेनेति भा[illegible] [illegible]न्दैकघना आनन्दमात्रपूर्णेत्यर्थः आकृतिर्यस्य तादृशं देह स्व[illegible] [illegible] ज्योतिः तेन नित्योत्सवं नित्यानन्द[illegible] भासते राजते, तु किन्तु माया[illegible]

यत्र प्रविष्टः सकलोऽपि जन्तुः सर्वः पदार्थोऽप्यबुधैरदृश्यः।
स्वानन्दसंवीतघनत्वमेति तदेव वृन्दावनमाश्रयन्तु ॥ ४३ ॥

वृन्दावनस्थेष्वपि येऽत्र दोषान्
आरोपयन्ति स्थिरजङ्गमेषु।
आनन्दमूर्त्तिष्वपराधिनस्ते
श्रीराधिकामाधवयोः कथं स्युः ॥ ४४ ॥

ये वृन्दावनवासिनिन्दनरता ये वा न वृन्दावनं
श्लाघन्ते तुलयन्ति ये च कुधियः केनापि वृन्दावनम्।
ये वृन्दावनमत्र नित्यसुखचिद्रूपं सहन्ते न वा
तैः पापिष्ठनराधमैः न भवतु स्वप्नेऽपि मे सङ्गतिः ॥ ४५ ॥

मोहेन अन्धीकृता दृष्टिर्येषां तादृशैर्जनैः नानाविरुद्धात्मना विविध-विकृतस्वरूपेण कलितं विदितं तत् वृन्दाविपिनम् अभितः अधि-तिष्ठतः मे मम तनुः शरीरं कदा चिन्मयी ज्ञानपूर्णा स्यात्? शार्दूलविक्रीडितं वृत्तम् ॥ ४२ ॥

यत्रेति। यत्र प्रविष्टः सकलः जन्तुरपि जीवोऽपि सर्वः पदार्थोऽपि वस्तुमात्रमपीत्यर्थः अबुधैः अज्ञैः अदृश्यः अदर्शनीयः सन् स्वयं आनन्दसंवीतघनत्वं सान्द्रानन्दपूर्णत्वम् एति प्राप्नोति, तदेव वृन्दावनम् आश्रयन्तु बुधा इति शेषः। उपजातिवृत्तम् ॥ ४३ ॥

वृन्दावनेति। ये जनाः अत्र संसारे वृन्दावनस्थेषु अतएव आनन्दमूर्त्तिषु अपि स्थिरजङ्गमेषु स्थावरजङ्गमेषु दोषान् आरोप-यन्ति अलीकदोषान् सङ्घटयन्तीत्यर्थः, ते अपराधिनः श्रीराधिका-माधवयोः कथं स्युः भवेयुः प्रिया इति शेषः नैव ते राधामाधवयोः प्रीतिं लभन्ते इति भावः। इन्द्रवज्रावृत्तम् ॥ ४४ ॥

ये इति। ये जनाः वृन्दावनवासिनां निन्दने कुत्सायां रताः, ये वा वृन्दावनं न श्लाघन्ते न प्रशंसन्ति, ये च कुधियः कुमतयः

असह्यं बहु दुर्वचो यदिह वदन्ति साक्षान्मम
स्त्रियं बलादपहरन्ति चेत् प्रियसुतादिकं घ्नन्ति वा ।
धनान्यपि च जीवनं यदि हरन्ति वृन्दावनस्थिता-
स्तदपि ते प्रिया मम भवन्ति वन्द्याः परम् ॥ ४६ ॥

परस्वस्तेयैकव्यसनमपि नित्यं परवधू-
प्रसक्तं विश्वेषामहह बहुधा हिंसकमपि ।
दुराचारं लोभादपहतमपि भ्रातरहणं
दिवान्धस्त्वं वृन्दावनमतजनं नावगणयेः ॥ ४७ ॥

केनापि वस्तुनेति शेषः वृन्दावनं तुलयन्ति समीकुर्वन्ति, ये कल्
जगति नित्यशुद्धचिद्रूपं सच्चिदानन्दमयमित्यर्थः वृन्दावनं न सहन्ते
न स्वीकुर्वन्तीति भावः, स्वप्नेऽपि तैः पापिष्ठैः नराधमैः सह मे मम
सङ्गतिः संसर्गः न भवतु । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४५ ॥

असह्येति । वृन्दावनस्थिताः वृन्दावनवासिनः जनाः यत् यदि
इह वृन्दावने मम साक्षात् समक्षम् असह्यं दुःसहं बहु दुर्वचः
दुर्वाक्यं वदन्ति, चेत् यदि स्त्रियं कान्तां बलात् अपहरन्ति, प्रिय-
सुतादिकं घ्नन्ति विनाशयन्ति, धनानि जीवितञ्चापि हरन्ति, तदपि
ते जनाः मम प्रियाः परं वन्द्याश्च भवन्ति ॥ ४६ ॥

परेति । हे भ्रातः ! दिवान्धस्त्वम् अरुणं सूर्य्यस्वरूपमित्यर्थः
परेषां स्वं धनं तस्य स्तेयैकव्यसनं चौर्य्यै, एकमात्रसक्तमपि नित्यं
परवधूषु परस्त्रीषु प्रसक्तमपि विश्वेषां जगतां बहुधा हिंसकमपि
दुराचारं लोभात् अपहतमपि विनष्टमपि वृन्दावनमतजनं वृन्दावनस्थं
जनं न अवगणयेः न अवजानीयाः । शिखरिणीवृत्तम् । अत्र
[illegible]नाद्धेतौ सत्यपि तत्कार्य्याभावाद् विशेषोक्तिः । तदुक्तं दर्पणे,
सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधेति ॥ ४७ ॥

परधनपरदारद्वेषमात्सर्य्यलोभा-
नृतपरुषपराभिद्रोहमिथ्याभिलापान् ।
त्यजति य इह भक्तो राधिकाप्राणनाथे
न खलु भवति वन्ध्या तस्य वृन्दावनाशा ॥ ४८ ॥

कुरु सकलमधर्मं मुञ्च सर्वं स्वधर्मं
त्यज गुरुमपि वृन्दारण्यवासानुरोधात् ।
स तव परमधर्मः सा च भक्तिर्गुरूणां
स किल कलुषराशिर्यद्वि वासान्तरायः ॥ ४९ ॥

निर्मर्य्यादाश्चर्य्यकारुण्यपूर्णौ
राधाकृष्णौ पश्यतश्चेत् कदाचित् ।

परेति । यः जनः इह अस्मिन् राधिकायाः प्राणनाथे कृष्णे भक्तः सन् परधनेषु परदारेषु द्वेषमात्सर्य्यलोभान् अनृतानि असत्यानि परुषाणि निष्ठुरव्यापाराः अतिद्रोहाः परानिष्टकरणानि मिथ्याभिलापाः मिथ्यावाक्यानि च तान् त्यजति, तस्य वृन्दावने आशा तत्प्राप्त्यभिलाष इत्यर्थः न खलु नैव वन्ध्या, विफला भवति । मालिनीवृत्तम् ॥ ४८ ॥

कुर्विति । वृन्दारण्ये वासस्य अवस्थितेः अनुरोधात् सकलम् अधर्मं धर्मविरुद्धं कर्मेत्यर्थः कुरु, सर्वं स्वधर्मं मुञ्च त्यज, गुरुमपि गुरुजनं पित्रादिमपि त्यज, सः अधर्माचरणं स्वधर्मत्यागश्चेत्यर्थः तव परमधर्मः महान् धर्मः, सा च गुरुत्याग इति भावः गुरूणां भक्तिः भक्तिरूपेण परिणमतीति भावः । वासस्य वृन्दारण्ये इति शेषः अन्तरायः विघ्नः इति यद्वि यदेव, स कलुषराशिः पापराशिः किल । मालिनीवृत्तम् ॥ ४९ ॥

निर्मर्य्यादेति । निर्मर्य्यादेन अशेषेण आश्चर्य्येण कारुण्येन पूर्णौ राधाकृष्णौ कदाचित् पश्यतः करुणया अवलोकयतः चेत् यदि

यः कोऽप्यस्मिन् यादृशस्तादृशो वा
देहस्यान्ते प्राप्नुयादेव सिद्धिम्॥ ५०॥

राधामधुपतिपादाम्बुजभक्तैर्दूरमुक्तस्य।
अजितेन्द्रियस्य कृपया मम वृन्दारण्यमाश्रयो भवतु॥५१॥

राधामधुपतिपादपङ्कजरजःप्रेमोन्मदैतत्प्रिय-
क्रीडाकाननवासिषु स्थिरचरप्राणिष्वपि द्रोहिषु।
प्रद्वेषं परमापराधमहह त्यक्त्वेतरैरप्यघैः
युक्तोऽप्यामरणान्तलब्धवसतिर्वृन्दावने स्यात् कृती॥५२॥

न लोकवेदोद्धतमार्गभेदैराविश्य संक्लिश्यत रे विमूढाः!
हठेन सर्वं परिहृत्य वृन्दावनान्तरे पर्णकुटीं कुरुध्वम्॥५३॥

यं कञ्चनेति शेषः सः यादृशः तादृशो वा स्वधर्मरतः स्वधर्मत्यागी वा यः कोऽपि अस्मिन् वृन्दावने देहस्यान्ते सिद्धिं प्राप्नुयादेव लभेतैव। शालिनीवृत्तं, मात्तौ गौ चेच्छालिनी वेदलोकैरिति तल्लक्षणात्॥५०॥

राधेति। राधामधुपत्योः राधाकृष्णयोः पादाम्बुजेषु भक्तैः जनैः दूरमुक्तस्य दूरतः परित्यक्तस्य पापीयस्तयेति भावः अजितेन्द्रियस्य मम वृन्दारण्यं कृपया आश्रयः भवतु॥ ५१॥

राधेति। राधामाधवयोः पादपङ्कजरजःसु पदकमलपरागेषु प्रेम्णा उन्मदाः सन्तः एतस्मिन् प्रियक्रीडाकानने वृन्दावने वसन्तीति तथोक्ताः तेषु स्थिरचरप्राणिषु स्थावरजङ्गमात्मकभूतेषु द्रोहिष्वपि अनिष्टमाचरत्स्वपि प्रद्वेषं विद्वेषं परमापराधं त्यक्त्वा महान् अपराध इति बुद्ध्वा विद्वेषं विहायेत्यर्थः इतरैरन्यैरपि अघैः पापैः युक्तो जनः वृन्दावने आमरणान्तं लब्धा वसतिर्येन तथाभूतः सन् कृती कृतार्थः स्यात्। अहह आश्चर्य्यम्। शार्दूलविक्रीडितं वृत्तम्।

नेति। रे विमूढाः! मन्दबुद्धयः जनाः! लोकेषु वेदेषु च ये उद्धताः उत्कटाः मार्गभेदाः आचारविशेषाः विहिता इति भावः

यत्तद्बलान्तु शास्त्राण्यहह जनतया गृह्यतां यत्तदेव
स्वं स्वं यत्तन्मतं स्थापयतु लघुमतिस्तर्कमात्रे प्रवीणः
अस्माकं तूज्ज्वलैकोन्मदविमलरसप्रेमपीयूषमूर्त्तेः
श्रीराधाया विहाराटविमिह न विनान्यत्र निर्याति चेतः ।५४

स्निग्धश्यामाभिरामच्छवि मृदुमसृणोत्तमहेमावदात
ज्योतिर्द्वन्द्वं किशोराकृतिमधुरमहो घूर्णमानं रसेन ।
नित्यं यत्रैव खेलायति मदनकलाकौतुकेनात्युदारं
सारं सारादशेषादवतु दश दिशः श्रीलवृन्दावनं नः ॥५५॥

तैः आविश्य अभ्यन्तरीभूयेत्यर्थः न संश्लिष्यत न क्लेशं गच्छत। सः वैदिकलौकिकम् आचारं हठेन सहसा परिहृत्य परित्यज्य वृन्दावनान्तरे वृन्दावनमध्ये पर्णकुटीं पत्रनिर्मितक्षुद्रगृहं कुरुध्वम् । उपजातिवृत्तम् ॥ ५३ ॥

यदिति । अहह खेदे । शास्त्राणि वेदादयः यत् तत् बलान्तु व्यवस्थापयन्तु, जनतया लोकवृन्देन यत्तदेव गृह्यतां, तर्कमात्रे वस्तु वास्तवतत्त्वे इति भावः प्रवीणः निपुणः लघुमतिः अल्पबुद्धिर्जनः स्वं स्वं यत् तत् मतं स्थापयतु, अस्माकन्तु उज्ज्वलः एकः मुख्यः उन्मदः उत्कटः विमलः विशुद्धः रसो यस्य तादृशं प्रेमपीयूषं तन्मयीत्यर्थः मूर्त्तिर्यस्याः तथाभूतायाः श्रीराधायाः विहाराटविं क्रीडावनं विना इह जगति अन्यत्र चेतः चित्तं न निर्याति न चलति । स्रग्धरावृत्तम् ॥ ५४ ॥

स्निग्धेति । स्निग्धा श्यामा अभिरामा मनोहारिणी छविः कान्तिर्यस्य तत् तथा मृदु कोमलं मसृणं चिक्कणम् उत्तमं यत् हेम काञ्चनं तद्वदवदातं गौरं किशोराकृत्या कुमाराकारेण मधुरं रसेन अन्योन्यानुरागेण घूर्णमानं ज्योतिर्द्वन्द्वं परमात्मस्वरूपयुगलं मदनकलाकौतुकेन कामकेलिकौतूहलेन अत्युदारम् अतिमनोरमं यथा

अपारकरुणाकरं व्रजविलासिनीनागरं
मुहुः सुबहुकाकुभिर्नतिभिरेतदभ्यर्थये।
अनर्गलवहन्महाप्रणयसीधुसिन्धौ मम
क्वचिज्जनुषि जायतां रतिरिहैव वृन्दावने॥ ५६॥
नानामार्गरतोऽपि कुमतिरपि त्यक्तस्वधर्मोऽपि हि
स्वच्छन्दाचरितोऽपि दूरभगवत्सम्बन्धगन्धोऽपि च।
कुर्वन् यत्र च कामलोभवशतो वासं समस्तोत्तमं
यायादेव रसात्मकं परमहं तन्नौमि वृन्दावनम्॥ ५७॥

तथा यत्र नित्यं सततं खेलायति क्रीडति, अशेषात् सर्वस्मात् सारात् सारं तत् श्रीवृन्दावनं नः अस्माकं दश दिशः स्फुरत् रचतु। स्रग्धरावृत्तम्॥ ५५॥

अपारेति। अपारकरुणाकरम् अशेषकृपानिधानं व्रजविलासिनीनां नागरं कान्तमित्यर्थः कृष्णमिति यावत् मुहुः पुनः पुनः सुबहुभिः काकुभिः विनयैः याभिस्ताभिर्नतिभिः प्रणामैः एतत् अभ्यर्थये याचे, मम क्वचित् जनुषि जन्मनि जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भव इत्यमरः। अनर्गलम् अविरतं यथा तथा वहन् महाप्रणय एव सीधुसिन्धुरमृतसागरः यस्मिन् तादृशे इहैव अस्मिन्नेव वृन्दावने रतिः जायताम्। शिखरिणीवृत्तम्॥ ५६॥

नानेति। नानामार्गेषु विविधाचारेषु रतोऽपि कुमतिरपि त्यक्तः स्वधर्मः येन तथाविधोऽपि स्वच्छन्दाचरितोऽपि स्वेच्छाचार्यपि दूरे भगवतः कृष्णस्य सम्बन्धगन्धः यस्य तादृशोऽपि कामलोभवशतः कामरिपुचरितार्थं यत्र वासं कुर्वन् वासार्थी सन्नित्यर्थः यायादेव गच्छत्येव समस्तेषु जगत्सु उत्तमं परं रसात्मकं प्रेमाधारं तत् वृन्दावनम् अहं नौमि स्तौमि। शार्दूलविक्रीडितं वृत्तम्॥ ५७॥

इह सकलसुखेभ्यः सूत्तमं भक्तिसौख्यं
तदपि चरमकाष्ठां सम्यगाप्नोति यत्र ।
तदिह परमपुंसो धाम वृन्दावनाख्यं
निखिलनिगमगूढ़ं मूढ़बुद्धिर्न वेद ॥ ५८ ॥

भजन्तमपि देवतान्तरमथाचरब्रह्मणि स्थितं
पशुवदेव वा विषयभोगमात्रे रतम् ।
अचिन्त्यनिजशक्तितः स्वगतराधिकामाधव-
प्रगाढरसदुर्मदं कुरुत एव वृन्दावनम् ॥ ५९ ॥

यत्कोट्यंशमपि स्पृशेन्न निगमो यन्नो विदुर्योगिनः
श्रीशब्रह्मशुकार्जुनोद्धवमुखाः पश्यन्ति यन्न क्वचित् ।
अन्यत् किं व्रजवासिनामपि न यत् दृश्यं कदालोकये
तद्वृन्दावनरूपमद्भुतमहं राधापदैकाश्रयः ॥ ६० ॥

इहेति । इह संसारे भक्तिसौख्यम् ईश्वरानुरागजं सुखं सकलसुखेभ्यः सुष्ठु उत्तमं सर्वश्रेष्ठमित्यर्थः, तत् यत्र चरमकाष्ठां परमोत्कर्षं सम्यक् आप्नोति, इह जगति परमपुंसः परमात्मनः वृन्दावनाख्यं निखिलैः सर्वैः निगमैः वेदान्तैः गूढ़ं सुसंवृतं धाम मूढ़बुद्धिर्जनः न वेद न जानाति नावबुध्यते इति यावत् । मालिनीवृत्तम् ॥ ५८ ॥

भजन्तमिति । वृन्दावनम् अचिन्त्या या निजा शक्तिः तस्याः हेतोः देवतान्तरम् अन्यं देवं भजन्तमपि, अक्षरे ब्रह्मणि स्थितमपि ब्रह्मवादिनमपीत्यर्थः पशुवत् विषयभोगमात्रे रतं वा जनं स्वगतयोः स्वस्मिन् गतयोः सततवासिनोः राधामाधवयोः प्रगाढ़ेन रसेन अनुरागेण दुर्मदम् उन्मत्तं कुरुते एव । एतदवस्थानेन अभक्तानामपि भगवति कृष्णे प्रगाढ़ा प्रीतिर्जायते इति भावः । पृथ्वीवृत्तम् ॥५९॥

यदिति । निगमः वेदान्तः यस्य कोट्यंशमपि कोटिभागैकभागमपि न स्पृशेत्, योगिनः यत् न विदुः न जानन्ति, श्रीश-

विस्मृत्य द्वैतमात्रं प्रणयमयमहो ज्योतिरेकार्णवान्तः
श्रीवृन्दारण्यमत्युच्छलदतुलरसाम्भोधि तस्मिन् सखे ! त्वम् ।
वेशं किञ्चिद्गृहीत्वोज्ज्वलमखिलकलाकोमलाभीरबाला-
प्राणश्रीराधिकायाः किमपि रसनिधेश्चाटुकारं भजेथाः॥६१॥

दुर्वासनासुदृढरज्जुशतैर्निबद्धम्
आकृष्य सर्वत इदं स्वबलेन कृष्ण ! ।
वृन्दावने विहरतः सह राधया ते
पादारविन्दसविधं नय मानसं मे ॥ ६२ ॥

ब्रह्मशुकार्जुनोद्धवमुखाः लक्ष्मीरुद्रविरिञ्चिशुकपार्थोद्धवप्रभृतयः क्वचित् यत् न पश्यन्ति, अन्यत् किं वक्तव्यमिति शेषः व्रजवासिनामपि गोकुलनिवासिनामपि यत् न दृश्यं न दर्शनपथं गतमित्यर्थः कदाहं राधापदैकाश्रयः राधापदमात्रपरायणः सन् अद्भुतं तत् वृन्दावन-रूपम् आलोकये पश्यामि । शार्दूलविक्रीडितं वृत्तम् ॥ ६० ॥

विस्मृत्येति । हे सखे ! त्वं द्वैतमात्रं विकल्पमित्यर्थः विस्मृत्य संशयं त्यक्त्वेत्यर्थः प्रणयमयं प्रेमपूर्णं ज्योतिरेव एकः अर्णवः समुद्रः तदन्तर्गतमिति शेषः अतिशयेन उच्छलन् अतुलः रसाम्भोधिः प्रेम-सागरः यस्मिन् तादृशं यत् वृन्दारण्यं तस्मिन् उज्ज्वलं किञ्चित् वेशं परिच्छदं गृहीत्वा अखिलासु कलासु चतुःषष्टिकामविद्यासु कोम-लानां रसिकानाम् आभीरबालानां गोपकन्यानां प्राणायाः प्राणभूतायाः तस्याः श्रीराधिकायाः रसनिधेश्च कृष्णस्य च रसनिधेरिति राधिकाया विशेषणमिति केचित् किमपि अनिर्वचनीयं चाटुकारं प्रीतिजनकव्या-पारं भजेथाः कुरु । स्रग्धरावृत्तम् ॥ ६१ ॥

दुर्वासनेति । हे कृष्ण ! दुष्टा वासना भोगस्पृहा एव सुदृढाः रज्जवः तासां शतैः निबद्धम् इदं मे मम मानसं स्वबलेन निज-

वशीकर्त्तुं शक्तो नहि नहि मनागिन्द्रियगणो
गुणोऽभून्नैकोऽपि प्रविशति सदा दोषनिचयः ।
क यामः किं कुर्मो हरि हरि मयीशोऽप्यकरुणः
स्ववासं श्रीवृन्दावन ! वितर मानन्यगतिकम् ॥ ६३ ॥

जातिप्राणधनानि यान्तु सुयशोराशिः परिक्षीयतां
सद्धर्मा विलयं प्रयान्तु सततं सर्वैश्च निर्भर्त्स्यताम् ।
आधिव्याधिशतेन जीर्य्यतु वपुर्लुप्तप्रतीकारतः
श्रीवृन्दाविपिनं तथापि न मनाक् त्यक्तुं ममास्तां मतिः॥ ६४

महिम्ना सर्वतः सर्वेभ्यः विषयेभ्यः आकृष्य वृन्दावने राधया सह विहरतः क्रीडतः तव पादारविन्दयविधं चरणकमलसमीपं नय प्रापय । वसन्ततिलकं वृत्तम् ॥ ६२ ॥

वशीकर्त्तुमिति । इन्द्रियगणः चक्षुरादिवर्गः मनागपि स्वल्पमपि वशीकर्त्तुं नहि नहि शक्यः, एकोऽपि गुणः ममेति शेषः न अभूत् नासीत्, दोषनिचयः सदा प्रविशति मयीति शेषः, क कुत्र यामः गच्छामः ? किं कुर्मः ? हरि हरि खेदे, ईशोऽपि विधातापि मयि अकरुणः निर्दयः, अतः हे वृन्दावन ! अनन्यगतिकं मा मामित्यर्थः कर्मविवक्षया सम्प्रदाने द्वितीया । स्ववासमिति यावत् स्ववासं निजस्थानं वितर देहि । शिखरिणीवृत्तम् ॥६३॥

जातीति । जातिः कुलं प्राणाः धनानि च यान्तु गच्छन्तु नश्यन्त्वित्यर्थः, सुष्ठु यशोराशिः कीर्त्तिसमूहः क्षीयतां क्षयं गच्छतु, सद्धर्माः वेदादिविहिताचाराः विलयं क्षयं प्रयान्तु गच्छन्तु, सर्वैश्च जनैः सततं निर्भर्त्स्यतां तिरस्क्रियतां, वपुः शरीरम् आधिव्याधिशतेन मनस्तापरोगशतेन लुप्तप्रतीकारतः, प्रतिविधानराहित्येन जीर्य्यतु जीर्णं भवतु, तथापि मम मतिः श्रीवृन्दावनं त्यक्तुं मनागपि स्वल्पमपि न आस्तां न भवतु अभिलाषिणीति शेषः । शार्दूलविक्रीडितं वृत्तम् ॥ ६४ ॥

रक्षति संसारभयाद्दोषाकरमप्यशेषदेहभृद्वृन्दम् ।
वृन्दावनमिति तेन प्रथितं तन्नौमि काननं किमपि ॥ ६५ ॥

वृन्दारण्यादन्यत् प्रकृतेरन्तर्बहिर्वापि ।
नैवास्ति मधुरवस्त्वित्यवकलितं यैर्नमस्तेभ्यः ॥ ६६ ॥

विभ्राजत्तिलका कलिन्दतनयानीरौघनीलाम्बरा
उद्यत्काञ्चनचम्पकच्छविरहो नानारसोल्लासिनी ।
कृष्णप्रेमपयोधरेण रसदेनात्यन्तसम्मोहिनी
गोपस्त्र्यात्मजवल्लभा विजयते राधेव वृन्दाटवी ॥ ६७ ॥

रक्षतीति । दोषाकरमपि अशेषं सर्वं देहभृतां प्राणिनां वृन्दं संसारभयात् रक्षति, तेन हेतुना वृन्दावनमिति प्रथितं प्रसिद्धं तत् किमपि काननं नौमि स्तौमि ॥ ६५ ॥

वृन्दारण्यादिति । प्रकृतेः पञ्चभूतात्मकजगत इत्यर्थः अन्तरभ्यन्तरे बहिर्वा बाह्यदेशे वा वृन्दारण्यात् अन्यत् मधुरवस्तु मनोहरं वस्तु नैवास्ति इति यैर्जनैः अवकलितं निर्णीतं तेभ्यः जनेभ्यः नमः ॥ ६६ ॥

विभ्राजदिति । विभ्राजत् विशेषेण शोभमानं तिलकं तिलपुष्पं पक्षे ललाटालङ्कारविशेषः यस्याः तथोक्ता, कलिन्दतनया यमुना तस्याः नीरौघः जलराशिरेव नीलम् अम्बरं वसनं पक्षे नीलौघवत् नीलम् अम्बरं यस्याः तथाभूता, उद्यन्ती विकसन्ती काञ्चनानां पुष्पविशेषाणां चम्पकानाञ्च छविः कान्तिः पक्षे काञ्चनचम्पकवत् स्वर्णकमलवत् छविः यस्याः तादृशी, नानारसेन बहुजलेन पक्षे विविधविलासेन उल्लासिनी रसदेन जलदेन पक्षे रागदेन अनुरागवतेत्यर्थः कृष्णप्रेमा एव पयोधरः मेघः पक्षे कृष्णप्रेमा पयोधर इव तेन अत्यन्तं सम्मोहिनी लोकरञ्जनी पक्षे विह्वलेत्यर्थः, गोपानां स्त्रीणां गोपाङ्गनानामित्यर्थः आत्मजानां गोपबालकानाञ्च वल्लभा प्रिया पक्षे

यस्मिन् कोटिसुरद्रुमैः धुरयुता भूमीरुहः पोषका
भक्तिः सहनिता महारसमयी यत्र स्वयं श्लिष्यति ।
यत्र श्रीहरिदासवर्य्यवनिताः खट्वायमानाः शिलाः
तद् वृन्दावनमद्भुतं सुखमयं को नाम नालम्बते ॥ ६८ ॥
विन्दन्ति यावत् प्रणयं न मन्दा वृन्दावने प्रेमविलासकन्दे ।
तावन्न गोविन्दपदारविन्दस्वच्छन्दसद्भक्तिरहस्यलाभः ॥ ६९ ॥

गोपस्त्री यशोदा तस्याः आत्मजः पुत्रः कृष्णः तस्य वल्लभा प्रिया राधेव वृन्दाटवी विजयते सर्वोत्कर्षेण वर्त्तते । उपमालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ६७ ॥

यस्मिन्निति । यस्मिन् भूमीरुहः वृक्षाः कोटिसुरद्रुमैः बहूनां सुरतरूणामिति भावः करणविवक्षया सम्बन्धे तृतीया । धुरयुताः भारवाहिनः तत्सदृशफलपुष्पशोभिन इति भावः पोषकाः फलपुष्पपल्लवच्छायादानैः पथिकानामिति भावः, यत्र महारसमयी सती साध्वी वनिता नारीस्वरूपा भक्तिः स्वयं श्लिष्यति आलिङ्गति स्वयमुदेतीति भावः, यत्र श्रीहरिदासवर्य्याणां हरिभक्तप्रवराणां वनिताः भार्य्यारूपाः शिलाः खट्वायमानाः पर्य्यङ्का इव आचरन्त्यस्तिष्ठन्तीति शेषः, को जनः तत् अद्भुतं सुखमयं वृन्दावनं न आलम्बते नाश्रयति नाम सम्भावनायां सर्व्व एव जनः समाश्रयतीति सम्भावयामीत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ ६८ ॥

विन्दन्तीति । मन्दाः मूढा जनाः प्रेम्णां विलासस्य स्फुरणस्य कन्दे मूलभूते वृन्दावने यावत् प्रणयं न विन्दन्ति न लभन्ते, तावत् गोविन्दस्य कृष्णस्य पदारविन्दे स्वच्छन्दा साभिप्राया या सती भक्तिः तस्याः रहस्यस्य तत्त्वस्य लाभः न भवतीति शेषः । इन्द्रवज्रावृत्तम् ॥ ६९ ॥

स्मारं स्मारं नवजलधरश्यामलं धाम विद्युत्-
कोटिज्योतिस्तनुलतिकया राधया श्लिष्यमाणम् ।
उच्चैरुच्चैः सरससरसः प्राञ्जलिर्जृम्भमाण-
प्रेमाविष्टो भ्रमति सुकृती कोऽपि वृन्दावनान्तः ॥७०॥

राधापदाङ्कभूषितवृन्दारण्यस्थलीषु निर्भरप्रेम्णा हरि हरि ।
कदा लुठामि प्रतिपदगलदश्रुरुल्लसत्पुलकः ॥ ७१ ॥

पूर्णोज्ज्वलत्प्रेमरसैकमूर्त्तिः यत्रैव राधा विजयी हरीति ।
तदेव वृन्दावनमाश्रितानां भवेत् परं भक्तिरहस्यलाभः॥७२॥

स्मारमिति । कोऽपि सुकृती पुण्यवान् जनः विद्युतां कोटिरिव ज्योतिः यस्यास्तादृशी तनुलतिका शरीरयष्टिर्यस्यास्तथाभूतया राधया श्लिष्यमाणम् आलिङ्ग्यमानं नवजलधरश्यामलं धाम ज्योतिः कृष्णमित्यर्थः स्मारं स्मारं स्मृत्वा स्मृत्वा उच्चैरुच्चैरतिशयेन सरससरसः सातिशयरसपूर्ण इत्यर्थः प्राञ्जलिः कृताञ्जलिः जृम्भमाणेन वर्द्धमानेन प्रेम्णा आविष्टः सन् वृन्दावनान्तः वृन्दावनमध्ये भ्रमति पर्य्यटति । मन्दाक्रान्तावृत्तं, मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्ममिति तल्लक्षणात् ॥ ७० ॥

राधेति । हरि हरि खेदे हर्षे वा । राधायाः पदाङ्केन भूषितासु अलङ्कृतासु वृन्दारण्यस्थलीषु निर्भरप्रेम्णा प्रगाढेन भक्तिरसेन प्रतिपदे गलन्ति अश्रूणि आनन्दजनितनेत्रजलानि यस्य तथाभूतः तथा उल्लसत्पुलकः उद्गतरोमाञ्चः सन् कदा लुठामि ॥७१॥

पूर्णेति । यत्रैव पूर्णः उज्ज्वलत्प्रेमरसः यस्यास्तादृशी एका केवला मूर्त्तिर्यस्याः तथाभूता राधा तथा विजयी सर्वोत्कर्षेण वर्त्तमानः हरिश्च वर्त्तते इति शेषः, तदेव वृन्दावनम् आश्रितानां जनानां परं भक्तिरहस्यलाभः भवेत् ॥ ७२ ॥

सर्वं त्यक्त्वा सरसविशदप्रेमपीयूषसान्द्रे
वृन्दारण्येऽद्भुततरुलतागुल्मकाद्यैर्मनोज्ञे ।
राधाकृष्णोज्ज्वलगुणगणोद्दाममत्तालिकाद्यैः
नीरेणापि स्थितिमिह तनोरध्यवस्यावसन्तु ॥ ७३ ॥

श्रीराधायाः कनकरुचिरज्योतिरङ्गच्छटौघैः
शुद्धप्रेमोज्ज्वलरसमयैः सेव्यमानं समन्तात् ।
गोविन्दस्याम्बुदरुचितनोर्ज्योतिरम्भोधिपूरैः
सान्द्रानन्दात्मभिरपि चितं नौमि वृन्दावनं तत् ॥७४॥

निन्दा वा स्तुतिरेव वा बहुविपत् सम्पत्तिरेवास्तु वा
पाण्डित्यं वत मूर्खतापि यदि वा रागो विरागोऽथवा ।

सर्वमिति । सर्वं त्यक्त्वा सरसेन विशदेन निर्मलेन प्रेमपीयूषेण प्रेमामृतेन सान्द्रे घने राधाकृष्णयोः उज्ज्वलेन गुणगणेन उद्दामम् उद्भटं यथा तथा मत्ताः अलिकायाः भ्रमरश्रेण्यः येषु तैः अद्भुत-तरुलतागुल्मकाद्यैः विचित्रवृक्षवल्लीगुल्मप्रभृतिभिः मनोज्ञे मनोहरे इह वृन्दारण्ये नीरेणापि जलपानेनापि तनोः शरीरस्य स्थितिम् अध्यवस्य अवलम्ब्य जीवित्वेति यावत् आवसन्तु जना इति शेषः । मन्दाक्रान्तावृत्तम् ॥ ७३ ॥

श्रीराधाया इति । समन्तात् सर्वतः श्रीराधायाः शुद्धप्रेमो-ज्ज्वलरसमयैः पवित्रप्रणयप्रदीप्तरसप्रचुरैः कनकवत् रुचिरं मनोज्ञं ज्योतिः कान्तिर्येषां तथाभूताः अङ्गच्छटानां शरीरलावण्यानाम् ओघाः समूहाः तैः सेव्यमानम् अध्यास्यमानं गोविन्दस्य कृष्णस्य सान्द्रानन्दा-त्मभिः घनानन्दस्वरूपैः अम्बुदरुचितनोः नवनीरदनीलशरीरस्य ज्योतींष्येव अम्भोधिपूराः समुद्रप्रवाहाः तैः चितं व्याप्तं तत् वृन्दा-वनं नौमि स्तौमि । मन्दाक्रान्तावृत्तम् ॥ ७४ ॥

निन्देति । निन्दा वा स्तुतिः प्रशंसैव वा, बहुविपत् वा

यत् किञ्चिद्भवतु श्रुतेरपि मनाग्लक्ष्यं न यद्वैभवं
तद्वृन्दाविपिनं न जीवनमहं स्वप्नेऽपि हातुं क्षमः ॥७५॥
चाण्डालश्वखरादि वा यदि जनाः कुर्वन्ति सर्वे तिर-
स्कारं दुर्विषहञ्च तेन नहि मे खेदोऽस्त्यणीयानपि।
देवा देव्य इमे च भूतनिवहाः प्राणाश्च दद्युर्महा-
स्नेहात्तुष्टिमतो न मे गुरुतृषा वृन्दावनीये वसे ? ॥७६॥

भ्रातः! समस्तान्यपि साधनानि
विहाय वृन्दावनमाश्रयस्व।
यथा तथा प्राक्तनवासनावशात्
शरीरवाणीहृदयं विचेष्टताम् ॥ ७७ ॥

सम्पत्तिरेव वा, पाण्डित्यं विज्ञत्वं वत खेदे, मूर्खता वापि, यदि वा रागः अनुरागः अथवा विरागः अस्तु, यत् किञ्चित् भवतु, यस्य वैभवं माहात्म्यं श्रुतेरपि वेदस्यापि मनाक् अल्पमपि लक्ष्यं न, श्रुतेरपि अगम्यमिति भावः, जीवनं जीवनभूतं तत् वृन्दाविपिनम् अहं स्वप्नेऽपि हातुं त्यक्तुं न क्षमः न शक्तः। शार्दूलविक्रीडितं वृत्तम् ॥७५॥

चाण्डालेति। चाण्डालाः श्वानः कुक्कुराः खराः गर्दभाश्च आदयो यस्य तादृशं निकृष्ट मनुष्यवृन्दमिति शेषः यदि वा अथवा सर्वे भद्रा अभद्राश्चेति भावः जनाश्च दुर्विषहम् असह्यं तिरस्कारं कुर्वन्ति, तेन तिरस्कारेण मे मम अणीयानपि अल्पोऽपि खेदः दुःखं न अस्ति, देवाः देव्यः इमे च भूतनिवहाः पञ्चभूतानीत्यर्थः प्राणाश्च महास्नेहात् अत्यन्तस्नेहेनेत्यर्थः मे मम अतः अस्मिन् गुरु-तृषा महत्या तृष्णया वृन्दावनीये वसे वृन्दावनवासे तुष्टिं सन्तोषं न दद्युः ? अपितु दद्युरेवेत्यर्थः। शार्दूलविक्रीडितं वृत्तम् ॥ ७६ ॥

भ्रातरिति। हे भ्रातः! प्राक्तनवासनावशात् पूर्वजन्मार्जित-

तादृक् कालो भवतु भगवान् येन कस्याश्चिदेणी-
दृश्यासक्तोऽप्यहह न बहिर्यामि वृन्दाटवीतः ।
तादृक् दम्भोऽप्युदयतु तथाहङ्कृतिश्चापि मे स्याद्
येनाप्यस्मिन्विषमयवने रोचये नित्यवासम् ॥ ७८ ॥

वरं वृन्दारण्ये हरि हरि करे खर्परभृतो
भ्रमामो भैक्षार्थं श्वपचगृहवीथीषु दिनशः ।
तथापि प्राचीनैः परमसुकृतैरत्र मिलितं
न नेष्यामोऽन्यत्र क्वचिदपि कथञ्चिद्वपुरिदम् ॥ ७९ ॥

सुकृतदुष्कृतजनितापूर्ववशात् शरीरं वाणी वाक् हृदयञ्च यथा तथा भद्रम् अभद्रं वेति भावः विचेष्टतां स्वं स्वं व्यापारमवलम्बतामित्यर्थः, त्व समस्तानि अपि साधनानि उपायान् विहाय त्यक्त्वा वृन्दावनम् आश्रयस्व । उपजातिवृत्तम् ॥ ७७ ॥

तादृगिति । तादृक् तथाभूतः भगवान् कालः भवतु, येन कालेन कस्याश्चित् एणीदृश्यां मृगनयनायां सक्तोऽपि अनुरक्तोऽपि वृन्दाटवीतः वृन्दारण्यात् बहिः न यामि न गच्छामि, अहह खेदे हर्षे वा । मे मम तादृक् दम्भोऽपि तेजोऽपि उदयतु उद्भवतु, तथा अहङ्कृतिः अहङ्कारश्चापि स्यात्, येन दम्भेन अहङ्कारेण च अस्मिन् विषमयवनेऽपि दम्भाहङ्कारजनकत्वादिति भावः नित्यवासं सततावस्थानं रोचये इच्छामि । मन्दाक्रान्तावृत्तम् ॥ ७८ ॥

वरमिति । हरि हरि खेदे, वृन्दारण्ये करे हस्ते खर्परभृतः भग्नघटपात्रखण्डरूपभिक्षाभाजनभृतः सन्तः दिनशः प्रतिदिनं श्वपचानां चाण्डालानां गृहवीथीषु गृहसमूहेषु भैक्षार्थं वरं भ्रमामः पर्यटामः, तथापि प्राचीनैः प्राक्तनैः परमसुकृतैः महापुण्यैः अत्र वृन्दारण्ये मिलितम् उपस्थितम् इदं वपुः शरीरम् अन्यत्र क्वचिदपि कथञ्चित् केनापि प्रकारेण न नेष्यामः । शिखरिणीवृत्तम् ॥ ७९ ॥

जरत्कन्थामेकां दधदपि च कौपीनमनिशं
प्रगायन् श्रीराधामधुपतिरहःकेलिलहरीम् ।
फलं वा मूलं वा किमपि दिवसान्ते कवलयन्
कदा नेष्ये वृन्दावनभुवि दशां जीवनमयीम् ॥ ८० ॥

प्रकृत्युपरि केवले सुखनिधौ परब्रह्मणि
श्रुतिप्रथितवैभवं परपदं विकुण्ठाभिधम् ।
तदन्तरखिलोज्ज्वलं जयति माथुरं मण्डलं
महारसमयं सखे ! कलय तत्र वृन्दावनम् ॥ ८१ ॥

जरदिति । कदा एकाम् अद्वितीयां जरत्कन्थां जीर्णां कन्थां कौपीनञ्च दधदपि दधानोऽपि अनिशं सततं श्रीराधामधुपत्योः राधाकृष्णयोः रहःकेलिलहरीं विजनविहारतरङ्गं प्रकर्षेण गायन् कीर्त्तयन् दिवसान्ते किमपि किञ्चित् फलं वा मूलं वा कवलयन् भक्षयन् वृन्दावनभुवि जीवनमयीं दशां जीवनावस्थां नेष्ये अतिवाहयिष्यामि । शिखरिणीवृत्तम् ॥ ८० ॥

प्रकृतीति । प्रकृतेः प्रधानस्य मूलकारणस्य उपरि उपरिस्थिते इति भावः केवले अद्वितीये सुखनिधौ आनन्दमये परब्रह्मणि परमात्मनि श्रुतिषु वेदेषु प्रथितं प्रसिद्धं वैभवं माहात्म्यं यस्य तादृशं विकुण्ठाभिधं वैकुण्ठाख्यं परपदं परमं स्थानं मोक्षधामेति यावत् अस्तीति शेषः, तदन्तः तन्मध्ये अखिलेषु तन्मध्यवर्त्तिषु सर्वेषु स्थानेषु मध्ये उज्ज्वलं माथुरं मण्डलं मथुरापुरं जयति सर्वोत्कर्षेण वर्त्तते, हे सखे ! तत्र मथुरामण्डले महारसमयं सान्द्रानन्दमयं वृन्दावनं कलय अवधारय । वृन्दावनस्य मथुरैकदेशत्वादिति भावः । पृथ्वीवृत्तम् ॥ ८१ ॥

कदा वृन्दारण्यं श्रवणवसनस्पर्शननिरी-
क्षणघ्राणाद्यैर्मे स्फुरति वसमिच्छत् स्रवदिव ।
कदा वा तल्लोकोत्तरवसमदान्धो मधुपते-
र्गुणानुच्चैरुच्चैः सरसमुपगास्यामि परितः ॥ ८२ ॥

स्वानन्दसच्चिद्घनरूपतामतिः
यावन्न वृन्दावनवासिजन्तुषु ।
तावत् प्रविष्टोऽपि न तत्र विन्दते
ततोऽपराधात् पदवीं परात्पराम् ॥ ८३ ॥

यदैव सच्चिद्रसरूपबुद्धिः
वृन्दावनस्थस्थिरजङ्गमेषु ।

कदेति । कदा वृन्दारण्यं श्रवणरसनस्पर्शननिरीक्षणघ्राणाद्यैः मे मम वसं वासम् इच्छत् अभिलषत् स्रवदिव अमृतं वर्षदिव स्फुरति प्रकाशते । कदा वा तस्मिन् लोकोत्तरवसेन अलौकिकवासेन यो मदः आनन्दः गर्वो वा तेन अन्धः सन् परितः समन्तात् मधुपतेः कृष्णस्य उच्चैरुच्चैः अत्युत्कृष्टानित्यर्थः गुणान् सरसं सप्रेम उपगास्यामि । शिखरिणीवृत्तम् ॥ ८२ ॥

स्वानन्देति । यावत् वृन्दावनवासिषु जन्तुषु जीवेषु यावत् स्वानन्दसच्चिद्घनरूपतायां स्वात्मानन्दनित्यज्ञानघनतायां मतिः न स्यादिति शेषः, तावत् तत्र वृन्दावने प्रविष्टोऽपि ततः अपराधात् तादृशमतेरनुदयजनितादिति भावः परात्पराम् अत्युत्तमां पदवीं गतिमिति भावः न विन्दते न लभते । वंशस्थविलेन्द्रवंशयोरुपजातिवृत्तम् । वदन्ति वंशस्थविलं जतौ जराविति, स्यादिन्द्रवंशः प्रथमाक्षरे गुराविति, अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता इति तल्लक्षणात् ॥ ८३ ॥

यदैवेति । यदैव वृन्दावनस्थेषु स्थिरजङ्गमेषु स्थावरजङ्गमेषु

स्यान्निर्व्यलीकं पुरुषस्तदैव
चकास्ति राधाप्रियसेविरूपः ॥ ८४ ॥

सकलविभवसारं सर्वधर्मैकसारं
सकलभजनसारं सर्वसिद्धैकसारम्।
सकलमहिमसारं वस्तु वृन्दावनान्तः
सकलमधुरिमाम्भोराशिसारं विहारम् ॥ ८५ ॥

दैवी वाक् प्रतिषेधिनी भवतु मे स्याद्वा गुरूणां गिरां
श्रेणी शास्त्रविदामिहास्तु बहुधा यः कोऽपि कोलाहलः।
त्यक्त्वा साधनसाध्यजातमखिलं लग्नन्तु मे राधिका-
क्रीड़ाकाननवाससम्पदि मनाक् व्यावर्त्तते नो मनः ॥८६॥

सच्चिद्रूपवपुर्भिः सच्चिदानन्दमयध्यानं निर्व्यलीकं सत्यं यथा तथा स्यात्, तदैव पुरुषः राधायाः प्रियः कृष्णः तस्य सेवि रूपं यस्य तादृशः सन् चकास्ति राजते। उपजातिवृत्तम् ॥ ८४ ॥

सकलेति। वृन्दावनान्तः वृन्दावनान्तर्गतं वस्तु सकलानां विभवानां सम्पदां सारं, सकलानां धर्माणाम् एकमद्वितीयं सारं, सकलानां भजनानाम् उपासनानां सारं, सर्वेषां सिद्धानाम् एकं सारं, सकलानां महिम्नां सारं, सकलानां मधुरिमाम्भोराशीनां माधुर्य्यसागराणां सारम्, अतएव विशेषेण हरति मोहयतीति तथाभूतं विमुग्धकरस्थिमित्यर्थः। मालिनीवृत्तम् ॥ ८५ ॥

दैवीति। दैवी वाक् दैववाणी मे मम प्रतिषेधिनी निवारिणी वृन्दावनवासस्येति शेषः भवतु, शास्त्रविदां शास्त्रज्ञानां गुरूणां गिरां वाचां श्रेणी प्रतिषेधिनी स्याद्वा, इह अस्मिन् वृन्दावनवासविषये बहुधा नानाप्रकारः यः कोऽपि कोलाहलः आलापः अस्तु वा। तु किन्तु अखिलं सर्वं साधनसाध्यजातं कारणकार्य्यसमूहं त्यक्त्वा अविगणय्येत्यर्थः राधिकायाः क्रीड़ाकाननवाससम्पदि लग्नं मे मम

प्रगायन्नटन्नुद्धसन्नालुठन्
वप्रे धावन् रुदन् सम्पतन् मूर्च्छितो वा।
कदा वा महाप्रेममाध्वीमदान्धः
विचरिष्यामि वृन्दावने लोकबाह्यः॥ ८७॥

न लोकं न धर्मं न गेहं न देहं
न निन्दां स्तुतिं वापि सौख्यं न दुःखम्।
विजानन् किमप्युन्मदप्रेममाध्व्या
ग्रहग्रस्तवत् कर्हि वृन्दावने स्याम्॥ ८७॥

हरे कृष्ण कृष्णेति कृष्णेति मुख्यान्
महाश्चर्यनामावलीसिद्धमन्त्रान्।
कृपामूर्त्तिचैतन्यदेवेन गीतान्
कदाभ्यस्य वृन्दावने स्यां कृतार्थः॥ ८९॥

मनः मनाक् अल्पमपि नो व्यावर्त्तते न पराङ्मुखीभवतीत्यर्थः।
शार्दूलविक्रीडितं वृत्तम्॥ ८६॥

प्रगायन्निति। कदाहं लोकबाह्यः लोकैर्जनैः बाह्यः बहिष्कृतः उन्मत्तोऽयमिति अकृतसङ्ग इति भावः महान् प्रेमा एव माध्वी पीयूषः तस्याः मदेन अन्धः सन् प्रगायन् उच्चैर्गायन् नटन् नृत्यन् उद्धसन् उच्चैर्हास्यं कुर्वन् आलुठन् लुण्ठनं कुर्वन् वप्रे कस्मिंश्चित् पर्वतकूटे धावन् रुदन् सम्पतन् मूर्च्छितः मोहं गतो वा वृन्दावने विचरिष्यामि॥ ८७॥

नेति। कर्हि कदा वृन्दावने लोकं लौकिकाचारं न, धर्मं न, गेहं न, देहं न, निन्दां न, स्तुतिं न, सौख्यं न, दुःखञ्च न विजानन् किमपि अनिर्वचनीययेत्यर्थः उन्मदप्रेममाध्व्या उत्कटप्रेमामृतपानेनेति भावः ग्रहग्रस्तवत् भूताविष्ट इव स्याम् भवामि॥ ८८॥

हरे इति। कदा वृन्दावने कृपामूर्त्तिना दयामयेन चैतन्यदेवेन

हैमस्फाटिकपद्मरागरचितैर्माहेन्द्रनीलैर्द्रुमैः
नानारत्नमयस्थलीभिरलिभिर्झङ्कारितोद्दल्लिभिः ।
चित्रैः कीरमयूरकोकिलमुखैर्नानाविहङ्गैर्लसत्-
पद्माद्यैश्च सरोभिरद्भुतमहं ध्यायामि वृन्दावनम् ॥९०॥

ताम्बूलपानकमनोहरमोदकादि-
रम्ये लसन्मृदुलपल्लवचारुतल्पे ।
दूरे स्थितालिभिरहो सुहृदावपेक्ष्य
वृन्दावनं स्मर निकुञ्जगृहैर्मनोज्ञम् ॥ ९१ ॥

गीतान् हरे कृष्ण कृष्ण कृष्ण इति मुख्यान् श्रेष्ठान् महाश्चर्य-
नामावलीसिद्धमन्त्रान् अभ्यस्य कृतार्थः स्याम् ॥ ८९ ॥

हैमेति । हेम एव हैमं काञ्चनं तेन स्फटिकमेव स्फाटिकं तेन स्फाटिकेन पद्मरागेण च रचितैः निर्मितैः, महेन्द्रनील नीलाश्म तेन रचिताः तैः द्रुमैः, नानारत्नमयस्थलीभिः, झङ्कारिताः कृतझङ्काराः उद्दल्लयः वल्लिभ्य उद्गताः तैः अलिभिः भ्रमरैः, कीराः शुकाः मयूराः कोकिलाश्च मुखानि प्रधानानि येषां तैः चित्रैः मनोहरैः नानाविहङ्गैः विविधपक्षिभिः, लसन्ति विकसन्ति पद्माद्यानि कमलादीनि येषु तैः सरोभिः अद्भुतं वृन्दावनं ध्यायामि चिन्तयामि । शार्दूलविक्रीडितं वृत्तम् ॥ ९० ॥

ताम्बूलेति । ताम्बूलानि पानकानि पानीयानि मनोहरमोदकादीनि च तैः रम्ये सुसज्जिते इति यावत् तथा लसत् विराजत् मृदुलाः कोमलाः पल्लवाः यस्मिन् तादृशं मृदुपल्लवरचितमिति यावत् चारु मनोज्ञं यत् तल्पं शयनं, तल्पं शय्याट्टदारेष्वित्यमरः । तस्मिन् सुहृदौ प्रणयिनौ राधाकृष्णाविति शेषः अवेक्ष्य दृष्ट्वा स्थिताविति शेषः दूरे स्थिताः अलयः भ्रमराः येभ्यः तथाभूतैः विहरतोस्तयो-

क्वचिद्रतिविमर्दितप्रसवतल्पकैः कुत्रचित्
क्वचिद्रतोपकरणान्वितप्रियमृदुप्रसूनास्तरैः ।
क्वचित् प्रमदराधिकामधुपतिप्रवृत्तोत्सवैः
सदा नवनिकुञ्जकैः स्मर सुमञ्जु वृन्दावनम् ॥ ९२ ॥

राधाकृष्णरहःसुहृत्क्षितिधरस्योपत्यकासु स्फुर-
न्नानाकेलिनिकुञ्जवीथिषु नवोन्मीलत्कदम्बादिषु ।
भ्रामं भ्राममहर्निशं ननु परं श्रीवासकेलिस्थली-
रम्याण्येव कदा प्रकाशितरहःप्रेमा भवेयं कृती ॥ ९३ ॥

स्पर्शाविष्टयेन लज्जासम्भव इत्याशङ्कोति भावः निकुञ्जकैः मनोज्ञं मनोहरं वृन्दावनं स्मर चिन्तय । वसन्ततिलकं वृत्तम् ॥ ९१ ॥

क्वचिदिति । क्वचित् रत्या सुरतेन विमर्दितं प्रसवतल्पकं निकुञ्ज-पल्लवशयनं येषां तैः, कुत्रचित् रतस्य उपकरणेन ताम्बूलचन्दनादि-नेति भावः अन्विताः प्रियाः मृदवः कोमलाः प्रसूनान्येव पुष्पाण्येव आस्तराः आस्तरणानि येषु तैः, क्वचित् प्रमदयोः प्रोन्मत्तोः राधिकामधुपत्योः राधाकृष्णयोः प्रवृत्तः आरब्धः उत्सवः येषु तैः नवनिकुञ्जकैः सुमञ्जु सुमधुरं वृन्दावनं सदा स्मर । पृथ्वीवृत्तम् ॥ ९२ ॥

राधेति । कदाहं स्फुरन्त्यः विराजन्त्यः नानाकेलिनिकुञ्जवीथयः यासु तथोक्तासु नवम् उन्मीलन्तः कदम्बादयः यासु तथाविधासु राधाकृष्णयोः रहःसुहृत् रहस्यबन्धुः क्षितिधरः पर्वतः गोवर्द्धन इति भावः तस्य उपत्यकासु आसन्नभूमिषु, उपत्यकाद्रेरासन्नभूमि-रित्यमरः । परं केवलं श्रीवासस्य कृष्णस्य केलिस्थलीरम्याणि क्रीडा-प्रदेशरूपमनोहराणि स्थानानीति शेषः अहर्निशं दिवारात्रं भ्रामं भ्रामं भ्रान्त्वा भ्रान्त्वा प्रकाशितम् उद्भावितं रहःप्रेम आन्तरं प्रेम येन तथाभूतः सन् कृती कृतार्थः भवेयम् । नन्विति सम्बोधनपरम् । शार्दूलविक्रीडितं वृत्तम् ॥ ९३ ॥

अलं चयिसुदुःखदैर्युवतिपुत्रवित्तादिकैः
विमुक्तिकथयाप्यलं मम मनो विकुण्ठप्रिये।
परं त्विह भवे भवेत् समसम्मानमानव्यथं
व्रजेन्द्रतनयो वने लसति यत्र तस्मिन् रतिः॥८४॥

नमामि वृन्दावनमेव मूर्ध्ना वदामि वृन्दावनमेव वाचा।
स्मरामि वृन्दावनमेव बुद्ध्या वृन्दावनादन्यदहं न जाने॥८५॥

राधापतिरतिकन्दं वृन्दावनमेव जीवनं येषाम्।
तच्चरणाम्बुजरेणोराशामेवाहमाशासे॥८६॥

शृण्वन्ति शुकसारिकाः शुचरितानि राधापते-
स्तदेकपरितुष्टये तरुलताः सदोत्फुल्लिताः।

अलमिति। चयिभिः विनश्वरैः सुदुःखदैः युवतिपुत्रवित्तादिकैः स्त्रीपुत्रधनादिभिः अलं न किमपि प्रयोजनमित्यर्थः। विमुक्तिकथया मोक्षचर्चयापि अलं न किमपि प्रयोजनमित्यर्थः। इह भवे संसारे समसम्मानमानव्यथं मानापमानव्यथासु सममित्यर्थः अविकृतमिति भावः मम मनः परं केवलं व्रजेन्द्रतनयः कृष्णः यत्र लसति विहरति तस्मिन् विकुण्ठप्रिये कृष्णवल्लभे वने वृन्दावने इत्यर्थः रतिः अनुरागः भवेत् अस्तु। पृथ्वीवृत्तम्॥८४॥

नमामीति। वृन्दावनमेव मूर्ध्ना शिरसा नमामि, वृन्दावनमेव वाचा वदामि, वृन्दावनमेव बुद्ध्या स्मरामि, अहं वृन्दावनात् अन्यत् वस्तु न जाने। उपजातिवृत्तम्॥८५॥

राधेति। येषां राधापतेः कृष्णस्य रतिकन्दं रतेर्मूलं रतिचेतनमिति भावः वृन्दावनमेव जीवनम्, अहं तेषां चरणाम्बुजरेणोः पादपद्मपरागस्य आशामेव आशासे प्रार्थये। आर्यावृत्तम्॥८६॥

शृण्वन्तीति। यत्र शुकसारिकाः राधापतेः कृष्णस्य शुचरितानि

सरांसि कमलोत्पलादिभिरधुर यत्र श्रियं
तदुत्सवकृते मनः स्मर तदेव वृन्दावनम् ॥ ९७ ॥

नानाकेलिनिकुञ्जमण्डपयुते नानासरोवापिका-
रम्ये गुल्मलताद्रुमैश्च परितो नानाविधैः शोभिते ।
नानाजातिसमुल्लसत्खगमृगैर्नानाविलासस्थली-
प्रद्योतद्युतिरोचिषि प्रिय ! कदा ध्येयोऽसि वृन्दावने ॥ ९८

तत्रैवातिरसोन्मदं विहरते मत्प्रेष्ठवस्तुद्वयं
भक्तिः कापि महारसोत्सवमयी यत्रैव निस्यन्दते ।
यत्रैव प्रविशन्ति नैव निगमश्रेणीगिरां भङ्गय-
स्तस्मिन्नेव ममास्तु धीः प्रणयिनी वृन्दाश्रमे पावने ॥ ९९ ॥

इत्यन्ति, यत्र तरवः लताश्च तदेकपरिवृत्ते तस्यैव राधापतेः परि-तुष्टये सदैव उत्फुल्लिताः विकसिताः, यत्र सरांसि तस्य राधापतेः उत्सवकृते प्रीणनाय कमलोत्पलादिभिः श्रियम् अधुः धारयामासुश्च हे मनः ! तदेव वृन्दावनमेव नान्यदित्येवकारार्थः । स्मर । पृथ्वी-वृत्तम् ॥ ९७ ॥

नानेति । हे प्रिय ! कृष्ण इति भावः, नानाकेलिनिकुञ्जमण्डप-युते विविधक्रीडाकुञ्जमण्डपसमन्विते नानासरोभिर्वापिकाभिर्दीर्घिका-भिश्च रम्ये, परितः समन्तात् नानाजातयः विविधा वर्णाः समुल्ल-सन्तः खगाः पक्षिणः मृगाश्च येषु तैः नानाविधैः गुल्मलताद्रुमैश्च शोभिते, नानाविलासस्थलीनां प्रद्योतस्य प्रकृष्टशोभायाः द्युतिर्दीप्ति-रेव रोचिः कान्तिर्यस्य तादृशे वृन्दावने कदा कस्मिन् काले ध्येयः चिन्तनीयः असि ? शार्दूलविक्रीडितं वृत्तम् ॥ ९७ ॥

यत्रेति । यत्र यस्मिन्नेव मम प्रेष्ठवस्तुद्वयम् अतिप्रियवस्तु-युगलं राधाकृष्णाविति भावः अतिरसेन अतिप्रेम्णा उन्मदम् उत्-कटमदनं यथा तथा विहरते क्रीडति, यत्रैव कापि अनिर्वचनीया

वाण्या गद्गदया कदा मधुपतेर्नामानि सङ्कीर्त्तये
धाराभिर्नयनाम्भसां तरुतलच्चौणीं कदा पङ्कये।
दृष्ट्या भावनया पुरोमिलदिव स्वान्तैकभोग्यं महो-
द्वन्द्वं हेमहरिन्मणिच्छवि कदा नंस्ये मुहुर्विह्वलः ॥१००॥
वृन्दारण्यनिकुञ्जसीमनि वसन् प्रेमान्तरश्चिन्तयन्
स्वप्राणैकधनं किशोरमिथुनं द्रक्ष्याम्यकस्मात् कदा।
श्यामाः काश्चन चन्द्रिका रसमयी गौरीश्च काश्चिच्छटाः
पश्यामि शृणुयाञ्च गीतमधुराः काश्चिन्मिथोवाक्सुधाः ॥१०१॥

महारम्भेन महता प्रेम्णा ऊनुत्तमयो भक्तिः अनुरागः निस्यन्दते स्रवति, यत्रैव निगमस्त्रोगिराम् उपनिषद्वाक्यानां अङ्कयः आशयविशेषा इति भावः नैव प्रविशन्ति, तस्मिन्नेव पावने वृन्दावने मम धीः बुद्धिः पर्य्यायनी अस्तु भवतु। शार्दूलविक्रीडितं वृत्तम् ॥ ९९ ॥

वाण्येति। कदा गद्गदया वाण्या वाचा मधुपतेः कृष्णस्य नामानि सङ्कीर्त्तये सम्यक् कीर्त्तयामि, कदा नयनाम्भसाम् अश्रूणां धाराभिः तरुतलच्चौणीं दूनतलभूमिं पङ्कये पङ्कीकरोमि, कदा विह्वलः प्रेम-विवशः सन् दृष्ट्या तत्तद्वृन्दावनवस्तुनामिति शेषः भावनया चिन्तनेन पुरः अग्रतः मिलदिव वर्त्तमानमिव स्वान्तैकभोग्यं मनोमात्रवेद्यं हेमहरिन्मणिच्छवि काञ्चननीलमणिप्रभं महोद्वन्द्वं ज्योतिर्युगलं राधाकृष्णाविति भावः मुहुः पुनः पुनः नंस्ये प्रणंस्ये। शार्दूल-विक्रीडितं वृत्तम् ॥ १०० ॥

वृन्दारण्येति। कदा वृन्दारण्यनिकुञ्जसीमनि वसन् प्रेम अन्तरे अस्य तथाभूतः चिन्तयन् अकस्मात् सहसा स्वप्राणैकधनं निजजीवनस्य एकमद्वितीयं धनं किशोरमिथुनं राधाकृष्णाविति यावत् द्रक्ष्यामि, तथा कदा काश्चन श्यामाः श्यामवर्णाः चन्द्रिकाः कान्तीरिति

वृन्दारण्ये कमपि जनतादुःप्रवेशं प्रदेशं
गत्वा पद्यैर्निजदयितयोर्नाम जल्पन्नुदस्रुः ।
अत्यन्तार्त्त्या विकलविकलो दिव्यमूर्त्त्यैकयापि
श्रीश्वर्य्याज्ञाकरमृगदृशा वाक्सुधाश्वासितः स्याम् ॥१०२

एतत् कारुण्यपुञ्जं प्रतिदिनकलितस्वाश्रयप्रौढिराधा-
कृष्णाङ्घ्रिद्वन्द्वगूढप्रणयमयरसास्वादितं साधुदृष्टम् ।
श्रीमद्वृन्दावनं मे निजमहितपराकारिरूपेण सान्द्रा-
नन्दौघस्यन्दिवर्षोच्चलितमधुरिमैकार्णवेनाविरास्ताम् ॥१०३॥

यावत् काश्चित् रसमयीः प्रेमप्रचुराः गौरीः गौरवर्णाः छटाः प्रभाश्च पश्यामि, काश्चित् शीतमधुराः सौम्यमनोहारिणीः मिथः परस्परं वाक्सुधाः वचनामृतानि शृणुयाञ्च । शार्दूलविक्रीडितं वृत्तम् ॥१०१॥

वृन्दारण्ये इति । कदा वृन्दारण्ये कमपि जनताभिः लोकसमूहैः दुःप्रवेशम् अगम्यं प्रदेशं गत्वा पद्यैः श्लोकैः उदस्रुः उद्गतानन्दवाष्पः निजदयितयोः स्वप्रिययोः राधाकृष्णयोरिति भावः नाम जल्पन् कीर्त्तयन् अत्यन्तार्त्त्या अतिश्रमेण विकलविकलः अतिविह्वल इत्यर्थः एकयापि दिव्यमूर्त्त्या श्रीश्वर्य्याः राधायाः आज्ञाकरमृगदृशा दास्या इत्यर्थः वाक्सुधया वचनामृतेन आश्वसितः स्याम् ? भवेयम् ? श्रीमत्याः कयाचित् किङ्कर्य्यापि यदि अहं समाश्वास्ये तदपि अहं कृतार्थो भवेयमिति भावः । मन्दाक्रान्तावृत्तम् ॥ १०२ ॥

एतदिति । एतत् कारुण्यपुञ्जं दयामयमिति भावः प्रतिदिनात् कलितेन रचितेन स्वाश्रयेण आवस्थानेन प्रौढिरनुरागातिशयो ययोः तादृशयोः राधाकृष्णयोः यत् अङ्घ्रिद्वन्द्वं चरणयुगलं तत्र गूढः यः प्रणयमयरसः तेन आस्वादितम् अनुभूतं सत् साधु सम्यक् दृष्टं श्रीमत् वृन्दावनं मे मम निजमहितेन अप्रकाशितेन पराकारिरूपेण परमोत्कृष्टरूपेण सान्द्रानन्दानां घनानन्दानाम् ओघाः प्रवाहाः

कदा सुदृढभावनोदितनिजेष्टकृपायुतो
मनागपि शरीरके न हि रसे प्रविष्टोऽद्भुते।
क्षणं किमु मुहूर्त्तकं किमथवाहमेवास्थितो
बहिर्दृगपि मुग्धवद् बहु चरामि वृन्दावने ॥१०४॥

नान्यद्वदामि न शृणोमि न चिन्तयामि
नान्यद्व्रजामि न भजामि न चाश्रयामि।
पश्यामि जाग्रति तथा स्वपनेऽपि नान्यत्
श्रीराधिकारतिविनोदवनं विनाहम् ॥१०५॥

वृन्दात्ने यस्मात् तादृशः वपोच्छलितः वेलापोच्छलितः यः मधुरिमा एव एकार्णवः अद्वितीयसागरः तेन आविरास्ताम् आविर्भवतु घना-नन्दरूपेण स्फुरत्विति यावत्। स्रग्धरावृत्तम् ॥१०३॥

कदेति। कदाहं सुदृढया एकाग्रयेत्यर्थः भावनया उदिता निजेष्टस्य स्वाभीष्टस्य कृष्णस्येत्यर्थः या कृपा तद्युतः कृष्णानुकम्पित इति भावः मनागपि अल्पमपि शरीरके शारीरके अद्भुते विचित्रे रसे रागे न हि प्रविष्टः शारीरसुखनिस्पृह इति यावत् क्षणं किमु अथवा मुहूर्त्तकं किं बहिर्दृगपि बाह्यदृष्टिरपि मुग्धवत् मुग्धः क्षिप्तः तद्वत् आस्थितः एकतानवस्थानः वृन्दावने बहु चरामि पर्य्यटामि ? पृथ्वीवृत्तम् ॥१०४॥

नान्यदिति। अहं श्रीराधिकायाः रतिविनोदवनं क्रीडोद्यानं वृन्दावनमित्यर्थः विना अन्यत् न वदामि, न शृणोमि, न चिन्तयामि, अन्यत् स्थानमिति शेषः न व्रजामि न गच्छामि, न भजामि अन्यं देवमिति शेषः, न च आश्रयामि अन्यं जनमिति शेषः, जाग्रति जागरणावस्थायां तथा स्वपनेऽपि अन्यत् न पश्यामि। वसन्ततिलकं वृत्तम् ॥१०५॥

किं मां खेदयसे विमुच्च वसनं तल्पोत्तमेऽस्मिन् सुखे-
नागत्य स्वपिहि त्यज त्यज भुजं श्लिष्यामि कान्ते! सकृत्।
आः किं निर्दय! मुच्च मुच्च न किमप्यापीडये राधिका-
कृष्णालापमिमं कदा नु शृणुयां वृन्दाटवीकीरतः॥१०६॥

कदा वा स्वच्छन्दं दिनरजनि वृन्दावनवने
चरन्नेकान्ते स्वस्तुतनवनिकुञ्जानि प्रविशन्।
अकस्मादेवासौ किरमधुरकैशोरसुधया
इतो न त्वं याया इति मृदुगिरा वारयति माम्॥१०७॥
कदा वा तूष्णीकः शिथिलितसमस्तव्यवहृतिः
त्यजन् दीर्घश्वासं कथमपि गृहीतैककवलः।

किमिति। मां किं कथं खेदयसे विरञ्जयसीत्यर्थः, वसनं वस्त्रं विमुच्च त्यज, अस्मिन् तल्पोत्तमे उत्तमशय्यायां सुखेन आगत्य स्वपिहि, भुजं हस्तं त्यज त्यज मुच्च मुच्च, हे कान्ते! सकृत् एकवारं श्लिष्यामि आलिङ्गामि, आः विरक्तातिशयसूचकमव्ययं हे निर्दय! मुच्च मुच्च, न किमपि आपीडये न क्लेशयामि इमम् इत्थं राधिका-कृष्णयोः आलापम् अन्योन्यकथनं कदा वृन्दाटवीकीरतः वृन्दावन-शुकात् शृणुयाम्, नु वितर्के। शार्दूलविक्रीडितं वृत्तम्॥१०६॥

कदेति। कदा वा दिनरजनि दिवारात्रं वृन्दावनवने वृन्दा-वनाख्ये वने स्वच्छन्दं चरन् एकान्ते विजने स्वस्तुतानि स्वाभिलषि-तानि नवनिकुञ्जानि प्रविशन् असौ कृष्ण इति शेषः अकस्मात् एव किरवत् शुकवत् मधुरा कैशोरे कौमारे सुधेव अमृतमिव तया इतः अत्र त्वं न यायाः नागच्छ इति मृदुगिरा कोमलवचसा मां वारयति निषेधयति। शिखरिणीवृत्तम्॥१०७॥

कदेति। कदा वा वृन्दावनभुवि तूष्णीकः मौनव्रती शिथिलिता

सदा जाग्रत्प्रायः क्षणमुदिततन्द्रोऽतिमधुरं
तदालोके वृन्दावनभुवि निजप्राणमिथुनम् ॥ १०८ ॥
अकस्मादेकस्मान्नवललितकुञ्जादिह बहिः
भवत् स्मित्वा नव्यं तरुणमिथुनं लौकिकमिव ।
गतं दूरं दृष्ट्वा पुनरथ निवृत्य स्वदयितौ
वितर्क्य स्यां वृन्दावनभुवि महाप्रेमविकलः ॥ १०९ ॥
कदा पूर्णज्योत्स्नाधवलरजनौ वासवलये
नवन्ते को वृन्दावनरतिविलासस्मृतिपरः ।

[illegible]ति यावत् समस्ता व्यवहृतिः व्यवहारः अमीति यावत् येन [illegible]ः, [illegible] त्यजन् कथमपि गृहीतम् एकं कवलं ग्रासो [illegible] तथाभूतः यदृच्छाकृद्भोजीत्यर्थः सदा सततं जाग्रत्प्रायः प्रायेण जागरितलक्षण् क्षणम् उदिता उपस्थिता तन्द्रा निद्राविशेषो यस्य तथाभूतः सन् अतिमधुरं तत् निजप्राणमिथुनं स्वजीवितभूतं युगलं राधाकृष्णाविति भावः आलोके पश्यामि ? शिखरिणीवृत्तम् ॥ १०८ ॥

[illegible]दिति । [illegible] [illegible] [illegible] एकस्मात् नवललितकुञ्जात् अभिनवमनोज्ञनिकुञ्जात् स्मित्वा [illegible] हास्यं कृत्वा बहिः भवत् लौकिकमिव सामान्यमिव अलौकिकमपीति भावः नव्यं नवीनं तरुणमिथुनं युवयुगलं राधाकृष्णाविति भावः दृष्ट्वा दूरं गतः अथ अनन्तरं निवृत्य पुनः स्वदयितौ निजवल्लभौ राधाकृष्णाविति भावः वितर्क्य निरूप्य महता प्रेम्णा भक्तिरसेन विकलः [illegible] स्याम् भवेयम । [illegible] । शिखरिणीवृत्तम् ॥१०९॥

कदेति [illegible] पूर्णा [illegible] [illegible] [illegible]

[illegible] [illegible] [illegible] सूत्रार्थः ।

अकस्मादानन्दाम्बुधिलहरिकोलाहलमिव
ध्वनिं दिव्यं वेणोर्वलयरसनादेश्च शृणुयाम् ॥ ११० ॥
कदा वा कस्यापि स्फुटनवकदम्बस्य विटपे
स्फुरद्गोपीभर्त्तुः किमपि कवये स्मेरवदनम् ।
कदा श्रीराधायाः कुसुमचयलीलाञ्चललितं
करं वृक्षे वृन्दावनभुवि लतासु क्वचिदपि ॥ १११ ॥
इदं वा किं भावि स्रुतकनकगौरच्छवि हरि-
न्मणिश्यामं धामद्वयमिह मिथो मेऽर्पितभुजम् ।
निरीक्षे यत् स्मेरं बहुविभ्रमहाप्रेमविहृति
स्थितं पश्चाच्छायाद्वयमथ पुरो मूर्च्छयति माम् ॥११२॥

एकः एकाकी चरन् वृन्दावने यः रतिविलासः सुरतविभ्रमः तस्य स्मृतिपरः स्मरणतत्परः सन् अकस्मात् आनन्दाम्बुधेः आनन्दसागरस्य लहरेस्तरङ्गस्य कोलाहलमिव कलरवमिव वेणोः मुरल्याः वलयरसनादेश्च करभूषणकटिभूषणादेश्च दिव्यं ध्वनिं शृणुयाम् ? शिखरिणीवृत्तम् ॥ ११० ॥

कदेति । कदा वा वृन्दावनभुवि कस्यापि स्फुटस्य विकसितस्य नवकदम्बस्य विटपे शाखायां स्फुरन् विराजन् यः गोपीभर्त्ता कृष्णः तस्य किमपि अनिर्वचनीयं स्मेरवदनं सहास्यं मुखं कदा वा क्वचिदपि वृक्षे लतासु च श्रीराधायाः कुसुमानां पुष्पाणां चये यः लीलया विलासविशेषेण अञ्चः प्रसारणमिति यावत् तेन ललितं सुन्दरं करं कवये पश्यामि ? । शिखरिणीवृत्तम् ॥ १११ ॥

इदमिति । स्रुतं सन्तापात् विगलितं यत् कनकं काञ्चनं तद्वत् गौरी छविः कान्तिर्यस्य तत् तथा हरिन्मणिश्यामं मरकतश्यामलं मिथः अन्योन्यम् अर्पितभुजं धृतहस्तम् इदं धामद्वयं ज्योतिर्युगलं

महाश्चर्यानन्तस्वमहिमबलादेव सकला-
धमस्याप्याशानां व्यतिकरमसम्भाव्यमपि मे ।
कदा वृन्दारण्यं स्ववसतिकथामात्रनिवहत्-
कृपापूरं सम्पूरयतु परतोऽप्यर्बुदजनेः ॥ ११५ ॥
स्वकर्मस्रोतोभिः सततमभितश्चालितममुं
प्रभो ! जीवं यत्र क्वचिदपि नयात्यन्तविवशम् ।
परन्त्वेतावन्मे भवतु भवदुःखार्दिततनो-
रविश्रान्तं वृन्दावनपदपरैवास्तु रसना ॥ ११६ ॥

निद्रागतं तत् प्रेष्ठमिथुनं प्रियतमयुगलं राधाकृष्णाविति भावः स्वप्ने-ऽपि मुदा आनन्देन किं पश्यामि, अत्र ह अत्यौत्सुक्यसूचकमव्ययम् । शिखरिणीवृत्तम् ॥ ११४ ॥

महेति । स्वस्मिन् वसतिमात्रेण निवासमात्रेण निवहन् उद्यच्छन् कृपापूरः दयाराशिः यस्य तथाभूतम् आश्रितकृपालुमिति भावः वृन्दारण्यं कदा सकलाधमस्यापि सर्वेभ्यो निकृष्टस्यापि मे मम असम्भाव्यमपि दुर्घटमपि आशानां मनोरथानां भगवदनुकरणादिरूपाणामिति भावः व्यतिकरं समूहं महान् आश्चर्यः अनन्तः यः स्वमहिमा निजमाहात्म्यं तद्बलादेव तत्प्रभावादेव अर्बुदजनेः अर्बुदसंख्यकजन्मनः परतः अपि सम्पूरयतु सम्यक् सफलयतु । शिखरिणीवृत्तम् ॥ ११५ ॥

स्वकर्मेति । हे प्रभो ! स्वस्य कर्मणां स्रोतोभिः प्रवाहैः गतिभिरिति यावत् सततम् अभितः सर्वतः चालितं व्यापारितम् अमुं जीवम् अन्तर्विवशं नानायोनिषु अतएव यत्र क्वचिदपि नय प्रेषय, परन्तु भवदुःखेन संसारक्लेशेन अर्दिततनोः पीड़ितशरीरस्य मे मम एतावत् भवतु, यत् रसना जिह्वा अविश्रान्तम् अविरतं वृन्दावनमेव पदं तस्मिन् परैव वृन्दावनशब्दोच्चारणतत्परैव अस्तु भवतु । शिखरिणीवृत्तम् ॥ ११६ ॥

न सत्याख्ये लोके स्पृहयति मनो ब्रह्मपदवीं
न वैकुण्ठे विष्णोरपि मृगयते पार्षदतनुम् ।
परं श्रीवृन्दावनसरसभावोत्सवरतं
निवासे धन्यानां सुबहुकृमिजन्मापि मनुते ॥ ११७

श्रीमद्वृन्दाविपिनकुसुमामोदवाही समीरो
यस्मिन् देशे सरति तदवच्छिन्नकृष्णाप्लुतो वा ।
येषां वृन्दावनमनु सकृद्ग्रीवया सन्नतं वा
तत्रैवास्तां मम खलु जनिर्हन्त तेषां गृहेऽपि ॥११८॥

ममापि स्यादेतादृशमपि दिनं किन्नु परम
यदा वृन्दाटव्याः कथमपि कृतस्पर्शनमपि ।

नेति । धन्यानां मनः सत्याख्ये लोके भुवने ब्रह्मपदवीं ब्रह्मपदं न स्पृहयति न कामयते, तथा वैकुण्ठे विष्णोर्नारायणस्यापि पार्षदतनुं परिचारकशरीरं न मृगयते न प्रार्थयते, परं श्रीवृन्दावने यः सरसभावः सप्रेमभावः तेन यः उत्सवः आनन्दः तत्र रतं सुबहुकृमिजन्मापि निवासे निवासार्थं वृन्दावने इति शेषः मनुते आकाङ्क्षति । शिखरिणीवृत्तम् ॥ ११७ ॥

श्रीमदिति । यस्मिन् देशे श्रीमतः वृन्दाविपिनस्य वृन्दावनस्य कुसुमामोदवाही कुसुमसौरभवाहः तदवच्छिन्नकृष्णाप्लुतः तद्वासिकृष्णादेहसंश्लिष्टो वा समीरः पवनः सरति वहति, तत्रैव तथा येषां वा वृन्दावनम् अनु प्रतीत्यर्थः सकृत् ग्रीवया सन्नतं शिरो नतमिति यावत् तेषां गृहेऽपि मम जनिः जन्म आस्तां खलु भवत्वेव, हन्तेत्यतिशयभक्तिव्यञ्जकमव्ययम् । मन्दाक्रान्तावृत्तम् ॥ ११८ ॥

ममापीति । ममापि एतादृशं परमम् उत्कृष्टं दिनं किं नु स्यात् अपि, भवेत् किम् ? यदा यस्मिन् दिने वृन्दाटव्याः कथमपि कृत-

अहो देहं दूरादपि समवलोक्यापि जनुषां
मुहुर्धन्यं मन्ये धरणिपतितः स्यां कृतनतिः ॥११९॥
यदपि च मम नास्ति श्रीलवृन्दावनीये
महिमनि न समोऽहं हन्त विश्वासगन्धः ।
यदपि मम न तस्मिन्नास्ति वासैषणापि
प्रसरतु मम तादृश्येव वाणी तथापि ॥ १२० ॥
अचैतन्यप्रायं जगदिदमहो सर्वविदपि
प्रथीयः श्रीवृन्दावनमहिमबीजं जनिमति ।
अहो भ्राम्यं दृष्ट्वा विविधसदसत्कर्मसु तथा
न पूर्णं स्याच्चित्तं परमिह निषेवे पदरजः ॥ १२१ ॥

स्थानमपि देहं दूरादपि समवलोक्यापि जनुषां जन्मनां मुहुः पौनःपौन्यं धन्यं कृतार्थं मन्ये तथा धरणिपतितः कृतनतिः कृतप्रणामः स्याम् भवेयम् अहो आश्चर्यम् । शिखरिणीवृत्तम् ॥११९॥

यदपीति । यदपि यद्यपि मम वृन्दावनीये महिमनि माहात्म्ये सम्पूर्णे इति शेषः विश्वासगन्धः प्रत्ययलेशः न अस्ति, यदपि च मम अहं महिमनि अपि न विश्वासगन्धः अस्ति, हन्त खेदे, यदपि यद्यपि मम तस्मिन् वृन्दावने वासैषणा वासकामनापि नास्ति न भवति तथापि मम तादृशी वासेच्छाविधायिनीति भावः वाणी वाक् प्रसरतु स्फुरतु वृन्दावने वसामीत्येवं सततं मम रसना वदत्विति भावः । मालिनीवृत्तं, ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ॥ १२० ॥

अचैतन्यमिति । अहो आश्चर्यं जगत् सर्वविदपि सर्वं जानदपि अचैतन्यप्रायं प्रायेण चैतन्यरहितम् । श्रीवृन्दावनस्य महिमबीजं माहात्म्यमूलं जनिमति जन्मनि प्राप्नोतीति यावत् प्रथीयः अतिप्रसिद्धमित्यर्थः । अहो आश्चर्यं चित्तं विविधेषु सदसद्वर्त्मसु सद्

हा वृन्दावन ! हा महारसमय ! प्रेमैकसम्पन्निधे !
हा राधापतिनागर ! स्मरकलासाक्षिन् ! मदेकप्रिय ! ।
हा रासेश्वर ! विश्वमूर्च्छन ! लतावल्लीखगाद्यद्भुत-
श्रीमन्नाप्रकृते ! परादपि पर ! त्वं मे गतिस्त्वं गतिः ॥ १२२ ॥

नमोऽस्तु वृन्दावनसुन्दराभ्यां
नमोऽस्तु वृन्दावनविभ्रमाभ्याम् ।
नमोऽस्तु वृन्दावनजीवनाभ्यां
नमोऽस्तु वृन्दावननागराभ्याम् ॥ १२३ ॥
नमोऽस्तु वृन्दावनसत्कृपाभ्यां

सन्मार्गेषु भ्राम्यं यत् तथा पूर्णं परिदृष्टं न स्यात् एतत् द्वया अहं परं केवलम् इह वृन्दावने पदरजः कण्णस्येति शेषः निषेवे आराधयामि । शिखरिणीवृत्तम् ॥ १२१ ॥

हा वृन्दावनेति । हा वृन्दावन ! हा महारसमय ! प्रेमैकसम्पदां निधे ! आश्रय ! हा राधापतिनागर ! हे स्मरकलासाक्षिन् ! मदेकप्रिय ! ममैकाभीष्टदेव ! हा रासेश्वर ! विश्वमूर्च्छन ! जगन्मोहन ! लतावल्ली लताराजी खगादयः पश्वादयश्च ये अद्भुताः पदार्थाः वृन्दावनीया इति भावः तेषां श्रीमन् शोभाधायक ! अप्रकृते ! प्रकृत्यतिरिक्त ! हे परादपि पर ! परात्पर इति यावत् त्वं मे मम गतिः आश्रयः । शार्दूलविक्रीडितं वृत्तम् ॥ १२२ ॥

नम इति । वृन्दावनसुन्दराभ्यां राधाकृष्णाभ्यां नमः अस्तु, वृन्दावनविभ्रमाभ्यां वृन्दावनविलासिभ्यां नमोऽस्तु, वृन्दावनजीवनाभ्यां नमोऽस्तु, वृन्दावननागराभ्यां नमोऽस्तु । उपेन्द्रवज्रावृत्तम् ॥ १२२ ॥

नम इति । वृन्दावने सती वर्त्तमाना कृपा ययोस्ताभ्यां

नमोऽस्तु वृन्दावनसङ्गमाभ्याम् ।
नमोऽस्तु वृन्दावनपूर्णताभ्यां
नमोऽस्तु वृन्दावनगोचराभ्याम् ॥ १२४ ॥

वृन्दारण्योत्तमं नास्ति नास्ति मत्तोऽधमः क्वचित् ।
राधानाम्नः प्रभावेण यदि स्यान्मिलनं तयोः ॥ १२५ ॥

श्रीमवद्वृन्दावनेश्वर्याः सकृन्नामैकमङ्गलम् ।
सर्वाश्चर्य्यानन्तशक्ति मुखे विजयतां मम ॥ १२६ ॥

इति श्रीवृन्दावनशतकं समाप्तम् ॥

---

राधाकृष्णाभ्यां नमोऽस्तु, वृन्दावने धन् वर्त्तमानः रसोऽनुरागो ययोः तादृशाभ्यां नमोऽस्तु, वृन्दावने पूर्णता परिपूर्णस्वभावो ययोः तादृशाभ्यां नमोऽस्तु, वृन्दावनगोचराभ्यां वृन्दावनदृष्टिगोचराभ्यां नमोऽस्तु । उपेन्द्रवज्राहृत्तम् ॥ १२४ ॥

वृन्दारण्येति । वृन्दारण्यात् उत्तमं यस्त्विति शेषः न अस्ति, मत्तः मदपेक्षयेत्यर्थः अधमः क्वचित् नास्ति, राधानाम्नः प्रभावेण महिम्ना यदि तयोः वृन्दारण्याधमयोः मेलनं सङ्गः स्यात् । अनुष्टुब्-वृत्तम् ॥ १२५ ॥

श्रीमदिति । श्रीमत्याः वृन्दावनेश्वर्याः राधायाः सर्वेभ्यः आश्चर्य्येभ्यः अनन्ता शक्तिः सामर्थ्यं यस्य तादृशम् एकमङ्गलम् अद्वितीय-मङ्गलस्वरूपं मम मुखे सकृत् एकवारमुच्चरितं नाम विजयतां सर्वोत्कर्षेण वर्त्तताम् । अनुष्टुब्वृत्तम् ॥ १२६ ॥

इति बि, ए, उपाधिधारिणा श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण विरचिता वृन्दावनशतकव्याख्या समाप्ता ।

# चाणक्यशतकम् ।



नानाशास्त्रोद्धृतं वक्ष्ये राजनीतिसमुच्चयम् ।
सर्वबीजमिदं शास्त्रं चाणक्यं सारसंग्रहम् ॥ १ ॥

मूलसूत्रं प्रवक्ष्यामि चाणक्येन यथोदितम् ।
यस्य विज्ञानमात्रेण मूर्खो भवति पण्डितः ॥ २ ॥

विद्वत्त्वञ्च नृपत्वञ्च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥ ३ ॥

नानेति । नाना विविधानि शास्त्राणि नानाशास्त्राणि तेभ्यः उद्धृतम् आहृतं राज्ञां नीतयः राजनीतयः राजकर्त्तव्याकर्त्तव्यशासनानि तेषां समुच्चयः संग्रहः यस्मिन् तथोक्तं सर्वेषां शास्त्राणामिति भावः बीजं निदानं सारस्य शास्त्रप्रतिपाद्यविषयस्य संग्रहः सम्यक् ग्रहणं यस्मिन् तथाभूतम् इदं चाणक्यस्य इदं चाणक्यं चाणक्यपण्डितप्रणीतमित्यर्थः स्वार्थे ष्णप्रत्ययः । शिष्यते उपदिश्यते अस्मिन् इति शास्त्रम् उपदेशग्रन्थमित्यर्थः वक्ष्ये कथयिष्यामि ॥ १ ॥

मूलेति । चाणक्येन यथा उदितम् उक्तं मूलसूत्रं मूलं निदानं ज्ञानस्येति शेषः तस्य सूत्रं सूचकवचनमित्यर्थः प्रवक्ष्यामि प्रकर्षेण कथयिष्यामि । यस्य मूलसूत्रस्य विज्ञानमात्रेण बोधमात्रेण मूर्खो जनः पण्डितः प्राज्ञः भवति ॥ २ ॥

विद्वत्त्वमिति । विद्वत्त्वं पाण्डित्यञ्च नृपत्वं राजत्वं च कदाचन तुल्यं समं नैव भवतीति शेषः, यतः राजा स्वदेशे स्वाधिकृतदेशे एव न त्वन्यदेशे इत्येवशब्दार्थः पूज्यते आद्रियते, विद्वान् पण्डितः [illegible]

पण्डिते च गुणाः सर्वे मूर्खे दोषा हि केवलम् ।
तस्मान्मूर्खसहस्रेषु प्राज्ञ एको विशिष्यते ॥ ४ ॥

मातृवत् परदारेषु परद्रव्येषु लोष्ट्रवत् ।
आत्मवत् सर्वभूतेषु यः पश्यति स पण्डितः ॥ ५ ॥

किं कुलेन विशालेन गुणहीनस्तु यो नरः ।
अकुलीनोऽपि शास्त्रज्ञो दैवतैरपि पूज्यते ॥ ६ ॥

रूपयौवनसम्पन्ना विशालकुलसम्भवाः ।
विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः ॥ ७ ॥

देशे स्वदेशे विदेशे चेत्यर्थः पूज्यते आद्रियते विद्यायाः राजत्वापेक्षया गौरवादिति भावः ॥ २ ॥

पण्डिते इति । पण्डिते विदुषि सर्वे गुणाः दयादाक्षिण्यादयः वर्त्तन्ते इति शेषः मूर्खे केवलं दोषाः परहिंसादयः वर्त्तन्ते इति शेषः । तस्मात् मूर्खाणां सहस्रेषु मध्ये एकः प्राज्ञः पण्डितः विशिष्यते विशेषेण पूज्यते इत्यर्थः ॥ ४ ॥

मातृवदिति । यः परदारेषु परस्त्रीषु मातृवत्, परद्रव्येषु परधनेषु लोष्ट्रवत् मृत्पिण्डवत् । किमधिकेन सर्वाणि भूतानि प्राणिनः तेषु आत्मवत् पश्यति अवलोकयति विचारयतीति भावः सः पण्डितः विद्वान् । सर्वभूतेषु आत्मवद्दर्शनेनैव पूर्वार्द्धवाक्यार्थस्य चरितार्थत्वेऽपि उत्तरार्द्धवाक्यार्थस्य प्रदर्शनार्थमुक्तिरिति बोध्यम् ॥ ५ ॥

किमिति । यो नरः गुणहीनः अविद्वानित्यर्थः तस्य विशालेन महता कुलेन वंशेन किम् ? न किमपि प्रयोजनमित्यर्थः । अकुलीनः नीचकुलोत्पन्नोऽपि जनः शास्त्रज्ञश्चेदिति शेषः दैवतैरपि पूज्यते आद्रियते ॥ ६ ॥

रूपेति । रूपेण सौन्दर्येण यौवनेन च सम्पन्नाः युक्ताः रूपवन्तः युवानश्चेत्यर्थः विशाले महति कुले सम्भवः उत्पत्तिः येषां तथाभूताः

नक्षत्रभूषणं चन्द्रो नारीणां भूषणं पतिः ।
पृथिवीभूषणं राजा विद्या सर्वस्य भूषणम् ॥ ८ ॥
माता शत्रुः पिता वैरी येन बालो न पाठितः ।
न शोभते सभामध्ये हंसमध्ये बको यथा ॥ ९ ॥
वरमेको गुणी पुत्रो न च मूर्खशतैरपि
एकश्चन्द्रस्तमो हन्ति न च तारागणैरपि ॥ १० ॥

महाकुलीना इत्यर्थः जनाः विद्याहीनाश्चेदिति शेषः निर्गन्धाः सौरभ-रहिताः किंशुका इव पलाशा इव शाल्मलीकुसुमानीवेति केचित् न शोभन्ते न विराजन्ते न कैरपि आद्रियन्ते इति भावः ॥ ७ ॥

नक्षत्रेति । चन्द्रः नक्षत्राणां तारकाणां भूषणम् अलङ्कारः चन्द्रेण नक्षत्राणि अलङ्क्रियन्ते इत्यर्थः । पतिः नारीणां भूषणम् अलङ्कारः अपतिना हि नैव शोभन्ते प्रत्युत गतश्रियो भवन्तीति भावः राजा पृथिव्याः भूषणम् अलङ्कारः अराजका पृथ्वी नैव शोभते प्रत्युत गतश्रीरेव भवतीति भावः । विद्या सर्वस्य जनस्य भूषणम् अलङ्कारः अविद्यस्तु नैव शोभते इति भावः ॥ ८ ॥

मातेति । माता जननी शत्रुः पिता च वैरी शत्रुः, येन हेतुना बालः शिशुः न पाठितः न शिक्षितः ताभ्यामिति शेषः बालकानां शिक्षादानविमुखौ मातापितरौ तेषां शत्रू भवत इति फलितार्थः । यतः स बालः हंसानां मध्ये बको यथा सभामध्ये न शोभते ॥ ९ ॥

वरमिति । एको गुणी गुणवान् पुत्रः वरं मनाक्प्रिय इत्यर्थः, देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीबे मनाक्प्रिये इत्यमरः । मूर्खाणां शतै-रपि न च प्रयोजनमिति शेषः मूर्खपुत्रशतमपि निष्प्रयोजनमित्यर्थः । एकः अद्वितीयः चन्द्रः तमः तिमिरं हन्ति नाशयति, ताराणां नक्ष-त्राणां गणैरपि समूहैरपि न च तमः हन्यते इत्यध्याहार्य्यम् ॥ १० ॥

लालयेत् पञ्च वर्षाणि दश वर्षाणि ताड़येत् ।
प्राप्ते तु षोड़शे वर्षे पुत्त्रं मित्रवदाचरेत् ॥ ११ ॥
लालने बहवो दोषास्ताड़ने बहवो गुणाः ।
तस्मात् पुत्त्रञ्च शिष्यञ्च ताड़येन्न तु लालयेत् ॥ १२ ॥
एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना ।
वासितं तद्वनं सर्वं सुपुत्रेण कुलं यथा ॥ १३ ॥
एकेनापि कुवृक्षेण कोटरस्थेन वह्निना ।
दह्यते तद्वनं सर्वं कुपुत्रेण कुलं यथा ॥ १४ ॥
दूरतः शोभते मूर्खो लम्बशाटपटावृतः ।
तावच्च शोभते मूर्खो यावत् किञ्चिन्न भाषते ॥ १५ ॥

लालयेदिति । पञ्च वर्षाणि अत्यन्तयोगे द्वितीया लालयेत् सततं पालयेदित्यर्थः । दश वर्षाणि ताड़येत्, षोड़शे वर्षे प्राप्ते तु मित्रवत् मित्रमिव आचरेत् व्यवहरेत् पुत्रमिति योज्यम् ॥ ११ ॥

लालने इति । लालने सयत्नपालने पञ्चवर्षादिर्ध्वमिति भावः बहवः दोषाः दुर्विनयादयः, ताड़ने बहवः गुणाः विनयादयः जायन्ते इति शेषः । तस्मात् पुत्रं शिष्यञ्च पञ्चादिवर्षोर्द्ध्वमिति भावः ताड़येत् न तु लालयेत् ॥ १२ ॥

एकेनापीति । एकेनापि पुष्पितेन सञ्जातपुष्पेण सुगन्धिना सुवृक्षेण आम्रादिना सुपुत्रेण गुणवत्पुत्रेण कुलं यथा तत् सर्वं वनं वासितं सुरभीकृतम् । सुपुत्रः कुलगौरवकर इति भावः ॥ १३ ॥

एकेनापीति । कुपुत्रेण मूर्खपुत्रेण कुलं यथा एकेनापि कुवृक्षेण कोटरस्थेन वह्निना अग्निना तत् सर्वं वनं दह्यते भस्मीक्रियते । मूर्खपुत्रः कुलध्वंसकर इति भावः ॥ १४ ॥

दूरत इति । लम्बेन आयतेन शाटपटेन वसनावरणेन आवृतः सुपरिच्छद इत्यर्थः मूर्खः दूरतः शोभते । किन्तु स मूर्खः तावत्

विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम् ।
नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि ॥ १६ ॥
उत्सवे व्यसने चैव दुर्भिक्षे शत्रुविग्रहे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥ १७ ॥
परोक्षे कार्य्यहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥ १८ ॥
सकृद् दुष्टञ्च मित्रं यः पुनः सन्धातुमिच्छति ।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ १९ ॥

शोभते सभायामिति शेषः यावत् किञ्चित् न भाषते न वदति । कथनेनैव तस्य मूर्खत्वप्रकाशात् शोभाविरह इति भावः ॥ १५ ॥

विषादिति । अमृतं विषादपि गरलादपि, काञ्चनं स्वर्णम् अमेध्यात् अपवित्रादपि स्थानादित्यर्थः, उत्तमां विद्यां नीचात् निकृष्टजातीयादपि, स्त्रीरत्नं दुष्कुलात् नीचकुलादपि ग्राह्यं ग्रहणीयम् ॥ १६ ॥

उत्सवे इति । यः उत्सवे सम्पदि, व्यसने विपदि, दुर्भिक्षे अन्नाभावसमये इत्यर्थः, शत्रुभिः सह विग्रहे विरोधे, राजद्वारे नृपतिगृहे, श्मशाने शवसत्कारस्थाने च तिष्ठति साहाय्यं करोतीति भावः, स बन्धुरेव बान्धवः । स्वार्थे ष्णप्रत्ययः ॥ १७ ॥

परोक्षे इति । परोक्षे गोपने इति भावः कार्य्यहन्तारं कार्य्यनाशकं प्रत्यक्षे समक्षे प्रियवादिनं जनं वर्जयेत् त्यजेत्, यतः तादृशं तथाभूतं मित्रं सुहृत् पयः क्षीरं मुखे यस्य तादृशं विषकुम्भं विषकलससदृशमित्यर्थः । अत्र कुम्भशब्दो नपुंसक इति बोध्यम् ॥ १८ ॥

सकृदिति । यः सकृत् एकवारं दुष्टं विरुद्धमित्यर्थः मित्रं पुनः सन्धातुं मेलयितुं प्रणयेन सङ्गीतुमिति यावत् इच्छति, सः अश्वतरी कर्कटी गर्भमिव न तु अश्वायां गर्दभेन जाता अश्वतरीत्यर्थ

न विश्वसेदविश्वस्तं मित्रञ्चापि न विश्वसेत् ।
कदाचित् कुपितं मित्रं सर्वदोषं प्रकाशयेत् ॥ २० ॥
जानीयात् प्रेषणे भृत्यान् बान्धवान् व्यसनागमे ।
मित्रञ्चापदि काले च भार्य्याञ्च विभवक्षये ॥ २१ ॥
उपकारगृहीतेन शत्रुणा शत्रुमुद्धरेत् ।
पादलग्नं करस्थेन कण्टकेनेव कण्टकम् ॥ २२ ॥
न कश्चित् कस्यचिन्मित्रं न कश्चित् कस्यचिद्रिपुः ।
कारणेन हि जानाति मित्राणि च रिपूंस्तथा ॥२३॥
दुर्जनः प्रियवादी च नैतद्विश्वासकारणम् ।
मधु तिष्ठति जिह्वाग्रे हृदये तु हलाहलम् ॥ २४ ॥

हृच्यते तस्या मर्भस्य मन्मुकारणत्वेनादर्शनात् अप्रसिद्धेश्चेति बोध्यम् । मृत्युम् उपगृह्णाति आश्रयति ॥ १९ ॥

नेति । अविश्वस्तं जनं न विश्वसेत्, मित्रञ्चापि न विश्वसेत् ; कुपितं मित्रं कदाचित् सर्वदोषं प्रकाशयेत् ॥ २० ॥

जानीयादिति । भृत्यान् दासान् प्रेषणे नियोगे आज्ञापालने इत्यर्थः, बान्धवान् ज्ञातीन् भ्रात्रादीनित्यर्थः व्यसनागमे रोगाद्यभिभवे इत्यर्थः मित्रम् सुहृदम् आपदि भार्य्यां पत्नीं विभवानां सम्पदां क्षये यत्र तादृशे काले च जानीयात् सदसत्त्वेन बुध्येत ॥ २१ ॥

उपकारेति । उपकारेण गृहीतः वशीकृतः तेन शत्रुणा मित्रभूतेनेति भावः शत्रुं करस्थेन कण्टकेन पादलग्नं चरणविद्धं कण्टकमिव उद्धरेत् उत्पाटयेत् ॥ २२ ॥

नेति । कश्चित् जनः कस्यचित् जनस्य मित्रं न, कश्चित् जनः कस्यचित् जनस्य रिपुः शत्रुः न, मित्राणि तथा रिपून् कारणेन व्यवहारेणेति यावत् जानाति जन इति शेषः ॥ २३ ॥

दुर्जन इति । यतः अयं दुर्जनः दुष्टो जनः, अतः प्रियवादी

दुर्जनः परिहर्त्तव्यो विद्ययालङ्कृतोऽपि सः ।
मणिना भूषितः सर्पः किमसौ न भयङ्करः ॥ २५ ॥
सर्पः क्रूरः खलः क्रूरः सर्पात् क्रूरतरः खलः ।
मन्त्रौषधिवशः सर्पः खलः केन निवार्य्यते ॥ २६ ॥
नखिनाञ्च नदीनाञ्च शृङ्गिणां शस्त्रपाणिनाम् ।
विश्वासो नैव कर्त्तव्यः स्त्रीषु राजकुलेषु च ॥ २७ ॥
हस्ती हस्तसहस्रेण शतहस्तेन वाजिनः ।
शृङ्गिणो दशहस्तेन स्थानत्यागेन दुर्जनः ॥ २८ ॥

इत्येतद् विश्वासस्य कारणं न, नैव विश्वसनीय इत्यर्थः । यतः जिह्वाग्रे अस्येति शेषः मधु तिष्ठति, तु किन्तु हृदये अन्तःकरणे हलाहलं विषं तिष्ठतीति शेषः ॥ २४ ॥

दुर्जन इति । यतः दुर्जनः दुष्टो लोकः अतः स विद्यया अलङ्कृतोऽपि भूषितोऽपि परिहर्त्तव्यः परित्याज्यः तत्संसर्गो न विधेय इति भावः । सर्पः मणिना मूर्द्धन्येन रत्नेनेत्यर्थः भूषितः चेदिति शेषः असौ मणिभूषितः सर्पः किं भयङ्करो न अपितु भयङ्कर एवेत्यर्थः ॥२५॥

सर्प इति । सर्पः क्रूरः निष्ठुरः, खलः दुर्जनः क्रूरः निष्ठुरः, किन्तु खलः सर्पात् सर्पमपेक्ष्येत्यर्थः क्रूरतरः अतिशयेन क्रूरः । यतः सर्पः मन्त्रौषधिभ्यां वशः वशीकर्त्तुं शक्य इत्यर्थः, खलः केन निवार्य्यते वशीक्रियते ? न केनापीत्यर्थः ॥ २६ ॥

नखिनाञ्चेति । नखिनां नखायुधानां सिंहव्याघ्रादीनामित्यर्थः नदीनां स्रोतस्वतीनां शृङ्गिणां गोमहिषादीनां शस्त्रपाणिनाम् अस्त्रधारिणाञ्च तथा स्त्रीषु राजकुलेषु च विश्वासः प्रत्ययः नैव कर्त्तव्यः ॥ २७ ॥

हस्तीति । हस्ती हस्तसहस्रेण परिहर्त्तव्य इति शेषः, वाजिनः अश्वाः शतहस्तेन परिहर्त्तव्या इति शेषः, शृङ्गिणः गोमहिषादयः

आपदर्थं धनं रक्षेद् दारान् रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ २९ ॥
परदारं परद्रव्यं परीवादं परस्य च ।
परीहासं गुरोः स्थाने चापल्यञ्च विवर्जयेत् ॥ ३० ॥
त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ ३१ ॥
चलत्येकेन पादेन तिष्ठत्येकेन बुद्धिमान् ।
नासमीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत् ॥ ३२ ॥

इगङ्क्तो न परिहर्त्तव्या इति शेषः, दुर्जनः स्थानत्यागेन सन्निहित-वासत्यागेनेत्यर्थः परिहर्त्तव्य इति शेषः ॥ २८ ॥

आपदर्थमिति । आपदर्थं विपत्पातनिवारणार्थं धनं रक्षेत्, धनैः धनव्ययैरपि दारान् कलत्राणि रक्षेत्, दारैरपि धनैरपि आत्मानं सततं रक्षेत् । आत्मरक्षणे हि सर्वरक्षणं स्यात् यतः आत्मार्थमेव सर्वमिति भावः ॥ २९ ॥

परदारमिति । परदारं परस्त्रियं परद्रव्यं परधनं परस्य अन्यस्य परीवादं निन्दां परीहासम् उपहासञ्च तथा गुरोः पित्रादेः स्थाने सन्निधे चापल्यं प्रागल्भ्यं विवर्जयेत् त्यजेत् ॥ ३० ॥

त्यजेदिति । कुलस्य वंशस्य अर्थे निमित्तं वंशरक्षार्थमित्यर्थः एकं द्रव्यमिति शेषः त्यजेत्, ग्रामस्य ग्रामीणजनसमूहस्येत्यर्थः अर्थे निमित्तं ग्रामरक्षार्थमित्यर्थः कुलं वंशं त्यजेत्, जनपदस्य देशस्य अर्थे देशरक्षार्थमित्यर्थः ग्रामम्, आत्मार्थे स्वरक्षार्थमित्यर्थः पृथिवीं त्यजेत् ॥ ३१ ॥

चलतीति । बुद्धिमान् जनः एकेन पादेन चलति तथा एकेन अपरेणेत्यर्थः पादेन तिष्ठति स्थानस्य त्यागमत्यागञ्च विवेचयतीति

लुब्धमर्थेन गृह्णीयात् क्रुद्धमञ्जलिकर्मणा ।
मूर्खं छन्दोऽनुवृत्तेन तथा तथ्येन पण्डितम् ॥ ३३ ॥

अर्थनाशं मनस्तापं गृहे दुश्चरितानि च ।
वञ्चनञ्चापमानञ्च मतिमान् न प्रकाशयेत् ॥ ३४ ॥

धनधान्यप्रयोगेषु तथा विद्यागमेषु च ।
आहारे व्यवहारे च त्यक्तलज्जः सदा भवेत् ॥ ३५ ॥

धनिनः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः ।
पञ्च यत्र न विद्यन्ते तत्र वासं न कारयेत् ॥ ३६ ॥

भावः । यतः परम् अन्यत् स्थानम् असमीक्ष्य अविचार्य्य सद्भक्त्येति शेषः पूर्व्वम् आयतनं न त्यजेत् ॥ ३२ ॥

लुब्धमिति ।, अर्थेन धनेन लुब्धं जनम्, अञ्जलिकर्मणा प्रणत्या इति भावः क्रुद्धं जनं छन्दोऽनुवृत्तेन छन्दः अभिप्रायः, छन्दोऽभिप्राय आशय इत्यमरः । आशयानुसरणेन अभिप्रायानुरूपकार्य्यकरणेनेत्यर्थः मूर्खं जनं तथा तथ्येन सत्येन पण्डितं ज्ञानिनं जनं गृह्णीयात् वशीकुर्य्यादित्यर्थः ॥ ३३ ॥

अर्थनाशमिति । मतिमान् प्राज्ञः जनः अर्थनाशं धनक्षयं मनस्तापं मनोदुःखं गृहे दुश्चरितानि दुराचरणानि वञ्चनं प्रतारणम्, अपमानञ्च न प्रकाशयेत् प्रकाशने स्वस्यैव अगौरवं स्यादिति भावः ॥ ३४ ॥

धनेति । धनानां धान्यानाञ्च प्रयोगेषु ऋणादित्वेन दानादिव्यवहारेषु इत्यर्थः तथा विद्यागमेषु विद्योपार्जनेषु आहारे भोजने च व्यवहारे व्यवसाये वाणिज्ये चेत्यर्थः सदा सर्व्वस्मिन् काले त्यक्ता लज्जा येन तथाभूतः स्यात् लज्जायां तत्तत्कार्य्यहानिः स्यादिति बोध्यम् ॥ ३५ ॥

धनिन इति । धनिनः धनवन्तः श्रोत्रियः वेदवित् ब्राह्मण इत्यर्थः श्रोत्रियच्छान्दसौ समावित्यमरः । राजा, नदी, पञ्चानां

यस्मिन् देशे न सम्मानं न प्रीतिर्न च बान्धवाः ।
न च विद्यागमः कश्चित् तं देशं परिवर्जयेत् ॥ ३७ ॥
मनसा चिन्तितं कर्म्म वचसा न प्रकाशयेत् ।
अन्यलक्षितकार्य्यस्य यतः सिद्धिर्न जायते ॥ ३८ ॥
कुदेशञ्च कुवृत्तिञ्च कुभार्य्यां कुनदीं तथा ।
कुद्रव्यञ्च कुभोज्यञ्च वर्जयेत् तु विचक्षणः ॥ ३९ ॥

पूरणः पञ्चमः वैद्यः चिकित्सकः भिषक्वैद्यौ चिकित्सके इत्यमरः । एते पञ्च यत्र स्थाने इति शेषः न विद्यन्ते, तत्र स्थाने वासं न कारयेत् न च कुर्य्यात् इति द्वयमेवार्थौ बोद्धव्यः कुर्य्यादित्यर्थे स्वार्थे णिजन्तप्रयोगः । गृहिणां सततमर्थस्य आवश्यकतया तस्य च धनि-सन्निधौ सुलभतया धनिनां सन्निधाने स्थितिरावश्यकी । ज्ञानालु-शीलनस्य सर्व्वेषामेवोपयोगित्वात् श्रोत्रियसन्निधिरावश्यकी । विवाद-निराकरणाद्यर्थं राजसन्निधिरावश्यकी । नदीसत्ता च अनावृष्टावपि शस्याद्युत्पादनेन दुर्भिक्षनिवृत्तिः वाणिज्यादीनां सौकर्य्यञ्च स्यात् । रोगप्रतीकारार्थं चिकित्सकसत्ता आवश्यकीति बोध्यम् ॥ ३६ ॥

यस्मिन्निति । यस्मिन् देशे सम्मानं न प्रीतिः सन्तोषः न, बान्ध-वाश्च न, कश्चित् विद्यागमश्च विद्योपार्जनोपायश्चेत्यर्थः न अस्तीति शेषः तं देशं परिवर्जयेत् परित्यजेत् ॥ ३७ ॥

मनसेति । मनसा चिन्तितं निर्णीतं कर्म वचसा वाक्येन न प्रकाशयेत् । यतः अन्यैः लक्षितं यत् कार्य्यं तस्य सिद्धिः न जायते न भवतीत्यर्थः ॥ ३८ ॥

कुदेशञ्चेति । विचक्षणः प्राज्ञो जनः कुदेशं कुवृत्तिं कुत्सितां जीविकामित्यर्थः, कुभार्य्यां दुष्टां भार्य्यामित्यर्थः, कुनदीं कुम्भीरादिभय-शालिनीं नदीमित्यर्थः कुद्रव्यं कुभोज्यं कुत्सितं भक्ष्यञ्च विवर्जयेत् त्यजेत् । तुशब्दोऽत्र निश्चयार्थः ॥ ३९ ॥

ऋणशेषोऽग्निशेषश्च व्याधिशेषस्तथैव च ।
पुनश्च वर्द्धते यस्मात्तस्मात् शेषं हि कारयेत् ॥ ४० ॥
चिन्ताज्वरो मनुष्याणां वस्त्राणामातपो ज्वरः ।
असौभाग्यं ज्वरः स्त्रीणामश्वानां मैथुनं ज्वरः ॥ ४१ ॥
अस्ति पुत्रो वशे यस्य भृत्यो भार्य्या तथैव च ।
अभावे सति सन्तोषः स्वर्गस्थोऽसौ महीतले ॥ ४२ ॥
दुष्टा भार्य्या शठं मित्रं भृत्यश्चोत्तरदायकः ।
ससर्पे च गृहे वासो मृत्युरेव न संशयः ॥ ४३ ॥
माता यस्य गृहे नास्ति भार्य्या चाप्रियवादिनी ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम् ॥ ४४ ॥

ऋणशेष इति । यस्मात् ऋणस्य शेषः, अग्नेः शेषः तथा व्याधेः रोगस्य शेषः पुनश्च वर्द्धते वृद्धिं गच्छति तस्मात् शेषं तेषामिति शेषः न कारयेत् न रक्षेत् सर्वमेव सम्यक् प्रतिकुर्य्यादित्यर्थः ॥ ४० ॥

चिन्तेति । चिन्ता मनुष्याणां ज्वरः, आतपः वस्त्राणां ज्वरः, असौभाग्यं पत्युरप्रियत्वं स्त्रीणां ज्वरः, मैथुनम् अश्वानां ज्वरः । चिन्तादिभिरेते जीर्णा भवन्तीति तात्पर्य्यार्थः ॥ ४१ ॥

अस्तीति । पुत्रः भृत्यः भार्य्या च यस्य वशे अस्ति, तस्य अभावेऽपि सति सन्तोषः भवतीति शेषः, असौ महीतले स्थितोऽपीति शेषः स्वर्गस्थः स्वर्गवासीत्यर्थः ॥ ४२ ॥

दुष्टेति । दुष्टा व्यभिचारादिदोषवती भार्य्या, शठं खलस्वभावं मित्रम्, उत्तरदायकः भृत्यश्च ससर्पे सर्पयुक्ते गृहे वासश्च मृत्युरेव न संशयः, सन्देहो नास्तीत्यर्थः ॥ ४३ ॥

मातेति । यस्य गृहे माता जननी नास्ति मृतेति भावः, भार्य्या तु अप्रियवादिनी अस्तीति शेषः, तेन अरण्यं वनं गन्तव्यं यतः तस्य

ऋणकर्त्ता पिता शत्रुः माता च व्यभिचारिणी ।
भार्य्या रूपवती शत्रुः पुत्रः शत्रुरपण्डितः ॥ ४५ ॥
कोकिलानां स्वरो रूपं नारीरूपं पतिव्रता ।
विद्या रूपं कुरूपाणां क्षमा रूपं तपस्विनाम् ॥ ४६ ॥
अविद्याजीवनं शून्यं दिक् शून्या चेदबान्धवा ।
पुत्रहीनं गृहं शून्यं सर्वशून्या दरिद्रता ॥ ४७ ॥
अदाता वंशदोषेण कर्मदोषाद्दरिद्रता ।
उन्मादो मातृदोषेण पितृदोषेण मूर्खता ॥ ४८ ॥

गृहम् अरण्यं यथा तथेति शेषः । गृहवासापेक्षया तस्य अरण्यवास एव वरं श्रेयानिति भावः ॥ ४४ ॥

ऋणेति । ऋणकर्त्ता पिता शत्रुः व्यभिचारिणी माता च शत्रुः, रूपवती सुन्दरी भार्य्या च शत्रुः, तस्यां परेषां दृष्टिपातसम्भवेन व्यभिचारस्य प्रायशो दर्शनादिति भावः । तथा अपण्डितः मूर्खः पुत्रः शत्रुः । तस्य सर्वदैव अपकारकरणसम्भवादिति भावः ॥ ४५ ॥

कोकिलानामिति । स्वरः मधुर इति शेषः कोकिलानां रूपं, पतिव्रतायाः भावः पतिव्रता भावे ष्यञ्प्रत्ययः स्त्रीलिङ्गता च । पातिव्रत्यमित्यर्थः नारीणां रूपं, विद्या कुरूपाणां रूपं, क्षमा तपस्विनां रूपम् ॥ ४६ ॥

अविद्यमिति । नास्ति विद्या यस्मिन् तत् अविद्यं विद्याहीनं जीवनं शून्यं निष्फलमिति यावत्, दिक् अबान्धवा बन्धुजनरहिता चेत् शून्या अगम्या अनाश्रयणीया चेत्यर्थः, पुत्रहीनं गृहं शून्यम् आकाशमिव न किञ्चिदित्यर्थः । दरिद्रता दारिद्र्यं निर्धनतेत्यर्थः सर्वं शून्यं यस्यां तादृशी निर्धनानां सर्वं शून्यमित्यर्थः ॥ ४७ ॥

अदातेति । वंशदोषेण अदाता कृपणः, कर्मदोषात् यथाकाले विद्यादिशिक्षाविरहादिति भावः दरिद्रता निर्धनता, मातृदोषेण

गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ।
पतिरेको गुरुः स्त्रीणां सर्वत्राभ्यागतो गुरुः ॥ ४९ ॥

अतिदर्पे हता लङ्का अतिमाने च कौरवाः ।
अतिदाने बलिर्बद्धः सर्वमत्यन्तगर्हितम् ॥ ५० ॥

वस्त्रहीनस्त्वलङ्कारो घृतहीनञ्च भोजनम् ।
स्तनहीना च या नारी विद्याहीनञ्च जीवनम् ॥ ५१ ॥

भोज्यं भोजनशक्तिश्च रतिशक्तिर्वरा स्त्रियः ।
विभवो दानशक्तिश्च नाल्पस्य तपसः फलम् ॥ ५२ ॥

मातुः गर्भावस्थायां वायुरोगादिभिर्व्विषेण इति भावः उन्मादः चिन्नता, तथा पितुर्दोषेण शिक्षाप्रदानानवधानेनेति भावः मूर्खता भवतीति शेषः ॥ ४८ ॥

गुरुरिति । अग्निः द्विजातीनां ब्राह्मणक्षत्रियवैश्यानां गुरुः आचार्य्यः तद्वत् सेव्यः तेषामग्निहोत्रविधानादिति भावः । ब्राह्मणः वर्णानां ब्राह्मणक्षत्रियवैश्यशूद्राणां चतुर्णामेव अथवा क्षत्रियवैश्यशूद्राणां त्रयाणां गुरुः शिक्षकः कर्त्तव्यविषयाणां प्रदर्शक इति भावः । एकः केवलः न त्वन्य इत्यर्थः पतिः स्त्रीणां गुरुः । अभ्यागतः अतिथिः सर्व्वस्य जनस्य गुरुः सेवनीय इति भावः ॥ ४९ ॥

अतीति । लङ्का अतिदर्पे अत्यहङ्कारे हता नाशिता, कौरवाः कुरुवंशीयाः दुर्य्योधनादय इत्यर्थः हताः नाशिताः । बलिः विरोचनसुतः अतिदाने बद्धः बन्धनं नीतः वामनरूपिणा हरिणेति शेषः । अतः अत्यन्तं सर्वं गर्हितं निन्दितम् । अतिवृद्धिर्ध्वंसहेतुरिति भावः ॥५०॥

वस्त्रहीनमिति । अलङ्कारः भूषणं वस्त्रहीनः वसनरहितः, भोजनं घृतहीनं हविःशून्यं, या च नारी स्तनाभ्यां हीना पतितस्तनीत्यर्थः, जीवनं विद्याहीनञ्च न शोभते इति शेषः ॥ ५१ ॥

भोज्यमिति । भोज्यं भक्षणीयद्रव्यं भोजनशक्तिः आहारक्षमता

पुत्रप्रयोजना दाराः पुत्रः पिण्डप्रयोजनः।
हितप्रयोजनं मित्रं धनं सर्वप्रयोजनम्॥ ५३॥
दुर्लभं प्राकृतं वाक्यं दुर्लभः क्षेमकृत् सुतः।
दुर्लभा सदृशी भार्य्या दुर्लभः स्वजनः प्रियः॥ ५४॥
शैले शैले न माणिक्यं मौक्तिकं न गजे गजे।
साधवो न हि सर्वत्र चन्दनं न वने वने॥ ५५॥

रतिशक्तिः मैथुनशक्तिः, वराः उत्तमाः स्त्रियः, विभवः सम्पद्, दानशक्तिः यथोचितव्ययशीलता इत्यर्थः, एतत् सर्वम् अल्पस्य तपसः फलं न, अल्पेन तपसा एतत् सर्वं न लभ्यते इति भावः॥ ५२॥

पुत्रेति। दाराः स्त्रियः पुत्रः प्रयोजनं यासां तथाविधाः पुत्रार्थं क्रियते भार्य्येति स्मरणादिति भावः। पुत्रः पिण्डप्रयोजनः पिण्डप्राप्तये पुत्रोत्पादनमिति भावः। मित्रं सुहृत् हितप्रयोजनं हितानुष्ठानायैव मित्रं सेव्यते इति भावः। धनं सर्वप्रयोजनं सर्वकार्य्यनिष्पादनाय धनमुपार्ज्यते इति भावः॥ ५३॥

दुर्लभमिति। प्राकृतम् अवितथं सत्यमित्यर्थः वाक्यं दुर्लभं वाक्यमित्यत्र मित्रमिति पाठान्तरं तथात्वे प्राकृतं प्रकृतिसिद्धमकृत्रिममित्यर्थः। क्षेमकृत् शुभङ्करः सुतः पुत्रः दु[illegible] तादृशपुत्रस्य दुष्करतपोलभ्यत्वात्। उक्तञ्च, "पुण्यतीर्थे कृतं येन [illegible] क्वाप्यतिदुष्करम्। तस्य पुत्रो भवेद् वश्यः समृद्धो धार्म्मिकः सु[illegible]॥" इति। सदृशी आत्मानुरूपा समदुःखसुखेति भावः भार्य्या दुर्लभा दुष्प्रापा। प्रियः प्रीतिकरः स्वजनः आत्मीयवर्गः दुर्लभः॥ ५४॥

शैले इति। शैले शैले पर्व्वते पर्व्वते प्रतिशैलमित्यर्थः माणिक्यं रत्नविशेषः न अस्तीति शेषः। गजे गजे प्रतिगजे मौक्तिकं न अस्तीति शेषः। वने वने प्रतिवनं चन्दनं न अस्तीति शेषः। साधवः सज्जनाः सर्वत्र स्थाने न सन्तीति शेषः। उत्कृष्टवस्तूनां कादाचित्कत्वादिति भावः॥ ५५॥

अशोच्यो निर्धनः प्राज्ञोऽशोच्यः पण्डितबान्धवः ।
अशोच्या विधवा नारी पुत्रपौत्रप्रतिष्ठिता ॥ ५६ ॥
अविद्यः पुरुषः शोच्यः शोच्यं मैथुनमप्रजम् ।
निराहाराः प्रजाः शोच्याः शोच्यं राज्यमराजकम् ॥ ५७ ॥
कुलीनैः सह सम्पर्कं पण्डितैः सह मित्रताम् ।
ज्ञातिभिश्च समं मेलं कुर्वाणो न विनश्यति ॥ ५८ ॥
कष्टा वृत्तिः पराधीना कष्टो वासो निराश्रयः ।
निर्धनो व्यवसायश्च सर्वकष्टा दरिद्रता ॥ ५९ ॥

अशोच्य इति । प्राज्ञः पण्डितो जनः निर्धनः दरिद्रः, अपि-रत्नाध्याहार्यः । अशोच्यः न शोचनीयः । पण्डितः प्राज्ञः बान्धवो मित्रं यस्य तादृशः पुरुषः अशोच्यः । नारी विधवा मृतभर्त्तृकापि पुत्रपौत्रैः प्रतिष्ठिता प्रतिष्ठां गता सत्पुत्रपौत्रवतीत्यर्थः अशोच्या न शोचनीया तदर्थं शोको न कर्त्तव्य इति भावः ॥ ५६ ॥

अविद्य इति । अविद्यः विद्याहीनः पुरुषः शोच्यः । अप्रजं नास्ति प्रजा सन्तानो यस्मिन् तथाभूतं, प्रजा स्यात् सन्ततौ जने इत्य-मरः । मैथुनं सुरतं शोच्यं निष्फलमित्यर्थः । निराहाराः आहार-वर्जिताः अप्राप्ताहारा इत्यर्थः प्रजाः जनाः शोच्याः । अराजकं राजशासनहीनं राज्यं शोच्यं दुःखजनकत्वादिति भावः ॥ ५७ ॥

कुलीनैरिति । कुलीनैः सत्कुलप्रसूतैः जनैः सह सम्पर्कं सम्बन्धं पण्डितैः सह मित्रतां सौहृद्यं तथा ज्ञातिभिः समं सह मेलं मेलनं कुर्वाणो जनः न विनश्यति ॥ ५८ ॥

कष्टेति । पराधीना परवशा वृत्तिः जीविका कष्टा क्लेशदायिनी, निराश्रयः आश्रयशून्यः वासः स्थितिरित्यर्थः कष्टः क्लेशदः । निर्धनः धनशून्यः व्यवसायः वाणिज्यं कष्ट इति शेषः । दरिद्रता सर्वकष्टा सर्वविषयेषु कष्टदायिनीत्यर्थः ॥ ५९ ॥

तस्करस्य कुतो धर्मो दुर्जनस्य कुतः क्षमा ।
वेश्यानाञ्च कुतः स्नेहः कुतः सत्यञ्च कामिनाम् ॥६०॥
प्रेषितस्य कुतो मानं कोपनस्य कुतः सुखम् ।
स्त्रीणां कुतः सतीत्वञ्च कुतो मैत्री खलस्य च ॥ ६१ ॥
दुर्बलस्य बलं राजा बालानां रोदनं बलम् ।
बलं मूर्खस्य मौनित्वं चौराणामनृतं बलम् ॥ ६२ ॥
यो ध्रुवाणि परित्यज्य अध्रुवं परिषेवते ।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥ ६३ ॥

तस्करस्येति । तस्करस्य चौरस्य धर्मः कुतः ? न कुतोऽपि धर्मः अस्तीति शेषः । दुर्जनस्य क्षमा कुतः ? न कुतोऽपीत्यर्थः । वेश्यानां वाराङ्गनानां स्नेहः अनुरागः कुतः ? नैव कस्मिन्नपि अनुरागः अस्तीति शेषः । कामिनां कामपरतन्त्राणां सत्यं सत्यवादिता कुतः न कुतोऽपीत्यर्थः ॥ ६० ॥

प्रेषितस्येति । प्रेषितस्य कार्य्येषु नियुक्तस्य मानः कुतः ? भृत्यत्वादिति भावः । कोपनस्य क्रुद्धस्वभावस्य सुखं कुतः ? न कदापि सुखमस्तीत्यर्थः । स्त्रीणां सतीत्वं कुतः ? प्रायशः सतीत्वभङ्गदर्शनादिति भावः । खलस्य दुर्जनस्य मैत्री सौहृद्यं कुतः ? नैवास्तीत्यर्थः ॥ ६१ ॥

दुर्बलस्येति । राजा दुर्बलस्य बलहीनस्य बलं, रोदनं बालानां शिशूनां बलं, मौनित्वं तूष्णीम्भावः मूर्खाणां बलम्, अनृतम् असत्यं न मया चौर्य्यं कृतमित्येवंरूपमित्यर्थः चौराणां बलम् ॥ ६२ ॥

य इति । यः जनः ध्रुवाणि निश्चितानि परित्यज्य अध्रुवम् अनिश्चितं परिषेवते आश्रयति, तस्य ध्रुवाणि निश्चितानि वस्तूनीत्यर्थः नश्यन्ति, अध्रुवम् अनिश्चितं भविष्यतीति भावः नष्टमेव तस्यानिश्चितभावित्वात्तत्प्राप्तिरपि नश्येदिति भावः ॥ ६३ ॥

शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि ।
प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट् ॥ ६४ ॥
सद्योमांसं नवान्नञ्च बाला स्त्री क्षीरभोजनम् ।
घृतमुष्णोदकञ्चैव सद्यः प्राणकराणि षट् ॥ ६५ ॥
सिंहादेकं वकादेकं षट् शुनस्त्रीणि गर्दभात् ।
वायसाच्च चतुः शिक्षेत् चत्वारि कुक्कुटादपि ॥ ६६ ॥
प्रभूतमल्पकार्य्यं वा यो नरः कर्त्तुमिच्छति ।
सर्वारम्भेण तत् कुर्य्यात् सिंहादेकं प्रकीर्त्तितम् ॥ ६७ ॥

शुष्कमिति । शुष्कं मांसं शुष्कमांसभोजनमित्यर्थः, वृद्धाः स्त्रियः प्राचीनस्त्रीसम्भोग इत्यर्थः, बालार्कः बाला कन्या तत्स्थोऽर्कः सूर्य्यः कन्याराशिस्थसूर्य्यकिरणसेवनमित्यर्थः तस्य अतितीक्ष्णत्वादिति भावः, तरुणं नवं दधि, प्रभाते प्रातःकाले मैथुनं सुरतं निद्रा च एतानि षट् सद्यः तत्क्षणात् प्राणहराणि जीवननाशकानि ॥ ६४ ॥

सद्य इति । सद्योमांसं तद्भोजनमित्यर्थः, नवं नूतनम् अशुष्कमपर्य्युषितञ्च अन्नं बाला युवती स्त्री, क्षीरभोजनं दुग्धपानं घृतहविःपानं तथा उष्णोदकम् उष्णजलम् एतानि षट् सद्यः तत्क्षणात् प्राणकराणि प्राणपोषकाणीत्यर्थः ॥ ६५ ॥

सिंहादिति । सिंहात् एकं, वकात् एकं, शुनः कुक्कुरात् षट्, गर्दभात् त्रीणि, वायसात् काकात् चतुरः, तथा कुक्कुटात् चत्वारि अपि शिक्षेत् ॥ ६६ ॥

प्रभूतमिति । यो नरः प्रभूतं महत् कार्य्यमिति शेषः अल्पकार्य्यं वा कर्त्तुम् इच्छति, स तत् कार्य्यं सर्वारम्भेण सम्यक्प्रयत्नेनेत्यर्थः कुर्य्यात् । एतदेव सिंहादेकं सिंहसकाशादेकं शिक्षणीयमित्यर्थः प्रकीर्त्तितं कथितम् । सिंहः यथा किञ्चिदपि कार्य्यं सम्यक् सम्पादयति तथा सर्वैरेव कार्य्यमारब्धं सम्यक् साधनीयमिति भावः ॥ ६७ ॥

सर्वेन्द्रियाणि संयम्य बकवत् पतितो जनः ।
कालदेशोपपन्नानि सर्वकार्य्याणि साधयेत् ॥ ६८ ॥
बह्वाशी स्वल्पसन्तुष्टः सुनिद्रः शीघ्रचेतनः ।
प्रभुभक्तश्च शूरश्च ज्ञातव्याः षट् शुनो गुणाः ॥ ६९ ॥
अविश्रामं वहेद्भारं शीतोष्णञ्च न विन्दति ।
ससन्तोषस्तथा नित्यं त्रीणि शिक्षेत गर्दभात् ॥ ७० ॥
गूढमैथुनधर्मञ्च काले काले च संग्रहम् ।
अप्रमादमनालस्यं चतुः शिक्षेत वायसात् ॥ ७१ ॥

सर्वेन्द्रियाणीति । जनः सर्वेन्द्रियाणि संयम्य वशीकृत्य बकवत् पतितः कार्य्यवस्तुष्विति शेषः । कालदेशोपपन्नानि देशकालसुलभानी-त्यर्थः सर्वाणि कार्य्याणि साधयेत् । एतदेव बकादेकमिति कीर्त्तित-मिति शेषः । बको यथा यथासमये यथास्थाने पतितः मत्स्यादीन् अनायासेन गृह्णाति तथा मानवः कालं देशञ्च विचार्य्य कार्य्यं कुर्वन् चरितार्थतामापद्यते इति तात्पर्य्यार्थः ॥ ६८ ॥

बह्वाशीति । बह्वाशी प्रभूतभक्षणकारी प्रभोरिति शेषः, स्वल्पेन खाद्यादिनेति भावः सन्तुष्टः; सुनिद्रः सुखेन निद्राशीलः किन्तु शीघ्र-चेतनः सहसा भग्ननिद्र इत्यर्थः, प्रभुभक्तः स्वामिषु अनुरक्तः, शूरः बलवांश्चेति शेषः, शुनः कुक्कुरस्य एते षट् गुणाः बह्वाशित्वादयः ज्ञातव्याः । कुक्कुरदृष्टान्तेन एतान् गुणान् शिक्षेतेति तात्पर्य्यार्थः ॥ ६९ ॥

अविश्राममिति । अविश्रामं भारं वहेत्, शीतोष्णं शीतञ्चोष्णञ्च न विन्दति, तथा नित्यं सततं ससन्तोषः सन्तुष्टः वर्त्तते इति गर्दभ इति च शेषः । एतानि त्रीणि गर्दभात् शिक्षेत । गर्दभदृष्टान्तेन अविश्रामकार्य्यकरणशीतग्रीष्मज्ञानसततसन्तोषशालिना भवितव्यमिति तात्पर्य्यार्थः ॥ ७० ॥

गूढेति । गूढः यः मैथुनधर्मः सुरतव्यापारः तं, काले काले

युद्धञ्च प्रातरुत्थानं भोजनं सह बन्धुभिः।
स्त्रियमापद्गतां रक्षेच्चतुः शिक्षेत कुक्कुटात्॥ ७२॥

कोऽतिभारः समर्थानां? किं दूरं व्यवसायिनाम्?।
को विदेशः सविद्यानां? कः परः प्रियवादिनाम्? ७३

आपदां कथितः पन्था इन्द्रियाणामसंयमः।
तज्जयः सम्पदां मार्गो येनेष्टं तेन गम्यताम्॥ ७४॥

न च विद्यासमो बन्धुर्न च व्याधिसमो रिपुः।
न चापत्यसमो स्नेहो न च दैवात् परं बलम्॥ ७५॥

समये समये संग्रहं सञ्चयम्, अप्रमादम् अवधानम्, अनालस्यं च एतत् चतुः चतुष्टयमित्यर्थः वायसात् काकात् शिक्षेत। वायसवत् मैथुनं गूढमेव कर्त्तव्यं, समये समये अर्थसञ्चयः सावधानता अनालस्यञ्च कर्त्तव्य इति तात्पर्य्यार्थः॥ ७१॥

युद्धमिति। युद्धं प्रातःकाले उत्थानं, बन्धुभिः सह भोजनं कुर्य्यादिति शेषः तथा आपद्गतां विपदुपन्नां स्त्रियं रक्षेत्। एतत् चतुः चतुष्टयमित्यर्थः कुक्कुटात् शिक्षेत। कुक्कुटो यथा युद्ध-प्रातरुत्थानबन्धुसहभोजनापन्नस्त्रीरक्षणं करोति तथा सर्वैरेव मानवैः तत्तत्कार्य्यं कर्त्तव्यमिति तात्पर्य्यार्थः॥ ७२॥

क इति। समर्थानां शक्तानाम् अतिभारः कः? नास्तीत्यर्थः। व्यवसायिनां वणिजां दूरं किम्? नैव किमपि स्थानं दूरं तैः कथ्यते इति भावः। सविद्यानां विदुषां विदेशः कः? सर्वत्रैव तस्य पूज्य-त्वादिति भावः। प्रियवादिनां परः शत्रुः कः? न कोऽपीत्यर्थः॥ ७३॥

आपदामिति। इन्द्रियाणाम् असंयमः अदमनम् आपदां पन्था मार्गः कथितः, तज्जयः इन्द्रियजयः सम्पदां मार्गः उक्त इति शेषः, येन इष्टम् अभिलषितं तत्र गमने इति शेषः तेन तत्र गम्यताम्॥ ७४॥

न चेति। विद्यया समः बन्धुः न, व्याधेः समः रिपुः शत्रुः न,

समुद्रावरणा भूमिः प्राकारावरणं गृहम् ।
नरेन्द्रावरणा देशाश्चरित्रावरणाः स्त्रियः ॥ ७६ ॥

घृतकुम्भसमा नारी तप्ताङ्गारसमः पुमान् ।
तस्माद् घृतञ्च वह्निञ्च नैकत्र स्थापयेद् बुधः ॥ ७७ ॥

आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा ।
षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥ ७८ ॥

जीर्णमन्नं प्रशंसीयात् भार्य्याञ्च गतयौवनाम् ।
रणात् प्रत्यागतं शूरं शस्यञ्च गृहमागतम् ॥ ७९ ॥

अपत्येन समः अपत्येषु यथा तथेत्यर्थः स्नेहः न, देवात् परं श्रेष्ठं बलञ्च न अस्तीति शेषः सर्वत्र ॥ ७५ ॥

समुद्रेति । भूमिः समुद्रः आवरणं यस्यास्तथाभूता समुद्रवेष्टितेत्यर्थः । गृहं प्राकारः प्राचीरः आवरणं यस्य तथोक्तम् । देशाः नरेन्द्रः राजा आवरणं येषां तथाविधाः राजरक्षिता इत्यर्थः । स्त्रियः चरित्रमेव आवरणं यासां तादृश्यः चरित्ररक्षिता इत्यर्थः ॥ ७६ ॥

घृतेति । नारी घृतकुम्भस्य समा अतिकोमलस्वभावेत्यर्थः, या अल्पेनैव द्रवतीति भावः । पुमान् तप्ताङ्गारस्य ज्वलदङ्गारस्य समः; यः अल्पेनैव द्रावयतीति भावः । तस्मात् बुधः पण्डितः जनः एकत्र एकस्मिन् स्थाने घृतञ्च वह्निञ्च न स्थापयेत् न रक्षेत् ॥ ७७ ॥

आहार इति । स्त्रीणाम् आहारः द्विगुणः, तासां स्त्रीणां बुद्धिः चतुर्गुणा, व्यवसायः उद्योगः षड्गुणः, तथा कामः अष्टगुणः स्मृतः कथितः पुरुषापेक्षयेति सर्वत्र योज्यम् ॥ ७८ ॥

जीर्णमिति । जीर्णं पुरातनम् अन्नं तण्डुलादिकं, गतम् अतीतं निर्दोषेणेति भावः यौवनं यस्याः तादृशीं भार्य्यां, रणात् संग्रामात् प्रत्यागतं प्रतिनिवृत्तं रणजयेनेति भावः, तथा शस्यम् आगतं गृहस्थ

असन्तुष्टा द्विजा नष्टाः सन्तुष्टा इव पार्थिवाः ।
सलज्जा गणिका नष्टा निर्लज्जाश्च कुलस्त्रियः ॥ ८० ॥

अवंशपतितो राजा मूर्खपुत्रश्च पण्डितः ।
अधनेन धनं प्राप्य तृणवन्मन्यते जगत् ॥ ८१ ॥

ब्रह्महापि नरः पूज्यो यस्यास्ति विपुलं धनम् ।
शशिनस्तुल्यवंशोऽपि निर्धनः परिभूयते ॥ ८२ ॥

पुस्तकस्था तु या विद्या परहस्तगतं धनम् ।
कार्य्यकाले समुत्पन्ने न सा विद्या न तद्धनम् ॥ ८३ ॥

न तु चिरं स्थितं तस्य बहुविघ्नसम्भवादिति भावः, प्रशंसीयात् साधुत्वेन कीर्त्तयेदित्यर्थः ॥ ७९ ॥

असन्तुष्टा इति । असन्तुष्टाः द्विजाः ब्राह्मणाः सन्तुष्टाः पार्थिवाः राजान इव नष्टाः नाभ्युदयं लभन्ते इति भावः । गणिकाः वेश्याः सलज्जाश्चेत् नष्टाः विफलाः भवन्तीति शेषः । कुलस्त्रियः कुलवध्वः निर्लज्जाश्चेत् नष्टाः शङ्कितव्यभिचारतया लोकैर्नाद्रियन्ते इति भावः ॥ ८० ॥

अवंशेति । अवंशे दुष्कुले पतितो जात इत्यर्थः राजा मूर्खस्य पुत्रः पण्डितः, अधनस्य दरिद्रस्य धनं प्राप्य जगत् तृणवत् मन्यते ॥ ८१ ॥

ब्रह्महापीति । यस्य विपुलं प्रभूतं धनम् अस्ति, स नरः ब्रह्महापि ब्राह्मणघाती अपि पूज्यः, सर्वैराद्रियते इति भावः । शशिनः चन्द्रस्य तुल्यवंशोऽपि समुज्ज्वलकुलोत्पन्नोऽपीत्यर्थः नरः निर्धनश्चेत् परिभूयते तिरस्क्रियते, न केनापि आद्रियते इति भावः ॥ ८२ ॥

पुस्तकस्थेति । या विद्या पुस्तकस्था न त्वभ्यस्तेति भावः यत् धनं परहस्तगतं न तु स्वसन्निधौ स्थितमिति भावः कार्य्यकाले समुत्पन्ने आगते सा विद्या न, तत् धनञ्च न, निष्फलत्वादिति भावः ॥ ८३ ॥

पादपानां भयं वातात् पद्मानां शिशिराद् भयम् ।
पर्वतानां भयं वज्रात् साधूनां दुर्जनाद् भयम् ॥८४॥
प्राज्ञे नियोज्यमाने तु सन्ति राज्ञस्त्रयो गुणाः ।
यशः स्वर्गनिवासश्च विपुलश्च धनागमः ॥ ८५ ॥
मूर्खे नियोज्यमाने तु त्रयो दोषा महीपतेः ।
अयशश्चार्थनाशश्च नरके गमनं तथा ॥ ८६ ॥
बहुभिर्मूर्खसङ्घातैरन्योन्यपशुवृत्तिभिः ।
प्रच्छाद्यन्ते गुणाः सर्वे मेघैरिव दिवाकरः ॥ ८७ ॥
यस्य चेत्रं नदीतीरे भार्य्या वापि परप्रिया ।
पुत्रस्य विनयो नास्ति मृत्युरेव न संशयः ॥ ८८ ॥

पादपानामिति । पादपानां वृक्षाणां वातात् भयं पद्मानां शिशिरात् भयं, पर्वतानां वज्रात् भयं, साधूनां दुर्जनात् भयं वर्त्तत इति सर्वत्र योज्यम् ॥ ८४ ॥

प्राज्ञे इति । प्राज्ञे विदुषि नियुज्यमाने राजकर्मणीति शेषः सति राज्ञः यशः कीर्त्तिः स्वर्गनिवासः विपुलः महान् धनागमश्च एते त्रयो गुणाः सन्ति ॥ ८५ ॥

मूर्खे इति । मूर्खे नियुज्यमाने राजकर्मणीति शेषः सति महीपतेः राज्ञः अयशः अकीर्त्तिः अर्थनाशः तथा नरके गमनम् एते त्रयो दोषाः भवन्तीति शेषः ॥ ८६ ॥

बहुभिरिति । अन्योन्यं परस्परं पशूनामिव वृत्तिर्व्यवहारो येषां तथाभूतैः बहुभिः मूर्खसङ्घातैः मूर्खसमूहैः मेघैः दिवाकरः सूर्य्य इव सर्वे गुणाः गुणिनामिति शेषः प्रच्छाद्यन्ते तिरोधीयन्ते ॥८७॥

यस्येति । यस्य नदीतीरे चेत्रं भूमिः, भार्य्या च परप्रिया परानुरक्ता इत्यर्थः । पुत्रस्य च विनयो नास्ति, तस्य मृत्युरेव न संशयः सन्देहो नास्तीत्यर्थः ॥ ८८ ॥

असम्भाव्यं न वक्तव्यं प्रत्यक्षमपि दृश्यते ।
शिला तरति पानीयं गीतं गायति वानरः ॥ ८६ ॥

सुभिक्षं कृषके नित्यं नित्यं सुखमरोगिणि ।
भार्य्या भर्तुः प्रिया यस्य तस्य नित्योत्सवं गृहम् ॥९०॥

हेला स्यात् कार्य्यनाशाय बुद्धिनाशाय निर्धनम् ।
याचना माननाशाय कुलनाशाय भोजनम् ॥ ९१ ॥

सेवितव्यो महावृक्षः फलच्छायासमन्वितः ।
यदि दैवात् फलं नास्ति छाया केन निवार्य्यते ? ॥९२॥

प्रथमे नार्जिता विद्या द्वितीये नार्जितं धनम् ।
तृतीये नार्जितं पुण्यं चतुर्थे किं करिष्यति ? ॥ ९३ ॥

असम्भाव्यमिति । प्रत्यक्षमपि दृश्यते यत् तत् असम्भाव्यम् अभावनीयञ्चेत् न वक्तव्यम् उपहासजनकत्वादिति भावः । यथा शिला पानीयं तरति, वानरः गीतं गायति ॥ ८६ ॥

दुर्भिक्षमिति । नित्यं सततं कृषके कृषिकर्मशीले इत्यर्थः सुभिक्षं सुलभभक्ष्यमित्यर्थः सर्वदा कर्षणकारित्वाऽन्नाभावो न विद्यते इत्यर्थः । नित्यं सततम् अरोगिणि स्वस्थप्रकृतौ जने इत्यर्थः सुखं भवतीति शेषः । यस्य भर्त्तुः भार्य्या प्रिया प्रीतिकरी, तस्य गृहं नित्यः सततः उत्सवः आनन्दो यत्र तथाभूतं भवतीति शेषः ॥ ९० ॥

हेलेति । हेला आलस्यमित्यर्थः कार्य्यनाशाय, निर्धनं धनाभावः बुद्धिनाशाय, याचना भिक्षा माननाशाय, भोजनम् अस्थाने इति भावः कुलनाशाय भवतीति सर्वत्र योज्यम् ॥ ९१ ॥

सेवितव्य इति । फलच्छायासमन्वितः फलवान् छायावांश्च महावृक्षः सेवितव्यः आश्रयणीयः । यदि दैवात् फलं न अस्ति न भवति, छाया केन निवार्य्यते ॥ ९२ ॥

प्रथमे इति । प्रथमे शैशवे इति भावः विद्या न अर्जिता न

नदीकूले च ये वृक्षाः परहस्तगतं धनम् ।
कार्य्यं स्त्रीगोचरं यत् स्यात् सर्वं तद्विफलं भवेत् ॥९४॥

कुदेशमासाद्य कुतोऽर्थसञ्चयः ?
कुपुत्रमासाद्य कुतो जलाञ्जलिः ? ।
कुगेहिनीं प्राप्य गृहे कुतः सुखम् ?
कुशिष्यमध्यापयतः कुतो यशः ? ॥९५॥

कूपोदकं वटच्छाया श्यामा स्त्री चेष्टकालयम् ।
शीतकाले भवेदुष्णं ग्रीष्मकाले च शीतलम् ॥९६॥

र्शार्जिता, द्वितीये यौवने इति शेषः धनं न अर्जितं, तृतीये प्रौढत्वे पुण्यं धर्मं इत्यर्थः न अर्जितं न अनुष्ठितं, यदि जनेनेति शेषः, तदा चतुर्थे वार्द्धके किं कारिष्यति जन इति शेषः ॥ ९३ ॥

नदीति । ये वृक्षाः नदीकूले वर्त्तन्ते इति शेषः, यच्च धनं परहस्तगतं न तु स्वायत्तमित्यर्थः, यच्च कार्य्यं स्त्रीगोचरं स्त्रिया विदितमित्यर्थः स्यात् तत् सर्वं विफलं भवेत् । नदीकूलस्थवृक्षा हि प्रायशः कूलभङ्गे निपतन्ति कथं तेषां फलाशेति, परहस्तधनस्य व्यवहारायोगात् वैफल्यं स्वत एव भवतीति, कार्य्यस्य स्त्रीगोचरत्वे तद्बाधया तत्कार्य्यहानिरिति च भावः ॥ ९४ ॥

कुदेशमिति । कुदेशम् आसाद्य प्राप्य गत्वेत्यर्थः अर्थसञ्चयः धनसंग्रहः कुतः ? नैव भवतीत्यर्थः । कुपुत्रम् आसाद्य परिपोष्य इत्यर्थः स्थितस्येति शेषः जलाञ्जलिः तर्पणजललाभ इत्यर्थः कुतः ? नैव भवतीत्यर्थः । कुगेहिनीं कुत्सितां रूपतः शीलतश्चेति भावः गेहिनीं भार्य्यां प्राप्य गृहे सुखं कुतः ? नैव भवतीत्यर्थः । कुशिष्यम् अध्यापयतः पाठयतः यशः कुतः ? नैव भवतीत्यर्थः ॥ ९५ ॥

कूपोदकमिति । कूपोदकं कूपजलं, वटवृक्षस्य छाया, श्यामा, शीतकाले भवेदुष्णा उष्णकाले च शीतला । नवयौवनमध्यस्था या

विषं चङ्क्रमणं रात्रौ विषं राज्ञोऽनुकूलता।
विषं स्त्रियोऽप्यन्यहृदो विषं व्याधिरवीक्षितः ॥ ९७ ॥
दुरधीता विषं विद्या अजीर्णे भोजनं विषम्।
विषं गोष्ठी दरिद्रस्य वृद्धस्य तरुणी विषम् ॥ ९८ ॥
प्रदोषे निहतः पन्थाः पतिता निहताः स्त्रियः।
अल्पबीजं हतं क्षेत्रं भृत्यदोषाद् हतः प्रभुः ॥ ९९ ॥

श्यामा परिकीर्त्त्यते इत्युक्तलक्षणा स्त्री, केचित् तु श्यामा कृष्णवर्णे-त्याहुः। इष्टकालयम् इष्टकनिर्मितगृहम्। एतत् सर्वं शीतकाले उष्णम् उष्णकाले च शीतलं भवेत् ॥ ९६ ॥

विषमिति। रात्रौ चङ्क्रमणं पुनः पुनरतिशयेन वा भ्रमणं विषं विषवदनिष्टकरमित्यर्थः तत्र नानाविपत्पातसम्भवादिति भावः। राज्ञः अनुकूलता राज्ञः अनुकूलत्वेन सर्वेषाम् अमात्यादीनां शत्रुत्व-प्राप्तिरित्यर्थः। विषं तत्र राजकोपेन प्राणहानिसम्भवादिति भावः। अन्यहृदः अन्यासक्ताः स्त्रियः विषं तत्र सततमसुखं प्राणहानिश्च सम्भवतीति भावः। अवीक्षितः अनवलोकितः अचिकित्सित इत्यर्थः व्याधिः विषं तत्र प्राणहानिरवश्यम्भाविनीति भावः ॥ ९७ ॥

दुरधीतेति। दुरधीता दुःशिक्षिता विद्या विषं विपरीतफलक-त्वादिति भावः। अजीर्णे अपरिपाके भोजनं विषं रोगजनकत्वा-दिति भावः। दरिद्रस्य गोष्ठी सभा विषं सभायां बन्धुवर्गसङ्गे सदा-लापादिसुखेन कालातिपातात् धनार्थं तस्य चेष्टा न स्यात् तेनास्य क्लेशातिशयो नितरां स्यादिति भावः। वृद्धस्य जनस्य तरुणी युवती भार्या विषं तस्या मनोरञ्जने असामर्थ्यात् तन्निबन्धना भूयसी अनर्थ-परम्परा भवेदिति भावः ॥ ९८ ॥

प्रदोषे इति। प्रदोषे रजन्यां पन्थाः निहतः नष्टः दर्शना-गोचरत्वादिति भावः। पतिताः पापरताः स्त्रियः निहताः नष्टाः अकिञ्चित्करत्वादिति भावः। अल्पं बीजं यस्मिन् तत् क्षेत्रं हतं

हतमश्रोत्रियं श्राद्धं हतो यज्ञस्त्वदक्षिणः ।
हता रूपवती वन्ध्या हतं सैन्यमनायकम् ॥ १०० ॥
वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायणः ।
आशीर्वादवचोयुक्त एष राजपुरोहितः ॥ १०१ ॥
कुलशीलगुणोपेतः सर्वधर्मपरायणः ।
प्रवीणः प्रेषणाध्यक्षो धर्माध्यक्षो विधीयते ॥ १०२ ॥
आयुर्वेदकृताभ्यासः सर्वेषां प्रियदर्शनः ।
आर्य्यशीलगुणोपेत एष वैद्यो विधीयते ॥ १०३ ॥

नष्टं निष्फलमित्यर्थः । प्रभुः स्वामी भृत्यदोषात् हतः नष्टः ॥ ९९ ॥

हतमिति । नास्ति श्रोत्रियः वेदपारगः ब्राह्मणः यस्मिन् तत् अश्रोत्रियच्छान्दसो समावित्यमरः । श्राद्धं पितृद्देशेन दत्तमन्नादिकं हतं नष्टं विफलमित्यर्थः । नास्ति दक्षिणा यत्र तादृशः यज्ञः हतः नष्टः विफल इत्यर्थः । रूपवती सुन्दरी भार्य्या वन्ध्या अप्रसूता चेत् हता नष्टा विफलेत्यर्थः । अनायकम् अस्वामिकं सैन्यं हतं नष्टम् अनायासेन शत्रुभिः पराजेयत्वादिति भावः ॥ १०० ॥

वेदेति । वेदानाम् ऋग्यजुःसामाथर्वाख्यानां चतुर्णां वेदाङ्गानां शिक्षाकल्पव्याकरणनिरुक्तच्छन्दोज्योतिषां तत्त्वं जानातीति तथोक्तः जपहोमपरायणः मन्त्रजपयागानुष्ठाननिरतः आशीर्वादवचोयुक्तः मङ्गलकर इत्यर्थः जनः एष राजपुरोहितः भवतीति शेषः ॥ १०१ ॥

कुलेति । कुलं, शीलं चरित्रं, गुणाः विद्यादयः तैः उपेतः युक्तः सर्वधर्मपरायणः नानाधर्मकार्य्यनिरतः प्रवीणः अभिज्ञः विचक्षण इत्यर्थः प्रेषणाध्यक्षः भृत्यानां कार्य्येषु आदेशकर इत्यर्थः जन इति शेषः धर्माध्यक्षः धर्मकार्य्येषु तत्त्वावधायकः विधीयते क्रियते राज्ञेति शेषः ॥ १०२ ॥

आयुर्वेदेति । आयुर्वेदे चिकित्साशास्त्रे कृतः अभ्यासः शिक्षा

सकृदुक्तगृहीतार्थो लघुहस्तो जिताक्षरः ।
सर्वशास्त्रसमालोकी प्रकृष्टो नाम लेखकः ॥ १०४ ॥
समस्तनीतिशास्त्रज्ञो वाहने पूजितश्रमः ।
शौर्य्यवीर्य्यगुणोपेतः सेनाध्यक्षो विधीयते ॥ १०५ ॥
मेधावी वाक्पटुः प्राज्ञः परचित्तोपलक्षकः ।
धीरो यथोक्तवादी च एष दूतो विधीयते ॥ १०६ ॥
पुत्रपौत्रगुणोपेतः शास्त्रज्ञो मिष्टपाचकः ।
शूरश्च कठिनश्चैव सूपकारः स उच्यते ॥ १०७ ॥

येन तथोक्तः सर्वेषां प्रियदर्शनः आर्य्यशीलं सुचरित्रं गुणाः दया-दयः तैरुपेतः युक्तः एष जनः वैद्यः विधीयते क्रियते जनेनेति शेषः । एतादृशवैद्येन चिकित्सा कार्य्या इति भावः ॥ १०३ ॥

सकृदिति । सकृत् एकवारम् उक्तेन कथनेन गृहीतः विदितः अर्थो येन तथोक्तः लघुहस्तः क्षिप्रहस्तः जितानि वशीकृतानि अक्षराणि येन त[illegible]तः द्रुताक्षरपाठक इत्यर्थः सर्वाणि शास्त्राणि समालोकते पश्यतीति तथोक्तः सर्वशास्त्रदृष्टेत्यर्थः जन इति शेषः प्रकृष्टः उत्कृष्टः लेखकः नाम भवतीति शेषः ॥ १०४ ॥

समस्तेति । समस्तनीतिशास्त्रज्ञः सर्वनयविचक्षणः वाहने अश्वादौ पूजितश्रमः प्रशंसितपरिश्रमः अश्वाद्यारोहणे लब्धप्रतिष्ठ इत्यर्थः शौर्य्यं बलं वीर्य्यं पराक्रमः गुणाः विवेकादयश्च तैरुपेतः युक्तः जन इति शेषः सेनाध्यक्षः सेनापतिः विधीयते क्रियते राज्ञेति शेषः । [illegible]शसेनाध्यक्षस्य परमोपकारित्वादिति भावः ॥ १०५ ॥

मेधावीति । यः मेधावी स्मृतिमान् वाक्पटुः सुवक्ता प्राज्ञः [illegible]ड़तः परस्य चित्तोपलक्षकः चित्तज्ञः परहृदयानुसारेण प्रस्तोते- [illegible]: धीरः धैर्य्यवान् सहिष्णुरित्यर्थः यथोक्तवादी अवितथवाक् भवति [illegible]: दूतः सन्देशहरो विधीय[illegible]यते ॥ १०६ ॥

पुत्रेति । पुत्रस्य पौ[illegible] इत्यादि[illegible]श्च तैरुपेतः एतेन लोकान्

इङ्गिताकारतत्त्वज्ञो बलवान् प्रियदर्शनः ।
अप्रमादी सदा दक्षः प्रतीहारः स उच्यते ॥ १०८ ॥
यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥ १०९ ॥
किं करिष्यन्ति वक्तारः श्रोता यत्र न विद्यते ।
नग्नक्षपणके देशे रजकः किं करिष्यति ॥ ११० ॥

इति चाणक्यशतकं समाप्तम् ।

प्रति यत्नवत्त्वमस्य सूचितम् । शास्त्रज्ञः पाकस्येति भावः । मिष्ट-पाचकः मधुरपाककर्त्ता शूरः बलवान् कठिनः शक्तदेहश्च यः भवति, स सूपकारः पाचकः उच्यते कथ्यते सुपाचकतया प्रशस्यते इत्यर्थः ॥ १०७ ॥

इङ्गितेति । यः इङ्गितम् आशयः आकारः आकृतिः तयो-स्तत्त्वं भावं जानातीति तथोक्तः बलवान् प्रियदर्शनः सदा अप्रमादी अवहितः तथा दक्षः चतुरः भवति, स प्रतीहारः दौवारिकः उच्यते प्रशस्यते ॥ १०८ ॥

यस्येति । यस्य स्वयं स्वतः इत्यर्थः प्रज्ञा बुद्धिः नास्ति, तस्य शास्त्रं किं करोति? न किमपीत्यर्थः । लोचनाभ्यां नेत्राभ्यां विहीनस्य अन्धस्येत्यर्थः दर्पणः किं करिष्यति ? न किमपीत्यर्थः ॥ १०९ ॥

किमिति । यत्र श्रोता न विद्यते तत्र वक्तारः किं करिष्यन्ति ? नैव किमपीत्यर्थः । नग्नाः विवसनाः क्षपणकाः बौद्धसन्न्यासिनः यत्र तादृशे देशे रजकः किं करिष्यति ? वस्त्राभावेन तद्धावनकार्य्य-स्याभावादिति भावः ॥ ११० ॥

इति श्रीजीवानन्दविद्यासागरभट्टाचार्य्यविरचिता
चाणक्यशतकव्याख्या समाप्ता ।